॥ श्रीः ॥

# ॥ वासवदत्ता ॥

"अभिनवभट्टबाण शब्दतर्कालङ्कारविद्याभूषण" विरुद्भाजा
वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा विरचितया
विमर्शिन्याख्यया व्याख्यया
समुद्भासिता



श्रीरङ्गनगरे
श्रीवाणीविलास मुद्रायन्त्रालये
संमुद्रिता ।

१९०६.

# भूमिका ।

---

विदितमेवेदं विश्वेषामपि विदुषाम्, यदुत संस्कृतसाहित्ये पद्यमयानां प्रबन्धानां भूयसा प्रचारेऽपि गद्यमयानां तेषामङ्गुलीपरिगणनीयतयैव संकुचितः संचार इति । संप्रति सर्वतः समुपलभ्यन्ते एतानि किल गद्यकाव्यानि, दशकुमारचरितम्, हर्षचरितम्, कादम्बरी, वासवदत्ता, तिलकमञ्जरी, गद्यचिन्तामणिः, [1]वीरनारायणचरितं चेति । भट्टारहरिचन्द्रगद्यकाव्यम्, तरङ्गवती, त्रैलोक्यसुन्दरी, इति त्रीणि गद्यकाव्यानि यद्यपि भट्टबाणधनपालाभ्यां [2]स्मर्यन्ते, तथापि न तानि सांप्रतं सन्ति सुलभानि । अगस्त्यकविकृतं श्रीकृष्णचरिताख्यं गद्यकाव्यं तु तत्र तत्र खण्डशः समुपलभ्यत इति श्रूयते । तथा चैवमुपलभ्यमानानि स्मर्यमाणानि चैतानि सर्वविदितानि

1. यद्यपीदममुद्रितम्, अथापि न खलु दुरधिगममिदम् । आचिरादिदमत्र मुद्रापयिष्यते ।

2 (क) 'भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ।' इति हर्षचरिते ।

(ख) 'पुण्या पुनाति गङ्गेव गां तरङ्गवती कथा ।' इति,

(ग) सुश्लिष्टललिता यस्य कथा त्रैलोक्यसुन्दरी ।' इति च तिलकमञ्जर्याम् ।

भवन्ति किल केवलमुपदशानि । आस्तां वा केषांचिदस्मदविदितानां त्रिचतुराणां गद्यकाव्यानां संभवः; अथापि शक्यते निर्भयमभिधातुम्——न तानि कदाचन भविष्यन्ति पञ्चदशाधिकानि——इति । अहो कियदिदं वर्णनं नाम ; यदपारे साहित्यसागरे सन्त्येतादृशाः कतिपये गद्यबिन्दव इति ॥

को वा स्यादस्य हेतुर्गद्यवैरल्यस्य ? अस्य च प्रश्नस्य बहुधा किलोत्तरं बहवः प्रतिपद्यन्ते । तथा हि—— अत्र केचिदेवमाचक्षते—— गद्यबाहुल्यं हि तदा किल स्यात्, यदीयं भाषा लौकिकव्यवहारेष्वप्युपयुज्येत । न चैवमस्ति । अत एव संस्कृतपदेनास्या व्यपदेशः । सम्यक् कृतं परिष्कृतमिति खलु तदर्थः । स्वभावत एव लौकिकसकलव्यवहारोपयोगिनीषु सतीष्वेव भाषासु, ततस्ततः सारांशसमुद्धरणेन केवलप्रबन्धमात्रगोचरतया मेधाविभिरार्यैरनेकैः कालाद्यहोः कामपि व्यवस्थामापादिता खल्वियं संस्कृतभाषा । प्राकृतभाषा पुनरियमासीदस्माकमखिलेष्वपि लौकिकेषु व्यवहारेषु । प्रकृतिसिद्धा हि भाषा प्राकृतभाषेति व्यपदिश्यते । प्रकृतिर्नाम स्वभावः । अत एव चास्याः प्राकृतभाषाया देशभेदेन मागध्यादिव्यवहारोऽपि युज्यते । संमतश्चायमर्थः प्राचीनस्य भारतदेशीयस्यापि पण्डितस्य । तथा च 'प्राकृतसंस्कृतमागधपिशाचभाषाश्च शूरसेनी च' इति रुद्रटकाव्यालंकारपद्य-

व्याख्यानावसरे "सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारः सहजो वचनव्यापारः प्रकृतिः। तत्र भवं सैव वा प्राकृतम्। 'आरिसवअणे सिद्धं देवाणं अद्धमागहा वाणी' इत्यादिवचनाद्वा प्राक् पूर्वं कृतं प्राकृतं बालमहिलादिसुबोधं सकलभाषानिबन्धनभूतं वचनमुच्यते। मेघनिर्मुक्तजलमिवैकस्वरूपं तदेव च देशविशेषात्संस्कारकरणाच्च समासादितविशेषं सत् संस्कृताद्युत्तरविभेदानाप्नोति। अत एव शास्त्रकृता प्राकृतमादौ निर्दिष्टं तदनु संस्कृतादीनि। पाणिन्यादिव्याकरणोदितशब्दलक्षणेन संस्करणात् संस्कृतमुच्यते" इति नमिसाधुः प्राह। तन्निपुणं निरूप्यमाणे नेदमाश्चर्यकरम्, यन्नास्ति संस्कृतसाहित्ये भूयसा गद्यप्रबन्ध इति; यत इयं संकोचमापादिता। अत एव चेयं भाषा मृतभाषेति पाश्चात्त्यपण्डितैरुच्यते—इति॥

इतरे पुनरित्थमाहुः— प्रतिबिम्बं खल्विदमनल्पकल्पनाकुशलस्य संतुष्टस्य सरसस्य चेतसः, यत्साहित्यकलासमुल्लासो नाम। सति च मनुष्यस्य कदाचिदानन्दे ज्ञातुरज्ञातुर्वा सुभगस्य दुर्भगस्य वा सुस्वरमपस्वरं वा सुमधुरममधुरं वा कथमप्यन्ततो मशकक्वणितानुकारि वा संगीतरूपेणैव समुद्भवति नाद इति प्रतिदिनं प्रत्यक्षतः किल पश्यामः। संगीतकला साहित्यकला चेति समानयोगक्षेमे खल्विमे।

तथा चोच्यते—'संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम्।' इति। सति चैवमसाधारणोल्लेखकुशलानामार्याणामानन्दभरितादन्तरङ्गादाविर्भवन्ती देवी भगवती भारती कथंनाम निसर्गतो विहाय पद्यरूपतामपरथा पुनरात्मानं प्रकाशयतु। यतः पद्यात्मना परिणमन्ती खलु भारती गानसौकर्यमाकलयन्ती संगीतेन समरेखामधिरोढुमर्हति। पद्यं हि नामेदमुत्प्रेक्षामृतरसस्य सानन्दे मनस्यपर्याप्नुवतः कश्चन निसर्गतः प्रवहन् परीवाहः। गद्यं तु कथमपि प्रतिनीयमानस्य तस्यैवानुकरोति परिवाहस्य। इत्थं च विमृश्यमाने युक्तमेव वयमुत्पश्यामो नैसर्गिकतया भूयसा पद्यप्रबन्धानाम्, अतथाभावेन च विरलतया गद्यकाव्यानां सर्वतः समुपलम्भम्—इति॥

परे पुनरेवमुत्प्रेक्षन्ते—छन्दोबद्धा हि सरस्वती संगीतसहोदरी सती, सत्यपि क्वचन वैकल्ये संनिवेशविशेषेण सर्वाङ्गसुन्दरीव भासमाना, कामिनीव मानसमाकर्षति पश्यतामिव शृण्वतामेव भावुकानाम्। स खलु स्त्रीत्वस्येव यत्यादिनियमपुरःसरं छन्दसा बन्धस्य महिमा; यदापातमधुरतातरलस्य चेतसः, विद्यमानोऽपि भावादिविलासविरहो न सद्य एव विचारपदवीमवतरतीति। इदमेव च सर्वेषामपि पद्यकाव्यविरचनायां प्ररोचकं बीजम्। को हि नाम काव्यसरणौ प्रवर्तमानो झटित्यात्मनः स्वालित्यमप्रकाशयन्तमध्वानं नाधि-

गच्छतु । सर्वोऽपि खलु जगति सुकरं च सुलभं च पन्थानमासनीनमभिवाञ्छति । गद्यस्य पुनः पुरुषस्येव नास्ति नैसर्गिकमाकर्षकं सौन्दर्यम्; येन सचेतसो रसयितुमभिलषन्कविरप्रतिबन्धमसंकोचं च परितोषेण तत्र स्वैरं प्रवर्तेत । इदं चास्माकमानुभाविकम, यदुत शब्दप्रपञ्चजीवततत्त्वरहस्यवेदिना कुशलमतिना महाकविना सावहिति सविशेषमुपस्कृतस्य गद्यबन्धस्य निपुणमलंकृतस्य प्रयोगचतुरस्य भ्रुकुंसस्येव सरसो विलासः, सहस्रगुणं रमण्या इव पद्यकाव्यादप्युत्कर्षमुपपाद्यमक्लेशमञ्जसा रञ्जयति रसिकानामनन्यवृत्तीन्यन्तरङ्गाणीति । को ह्यपक्षपाती भावुकः कादम्बरीरसमनुभवन्नाघूर्णितमनाः सरसैः पद्यकाव्यैः सममस्यास्तुलाधिरोहणं क्वचित्ततोऽप्यतिशयमेकान्ते वापि नाभिमन्यताम् । अवधानसाध्यश्च क्लेशावहश्च किल कवीनामयं गद्यप्रपञ्चसर्गसंरम्भः । अत्र हि किंचिदिव विद्यमानमपि वैकल्यमकिंचिदिव स्फुटमालक्ष्यमाणमदुर्विषहं सदतीव मानसमायासयति पश्यतां रसवश्यात्मनाम् । यदि नाम नर्तकः कश्चिदनपनीय श्मश्रुजालमन्यानखिलानपि प्रतियत्नानाचरन्नात्मानमभिदर्शयति योषिद्वेषेण, तर्हि कथमस्माकं पुरः स्फुरति तदिदं तस्य मुखवैकृतमिति, कथंतरां च तत्र पुनरस्माकमञ्चति मनः संकोचमिति च स्वयमेव जानीमः खलु वयम । इयमेव हि गम-

निका गद्यकाव्यानामपि । अत एवात्र कतिपय एव कवयस्तादृशाः प्रवृत्ताः । को हि केवलयशोभिलाषी लोकानुग्रहनिराग्रहः कविः, सति तत्र सुखाकरे मार्गे, क्लेशभूयिष्ठया पुनरेनया सरण्या संचरताम् । अक्लेशमभीप्सितार्थप्रार्थयिता खलु जगति मर्त्यधर्मणां स्वो भावः । इदं च सविषादमावेदयामः, यत् जगदुपकारपरा अपि कालिदासादयो महाकवयो न गद्यकाव्यविरचनायामादरमदर्शयन्निति. अतथाविधाश्च गद्यकाव्यप्रवृत्ताः केचन कवयः केवलं पश्यतां क्लेशैकफलमात्मनः पाण्डित्यमात्रप्रकटनमादृत्य सुदूरं क्लिष्टपथेन संचरमाणास्तत्र सर्वात्मना विपरीतमेव फलमकाममप्यधिजग्मुरिति च कष्टमयमस्माकमभाग्यपरिणाम इति । यत्तूच्यते गैर्वाण्या लौकिकव्यवहारोपयोगाभावादेव गद्यकाव्यवैरल्यमिति, सोऽयं मूलशिथिलो वादकोलाहलः । यतः सेयं पुरेव संप्रत्यपि समुपयुज्यमाना व्यवहारेषु दृश्यते । साम्प्रतमपि हि केरलस्थः कश्चन पण्डितो गैर्वाण्या व्यवहरन्नास्ति दृश्यते समं वाराणसेयेन विदुषा । अन्यथा कथमस्या भाषात्वमेव सिध्यतु । स्वाशयं व्यवहारेण परान्संक्रमयितुमारचितः कश्चिदुपायो हि भाषा नाम । तदा तदा व्यवहारोपयुक्तभाषारीतिरेव ऋग्वेदे उपनिषत्सु च समुपलभ्यत इति वदद्भिर्नव्यविमर्शकैरपि कैश्चिदभ्युपगत एवायमर्थः । आस्तां वा

लौकिकव्यवहारानुपयुक्तत्वमस्या भाषायाः । तावता कथंकारं भवतु गद्यवैरल्यम् । परिष्कृतया लौकिकव्यवहारानर्हयापि तया भाषया पद्यकाव्यानामिव भूयसा गद्यप्रबन्धानामुत्पत्तिं को वा प्रतिबध्नातु । समा हि खलु सा गद्यस्य च पद्यस्य च । को नु खलु स विशेषः, येन सा पद्यस्य परं प्रसत्स्यति, गद्यस्य च गमिष्यति । उक्तपूर्वं प्राकृतसंस्कृतपदार्थनिर्वचनं तु 'प्रकृतिः संस्कृतं तत आगतं तत्र भवं वा प्राकृतम्' इत्येवं विवृण्वतां बहूनां प्रामाणिकानामनभिमतम् । तथा हि— 'प्राकृतस्य तु सर्वमेव संस्कृतं योनिः' इति प्राकृतसंजीविनी । 'प्रकृतिः संस्कृतं तत्र भवत्वात्प्राकृतं स्मृतम्' इति प्राकृतचन्द्रिका । 'प्रकृतिः संस्कृतं तत्र भवं तत आगतं वा प्राकृतम् । संस्कृतानन्तरं प्राकृतमधिक्रियते । संस्कृतानन्तरं प्राकृतस्यानुशासनम्' इति शब्दानुशासनवृत्तिः । 'शेषं संस्कृतवत्' इति, 'तस्मात्संस्कृतवद्विभक्तयः' इति च सूत्रयन्तौ कात्यायनश्रीचण्डावप्यमुमेव पक्षं कटाक्षयतः । नमिसाधुवचनं तु नास्माकमवश्यश्रद्धेयं भवति । पाश्चात्त्यानामस्यां मृतभाषाव्यवहारस्तु केवलं सांकेतिक इति, न सल्लक्षणानुगत इति न तत्र सांप्रतमस्माकं संरम्भः सांप्रतम् । यदपि संगीतसमरेखया पद्यानां नैसर्गिकत्वप्रतिपादनेन गद्यवैरल्यसमर्थनम्, तदपि नातीव समञ्जसम्; यतस्तथा सति

प्राचामपि गद्यानामनैसर्गिकत्वमभ्युपगन्तव्यं भवति । न खलु कश्चिदपि सचेतन उपनिषत्सु दृश्यमानानां गद्यानां कृत्रिमत्वमभिदधीत। सरसश्च मधुरश्च ललितश्च गम्भीरश्च प्रसन्नश्च नैसर्गिकश्च किल तत्र गद्यवाचां प्रपञ्चः । इत्थं च विचार्यमाणे गद्यकाव्यवैरल्यस्य ज्यायानस्मदुक्तो हेतुरेवेति विशदमिदं विदुषाम्—इति ॥

यद्यप्येतेषु त्रिष्वपि पक्षेषु सन्त्येव गुणाश्च दोषाश्च, तथापि विस्तरभीरवो न वयमिदानीमेतदालोडितुमभिलषामः । परं तु तत्तत्कालभेदेन विषयभेदेन च एकस्य द्वयोस्त्रयाणां वा हेतूनां समुदितानां कारणत्वमभिमन्यमाना अपि वयमन्तिमे पक्षे परमधिकमादरमावहामः ॥

तस्य चास्य गद्यकाव्यस्य द्वौ प्रसिद्धौ प्रभेदौ— कथा च, आख्यायिका चेति । अनयोश्चैवमभिहिते लक्षणे साहित्यदर्पणकृता—'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् । क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके । आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ।' इति, 'आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम् । अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित् । कथांशानां व्यवच्छेद आश्वास इति बध्यते । आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् । अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।' इति च। आचार्यदण्डी तु 'अपादः पद-

संतानो गद्यमाख्यायिका कथा । इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल । नायकेनैव वाच्यान्या नायकेनेतरेण वा । स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः ' इति प्रथममुक्त्वा 'अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् । अन्यो वक्ता स्वयं वेति कीदृग्वा भेदलक्षणम् । वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् । चिह्नमाख्यायिकायाश्चेत्प्रसङ्गेन कथास्वपि । आर्यादिवत्प्रवेशः किं न वक्त्रापरवक्त्रयोः । भेदश्च दृष्टो लम्भादिरुच्छ्वासो वास्तु किं ततः । तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता । अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः । ' इत्युपसंजहार ॥

इयं च वासवदत्ता, कथा न त्वाख्यायिका । अत्र वासदत्तापदप्रयोगस्तु व्याख्याने [1]समर्थित एव । एतत्कविः सुबन्धुश्च वर्णनायां परं आत्मनो मनःप्रवृत्तिं मानयन्नत्यल्पमेव कथावस्तु परिगृह्य प्रबन्धमिममाततान । अयमत्र कथाभागः—

अभूदभूतपूर्वो राजा चिन्तामणिर्नाम । तस्य च तनयोऽभूत्कन्दर्पकेतुर्नाम । अथ स कदाचिदवसन्नायां यामवत्यां विजयपताकामिव मकरध्वजस्य संकेतभूमिमिव लावण्यस्य उत्पत्तिस्थानमिव कान्तेरष्टादशवर्षदेशीयां कन्यामपश्यत्स्वप्ने । अथ प्रबुद्धस्तु तददर्शनेन विषमशरस्य निघ्नमात्मानमवधारयन्, ततस्तत्रैव शय्यातले निलीनो निशि

1. दृश्यतां ३०८ पुटः ।

अथ तच्छ्रुत्वा सहर्षं समुत्थाय मकरन्दस्तां तमालिकामाहूय विदितवृत्तान्तामकरोत्। सा तु तस्मै कृतप्रणामा तां पत्रिकामुपानयत्। अथ मकरन्दस्तामादाय पत्रिकां विस्रस्य स्वयमेवावाचयत्। तच्छ्रुत्वा कन्दर्पकेतुरमृतार्णवनिमग्नमिवात्मानं मन्यमानो मन्दमुत्थाय तमालिकामालिलिङ्ग। तं च दिवसं तत्रैव वासवदत्तावृत्तान्तं पृच्छन्नतिवाह्य, तस्मात्प्रदेशात्तया सहोच्चचाल ससुहृत्कन्दर्पकेतुः। अत्रान्तरे भगवानपि मरीचिमाली वृत्तान्तमिमं कथयितुमिव मध्यमं लोकमवततार।

ततः क्रमेण च तापहारिणि प्रवाति सायंतने नभस्वति, कन्दर्पकेतुस्तमालिकामकरन्दसहायः प्रणयपेशलाः प्रमदाजनानामालापकथाः शृण्वन् वासवदत्ताभवनं प्रविश्य, तत्र अलंकारप्रसाधितां प्रियदर्शनां वासवदत्तां ददर्श।

अथ तां विस्फारितेन चक्षुषा पिबतः कन्दर्पकेतोर्जहार चेतनां मूर्च्छा। तमनुपश्यन्ती वासवदत्ता मुमूर्च्छ। अथ मकरन्दसखीजनप्रयत्नाल्लब्धसंज्ञावेतावेकासनमलंचक्रतुः। अथ वासवदत्तायाः प्राणेभ्योऽपि गरीयसी कलावती नाम सखी 'आर्यपुत्र नायं विस्रम्भकथानामवसरः। अतो लघुतरमेवाभिधीयते। त्वत्कृते यातनानयानुभूता। त्वया च राज्यमुज्झितम्। किं बहुना—आत्मास्याः संकटे समारोपितः; यैषास्मत्स्वामिदुहिता प्रभातायां शर्वर्यां पित्रा यौवनातिक्रमदोषशङ्किना हठेन विद्यधरचक्रवर्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति निश्चिता। अनया चार्ययास्माभिः सह संमन्त्र्यालोचितम्—अद्य यदि तं जनमादाय नागच्छति तमालिका, तदावश्यमेवाश्रयाश आश्रयितव्य इति। सुकृतवशाच्च महा-

भागः समागतः । तदत्र यत्सांप्रतम्, तत्र भवानेव प्रमाणम्' इत्युक्त्वा विरराम ।

अथ कन्दर्पकेतुरपि वासवदत्तया सह संमन्त्र्य, मकरन्दं वार्तान्वेषणाय तत्रैव नगरे नियुज्य, मनोजवनाम्ना तुरगेण तया सह नगरात् निरगात् । ततः क्रमेण गव्यूतिमात्रमध्वानं गत्वा, रौद्रतरेण श्मशानवाटेन निर्गत्य, निमेषमात्रादेवानेकशतयोजनमध्वानं गत्वा विन्ध्याटवीं प्रविवेश । अत्रान्तरे तयोर्निद्रामादाय निशा जगाम । ततः क्रमेण बालप्रवालभङ्गारुणे प्रसरति बालातपे, कन्दर्पकेतुः सर्वरात्रजागरणपरवशाहारशून्यशरीरतया निश्चेतनोऽनेकयोजनशताध्वभ्रमणखिन्नो वासवदत्तयाप्येवंविधया सह लतागृहे तत्कालसुलभया निद्रया गृहीतो निस्पन्दकरणग्रामः सुष्वाप ।

अथ उपवासादिना तृषातुरे कन्दर्पकेतौ निद्राश्रान्ते, प्रथमप्रबुद्धा वासवदत्ता फलान्वेषणाय वने स्तोकमात्रमगच्छत् । तथा गच्छन्तीं च तां चारकथितोदन्तो दूरात्किरातसेनापतिः सह तरुगुल्मान्तरितेन सेनासमूहेन धावति स्म । ततोऽन्योऽपि तादृश एव किरातसेनापतिस्तथाभूतया सेनयान्वितो मृगयां गतस्तद्दृष्ट्वा धावति स्म । अथैकामिषलुब्धयोर्गृध्रयोरिव तयोर्युद्धमासीत् । ततो विध्वस्तध्वजपटं पतत्पताकं तत्समस्तमुभयं मिथो जगाम हननं सैन्यम् । ततश्च, यस्याश्रमः, तेन मुनिना पुष्पादिकमादायागतेन योगदृशा प्रतिपन्नवृत्तान्तेन 'त्वत्कृते ममायमाश्रमो भग्नः' इति कुपितेन 'शिलामयी पुत्रिका भव' इति शप्ताभूद्वासवदत्ता । ततः क्षणेनैवेयं वराकी बहु दुःखमनुभवतीत्यनुग्रहात्स मुनिर्याच्यमानः पतिहस्तस्पर्शावधिकं शापमकरोत् ।

कन्दर्पकेतुस्तु पतङ्गमण्डले मध्यं नभःस्थलस्यारूढे प्रबुद्धः, प्रियया विनाकृतं लतागृहमवलोक्य, उत्थाय च तत इतो दत्तदृष्टिः, दिक्षु विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप। विलपंश्च महासागरकच्छोपान्तेन कतिपयदूरमध्वानं गत्वा जलनिधिमपश्यत्। 'अहो मे कृतापकारेणापि विधिना उपकृतिरेव कृता, यदयं लोचनगोचरतां गतः। तदत्र देहं त्यजामि' इति चिन्तयन्नेव कन्दर्पकेतुः पुलिनतलमाससाद।

ततः कृतस्नानादिसकलकृत्यो जलनिधिजलमन्तर्तरितुमारेभे शरीरत्यागाय। अत्रान्तरे 'आर्य कन्दर्पकेतो पुनरपि तव प्रियया संगतिर्भविष्यत्यचिरेण। तद्विरम मरणव्यवसायात्' इत्याकाशात्सरस्वती समुदचरत्। सोऽपि तदुपश्रुत्य मरणारम्भाद्विरमन्प्रियागमनमाशया फलमूलादिना वने वर्तयन्कालमनेकं निनाय। एकदा नु कतिपयमासापगमे गते वर्षाकाले समागते च शरत्समये कन्दर्पकेतुस्तत इतः परिभ्रमन्कांचिच्छिलामयीं पुत्रिकां दृष्ट्वा, मम प्रियानुकारिणीति करेण पस्पर्श।

अथ सा स्पृष्टमात्रैव शिलाभावमुत्सृज्य वासवदत्तास्वरूपं प्रपेदे। तामवलोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुदृढमालिलिङ्ग। ततः कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन मकरन्देन तया वासवदत्तया च समं स्वपुरं गत्वा हृदयाभिलषितानि सुरलोकदुर्लभानि सुखानि ताभ्यां सहानुभवन् कालमनेकं निनाय — इति ॥

**अतिसंकुचिता खल्वियं कथा। प्रायेण हि दृश्यते गद्यकाव्यानामतिसंकुचितं कथाशरीरम्। विमृश्यताम्, किं**

कादम्बरी वा तिलकमञ्जरी वा त्वबृहत्त्वानुरूपं कलयति कथाभागम् । किं बहुना । प्राञ्चो हि महर्षयो महाकवयश्च, अपथान्निवर्तनं सुपथि प्रवर्तनं च परमं फलं काव्यस्येत्यभिमन्यमाना:, परेषां च फलानामप्रधानत्वमानुषङ्गिकत्वं च आकलयन्त:, पुण्यजन्मन: कस्यचन नायकस्य चरितमधिकृत्य रसमयैर्वाग्विसर्गैरितिहासान्पुराणानि महाकाव्यानि च विरचयामासु: ; यैरद्यापि पूतं च भूषितं च भाति भारतं वर्षम् । ते खलु महापुरुषा:, न केवलं कथाभागे, न परं रसविलासे, अपि तु वर्णनायामपि तत्तदुचितायामात्मदृष्टिमाबबन्धु: । गच्छत्सु च गणरात्रेषु, कवय: केचन विस्मरन्त इव विशिष्टं फलं प्रच्युता: प्राचीनव्यवस्थाया:, परं वर्णनायामक्षीणं पक्षपातमावोढुमारभन्त । ततश्च गतानुगतिकतया लोकस्य, सर्वेषामप्यवर्जनीयमासीदतिवर्णनदोहदम् । क्रमेण च कष्टमयमभिलाष: प्रतिदिनं परिपोषमावहन्नालर्कं विषमिव सर्वत: प्रससार । एतत्परित्यागश्च कविभिर्दोषेषु पर्यगण्यत । एष्वेव च दिवसेषु लाक्षणिका: केचिदेतत्सत्त्वं महाकाव्यलक्षणमभिमेनिरे । स्वतन्त्रेच्छोऽपि न कश्चिदपि कविर्विषमादस्माद्वर्त्मनो रेखामात्रमप्यतिलङ्घितुमात्मना शशाक ; तथा खलु रूढमूलेयमासीत्कदर्थना । अहो कष्टमयमेव समय: सेतुरासीन्निसर्गत:

प्रवहतो रसपरिवाहस्य । अस्मिन्नेव चाहन्यस्ताचलमारुरोह कथादरदिवाकरः । इदमेव च संतमसं दिवान्धानामिव केषां चन दुर्बलहृदयानामासीदानन्दहेतुः । स्वयमेव कल्पनाशिल्पि मानसमार्याणां सति समुत्तेजने कुतो नाम तत्र मा स्म प्रवर्तेत । अयमेव च कालो रसवर्णनयोः समप्राधान्यमावहतामवतारस्य काव्यानाम् । ततश्च वहत्सु कतिपयेषु वत्सरेषु, कलुषीभूते च काव्यलोके, प्रादुरभूत्प्रलयकालः प्राचां च अर्वाचां च काव्यजीवानाम् । क्रमेण च नवीना सृष्टिरुदभूत्काव्यलोकस्य; यत्र च स्रष्टारः सर्वात्मना विहाय रसवस्तुनोरादरं केवलवर्णनाग्रहेण निगृहीताः किमपि कथाशकलमुपादाय नगरार्णवादिवर्णनं विस्तरेण विरचयन्तः, संतुष्टानां लाक्षणिकानामालंकारिकाणामभूवन् बहुमानस्य स्तुतेराशिषश्च पात्राणि। तदा किल निर्णीतमासीदखिलस्यापि काव्यप्रपञ्चस्य शृङ्गारवर्णनमुपादानकारणम् । तथा चैवमतिशोचनीयमधिगच्छति परिणाममस्मिन्काव्यलोके, एकत्र स्थितस्य अपरत्र योजनेन अन्यत्र वर्णितस्य इतरत्र घटनेन तया तया च गमनिकया पदचौर्यं पादचौर्यम् अर्धचौर्यं पद्यचौर्यमित्यहो कष्टमधरोत्तरमासीदिदं कविजगत् । यद्येकैव वर्तनी नियमिता गमनाय सर्वेषाम्, तर्हि पुरोयायिनां पदक्षुण्णमध्वप्रदेशमनुयायिनः कथं नाम न प्रघ्नन्तु । क्रमेण चैवं प्रबलीभवति

काव्यार्थचौर्ये कतिपये परमभिमानिनः कवयो जुगुप्सया विरतास्तत्पथात्, अनादृत्य रसगमनिकाम्, अगणयित्वा वस्तुविस्तरम्, केवलं शब्दजालैरेव दण्डादण्डि कुर्वाणास्तावतैव विनोदयामासुरात्मानम्। अत्रापि कुशलाः केचिदुच्चावचानि विरचय्य पदन्यसनानि, ऊरीकृत्य नवनवान्युत्प्लवनचापलानि, कृतार्थेनान्तरात्मना सर्वतः समुदजृम्भन्त। अयमेव च समयः श्लेषस्य साम्राज्यमनुभवितुम्। [1]तदापि सरसः कविः प्राचीन इव कथंचिदभ्युपगन्तुमभ्यलष्यद्विशेषं श्लेषस्य। क्रमेण च तदेतत्साम्राज्यमभूदतिविपुलमकण्टकं च। सर्वोपि कविप्रकृतिः सर्वात्मना तत्र [2]विस्रम्भमाबबन्ध। ततश्च कतिपयेषु वासरेष्वस्याः श्लेषकदर्थनायाः सरस्वतीप्रसाद[3] एव परमं निदानमिति मतिरपि कविहृदयेष्वासीदङ्कुरिता। क्रमेण चास्मिन्विकसति विषतरुप्रसूने, मोहमधिगत्य,

1. (क) 'वर्णयुक्तिं दधानापि स्निग्धाञ्जनमनोहराम्।
नातिश्लेषघना श्लाघां कृतिर्लिपिरिवाश्नुते' इति धनपालः।
(ख) 'नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम्' इति बाणः।

2. 'वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः।
नोद्वेगस्तत्र कर्तव्यो यस्मादेको रसः कवेः' इति त्रिविक्रमः।

3. 'प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिं प्रबन्धम्।
सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः॥' इति सुबन्धुः।

न केवलं पदतः, परमक्षरतोऽपि श्लेषमुपयुञ्जानाः प्रायेण कविव्यपदेशिनः सर्वेऽप्यापादचूडमनेककथाश्रयाणि [1]काव्यान्यहंपूर्विकया विरचयितुमुदसहन्त । एवं क्रमेण कवयः प्राचः पथः प्रच्युताः 'अलीकविकल्पैर्विस्मृतफला इव मर्कटा मूलमलभमानाः पल्लवग्राहिणो' बभूवुः । तदित्थं काव्यलोकस्य विषमां दशामापतितामभिवीक्ष्य, [2]अर्वाचीना अपि केचन सचेतसः शोचितुमारेभिरे । अयं च श्लेषाभिलाषः कवीनां गद्यकाव्येषु सुपूरश्च उच्छृङ्खलश्चासीत् । एवं किल काव्यजीवानां संसारपरिवृत्तिः । तदेवं सर्वमपि काव्यप्रपञ्चं सुनिपुणं विमृशतां नेदं तिरोहितं विस्मयकरं वा, यत्सुबन्धोरपि तत्तादृशे समयपरिवर्ते विद्यमानस्य किमपि कथाशकलमुपादाय प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासेन सुमहदासीदभिवर्णनायां श्रद्धाजाड्यमिति ॥

अयं च गद्यकविः सुबन्धुरनादृत्य रसवस्तुनी, श्लेषप्रयोगेणैव वर्णनायां परं कौतूहलमावहति । [3]प्रतिवस्तुवर्णनं

---

1. राघवपाण्डवीयम्, द्विसंधानकाव्यम्, राघवयादवपाण्डवीयमित्यादीनि ।

2. 'कृते युगे व्यञ्जनयावतीर्णे त्रेतायुगे सैव गुणीबभूव ।
आसीत्तृतीये तु युगेऽर्थचित्रं युगे तुरीये यमकप्रपञ्चः'

इति नीलकण्ठदीक्षितः ।

3. दृश्यन्तां चिन्तामणिराजवर्णनादीनि ।

च श्लेषेण सुबह्वीरुपमा उत्प्रेक्षा रूपकाणि चालंकारान्निर्वहति। श्लिष्टानि बहूनि पदानि श्रोतृदुःसहं प्रयुञ्जानोऽप्ययं तावतैव कृतार्थमात्मानं मन्यमानः, स्वस्य 'प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्ध्यम्' तत्र च 'सरस्वतीदत्तवरप्रसादम्' सामोदमावेदयति। श्लेषाश्चास्य भूयसा सभङ्गाः क्लिष्टा अर्थबोधविधुराश्च। अयमप्यन्यकविवत्[1] स्वयं निर्दिशति सत्काव्यस्वरूपम्[2]। तत्रापि विमृश्यमाने, स्वस्य शब्दाडम्बर एव सूचयत्यादरमिति स्पष्टं भासेत सहृदयानां विमर्शकानाम्; यतः सोऽयमर्थसंबन्धमत्र नाधिकमन्तर्भावयति। अत एव चायं श्लेषैकदीक्षितस्तत्र तत्र संभाषणेषु सरसैः पदैरान्तरमभिप्रायमभिव्यञ्जयितुं न व्यवस्यति; निकषः खल्वयं गद्यकविसुवर्णानाम्, यदतिनिपुणमुक्तिप्रत्युक्तिघटनं नाम। श्लेषलुब्धश्चायं तत्र तत्र श्लिष्टोपमाघटनेषु धर्मैक्यसंपादकानां भूयसां पदानामुपलम्भे तत्परित्यागपातकभीरुः

1. (क) 'उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थसंचयम्' इति बाणः।

(ख) 'सुकविवाचमिव सहृदयानां हृदयमावर्जयन्तीम्' 'सुकविकाव्यमिव......सप्रसादम्' इति धनपालः।

2. 'सत्कविकाव्यबन्ध इवानवबद्धतुहिनिपातः' (पृष्ठ १५८) 'ततो दीर्घोच्छ्वासरचनाकुलं सुश्लेषवक्रघटनापटु सत्काव्यविरचनमिव' (पृ. २३८) 'सत्कविकाव्यरचनामिव अलङ्कारप्रसाधिताम्' (पृ. ३०३).

सन्, एकस्यैवोपमानवस्तुनो दशाभेदेन पदभेदेन, किं बहुना, किंचिद्विशेषणयोजनेनापि भेदं परिकल्प्य एकत्रैव स्थले बहुधा उपमां निरुह्य स्वमनोरथं [1]पूरयति । श्लिष्टपदलाभे च यथा कथंचिद्यत्र कुत्रापि वर्णने तद्धटनमवश्यकर्तव्यमिति दुराशाकबलितहृदयश्चायं न खलु तद्योजने बहुत्र विचारयत्यौचित्यम्; अतश्च [2]घटयति क्वचन हीनोपमाम्, क्वचिदधि-

1. चिन्तामणिवर्णनावसरे 'नृसिंह इव' 'कृष्ण इव' 'नारायण इव' 'कंसारातिरिव' 'सागरशायीव' 'न चक्रीव...' 'राम इव' 'नलस्य दमयन्त्या...' 'न नल इव...'। कन्दर्पकेतुवर्णनावसरे 'मन्दर इव' 'क्षीरोदमथनोद्यतमन्दर इव'। दुर्जननिन्दावसरे 'मातङ्ग इव' 'दुष्टशूर्पश्रुतिरिव'। विन्ध्यवर्णनप्रकरणे 'पशुपतिरिव'। 'विरूपाक्ष इव'। वसन्तवर्णनावसरे 'महाशृङ्गारीव' 'षिद्र इव'। राजपुत्राणां स्थितिनिरूपणावसरे 'पाण्डवा इव' 'पाण्डुपुत्रा इव'। विन्ध्याटवीवर्णनावसरे 'धार्तराष्ट्रसेनामिव' 'कुरुसेनामिव'। जलनिधिवर्णनप्रकरणे 'शृङ्गारिणमिव' 'विलासिनमिव'। वर्षासमयवर्णनप्रकरणे 'तपस्वीव' 'तापस इव'।

2. 'नान्तक इवाकस्मादपहृतजीवनः' (चिन्तामणिः) पुटः ४०; 'दानवेष्विव निशान्तमध्यचारिषु' (प्रदीपेषु) पुटः ६१; 'आसन्नमरणास्विव जीवितेशपुराभिमुखीषु' (कामिनीषु) पुटः ६४; 'विन्ध्याटवीमिव उत्तुङ्गश्यामलकुचाम्, वानरसेनामिव सुग्रीवाङ्गदशोभिताम्' (कन्याम्) पुटः ७६, ७७; 'जलौकसेव रक्ताकृष्टिनिपुणेन, अन्धकेनेव शूलानामुपरि गतेन' (वेश्याजनेन) पुटः १३१, १३२; वनराजिरिव नवमालिकोद्भासिता' (अनङ्गवती) पुटः १५०; 'राक्षसकुललक्ष्मीरिव माल्यवत्सुकेशशोभिता' (वासवदत्ता) पुटः १५२; 'दुर्जन इव सतामरसः'

कोपमाम् , कुहचित् विरोधाभासम् , कुत्रचित्परिसंख्याम् , क्वचिदुत्प्रेक्षां च सहृदयोद्वेजकतया। तथा वस्तुत एकमेवोपमेयगतं धर्मं पदभेदेन निरूप्य, तत्र च श्लेषस्वीकारेण बहुभिः पदार्थैरुपमानभावं प्रकारान्तरेण अलंकारान्तराणि वा योजयति; क्वचिच्च तत्पदोपादानेनापि[1] । यथा ह्यन्ये गद्यकवयः,

(वसन्तकालः) पुटः १५७ ; 'क्वचित् व्याधा इव शकुनश्रावकाः' (राजपुत्राः) पुटः १७५: 'बालिनमिव अङ्गदोपशोभितम्' (युवानम्) पुटः १८४; 'वानरेन्द्र इवानुरक्ततारः, जाम्बवानिव ऋक्षपरिवृतः' (रजनीपतिः) पुटः २४४, २४५ ; 'अरण्यमिव अनेकसालोपशोभितम्' (वासवदत्ताभवनम्) पुटः २८८ ; 'रुद्र इव विरूपाक्षः, विष्णुरिव चक्रधरः, शक्राश्च इवोच्चैःश्रवाः, मातङ्ग इव स्ववशालोलमुखः' (खलः) पुटः ८५, ८६ ; 'यायजूकेनेव सुरतार्थिना' (वेश्याजनेन) पुटः १३२ ; 'शूलपाणिनेव कपालावलिशिवाबहुभूतिभुजगराजावरुद्धदेहेन, पुरुषातिशयेनेव अनेकमण्डलकृतसेवेन, चक्रवर्तिनेव अनेकनरेन्द्रपरिवृतेन' (श्मशानवाटेन) पुटः ३१२; 'महिषीसंभवोऽपि वृषोत्पादी' (चिन्तामणिः) पुटः २३: 'सुबाहुरपि रामानन्दी' (कन्दर्पकेतुः) पुटः ४७ ; 'शलभङ्गो युवतिप्रसवेषु, वृषहानिर्निभुवनलीलासु' (पुटः २७, १४८) 'यत्र (विन्ध्यगिरिः) प्रवृद्धगुल्मतया रोगीव दृश्यमानबहुधातुविकारः' (पुटः १०६) 'एताभिः (ताराभिः) भित्रीव वियदशोभत' (पुटः २३८).

1. 'जलनिधिरिव वाहिनीशतनायकः, हर इव महासेनानुगतः' (पुटः २१) 'क्षमानुगतोऽपि सुधर्माश्रयः, महिषीसंभवोऽपि वृषोत्पादी' (पुटः २३) 'मधुरिव नाना रामानन्दकरः, विष्णुरिव क्रोडीकृतसुतनुः, सुबाहुरपि रामानन्दी' (पुटः ४४ ४६- ४७) 'घनसमयलक्ष्मीमिव उन्न-

तथा अयमपि तत्र तत्र विद्यास्थानान्युपमानतया निर्दिशति[1]।

---

सद्वारपयोधराम्, विन्ध्याटवीमिव उत्तुङ्गश्यामलकुचाम्' (पुटः ७५-७६) 'जनार्दन इव विचित्रवनमालः, कार्मीव कान्तारोषरसानुगतः, कामसूत्रविन्यास इव मल्लनागघटितकान्तारसामोदः' (पुटः ९९-१००-१०२) 'गजेन्द्रेणेव पल्लववर्धितरुचिना, महानटबाहुनेव बद्धभुजङ्गाङ्केन' (पुटः १३१, १३२) 'दुर्जन इव सतामरसः, कैवर्त इव बद्धराजीवोत्पलसालः' (पुटः १५७, १५९) 'भिक्षुकीव तारानुरागरक्ताम्बरधारिणी, बभ्रुरिव कपिलतारका च' (पुटः २२२) 'भारतसमरमिव वर्धमानोलूकशकुनिकलकलम्, नन्दनवनमिव संचरत्कौशिकम्' (पुटः २२६, २२७) 'वानरेन्द्र इवानुरक्ततारः, जाम्बवानिव ऋक्षपरिवृतः' (पुटः २४४, २४५) 'लङ्केश्वर इव समेघनादः, युवतिजन इव पीनपयोधरः' (पुटः ३४४) 'अदितिजठरमिव अनेकदेवकुलाध्यासितम्, ससुरालयमपि पवित्रम्' (पुटः १३९, १४०) 'छन्दोविचितिमिव भ्राजमानतनुमध्याम्, शतकोटियष्टिमिव मुष्टिग्राह्यमध्याम्' (पुटः ३०२, ३०४) 'भुजगेनेव सदागत्यभिमुखेन, हंसेनेव मानसगतिना' (पुटः ३०८, ३०९) वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशाम्, अम्लानजातिभूषितामपि विरुद्धवंशाम्, द्विजकुलभूषितामपि अकुलीनवंशाम्' (पुटः ३१५, ३१७, ३१८) 'भारतसमरभूमिमिव दूरप्ररूढार्जुनाम्, धार्तराष्ट्रसेनामिव अर्जुनशरनिकरपरिवारिताम्' (पुटः ३१४, ३१६).

1. 'हरिवंशैरिव' (पुटः १०७) 'छन्दोविचितिरिव' (पुटः १३५) 'व्याकरणमिव' (पुटः ३३४) 'न्यायविद्यामिव' (पुटः ३०३) 'उपनिषदमिव' (पुटः ३०३) 'नक्षत्रविद्यामिव' (पुटः ३०२) 'सत्कविकाव्यबन्ध इव' (पुटः १५८) 'भारतेनेव' 'रामायणेनेव' (पुटः ३०२) 'वेदस्येव' (पुटः १२१).

[1]छन्दःशास्त्रे [2]मीमांसायां च पक्षपातोऽस्यास्तीति ज्ञायते। वेदविरुद्धेषु बौद्धसिद्धान्तादिष्वयमावहति प्रद्वेषम्[3]। अदिगम्बरेषु परं क्रियाविवादरोऽस्य [4]दृश्यते। [5]रामायणं तत्रोक्तानां बहूनां नामानि च स्मरतोऽपि, तदपेक्षया समधिकस्मरणेन,[6] रामायणादपि भारत एवास्य भूयानादरः परि-

1. छन्दोविचितिः—पुटः १०८, १३५, ३०२.

2. 'मीमांसान्याय इव पिहितदिगम्बरदर्शनः' (पुटः १०७) 'केचिज्जैमिनिमतानुसारिण इव तथागतमतध्वंसिनः' (पुटः १७५).

3. 'मीमांसा... दर्शनः' (पुटः १०७) 'केचिज्जैमिनि...ध्वंसिनः' (पुटः १७५) 'बौद्धदर्शनमिव प्रत्यक्षद्रव्यमपह्नुवानम्' (पुटः २२९) 'श्रुतिवचनमिव क्षपितदिगम्बरदर्शनम्' (पुटः २४१) 'बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत्' (पुटः ३५६).

4. 'शाक्य इव रक्तांशुकधरः' (पुटः २१२) 'भिक्षुकीव तारानुरागरक्ताम्बरधारिणी' (पुटः २२१) 'काषायपट इव शाक्याश्रमशाखिशाखासु' (पुटः ३२३) 'क्षपणक इव कटावृतविग्रहोऽभवत्' (पुटः ३५६)

5. 'रामायणेनेव' (पुटः ३०२) 'वाल्मीकिसरस्वतीमिव' (पुटः ३१५) अत्र दशरथसुमन्त्रसुमित्रारामलक्ष्मणभरतजनकवैदेहीवालिसुग्रीवजाम्बवत्कुमुदकेसरिशरभपनसगवयगवाक्षरावणकुम्भकर्णमेघनादमाल्यवत्सुबाहवः सन्ति निर्दिष्टाः।

6. 'धृतराष्ट्रोऽपि, बृहन्नलानुभावोऽपि' (पुटः २३) 'दुःशासनदर्शनं महाभारते' (पुटः २८) 'पार्थोऽपि न महाभारतरणयोग्यः, भीष्मोऽप्यशान्तनवाहितः' (पुटः ३७) 'जरासन्ध इव' (पुटः ४२) 'पार्थ इव'

चयश्चेति संभाव्यते। बाणवत् शब्दप्रपञ्चसाम्राज्याभावेऽपि, नायं 'हठादाकृष्टानां कतिपयपदानां रचयिता;' परं तु

---

(पुटः ४५) 'शान्तनव इव' (पुटः ४६) 'कौरवव्यूह इव सुशर्माधिष्ठितः' (पुटः ४७) 'सुयोधनधृतिमिव कर्णविश्रान्तलोचनाम्' (पुटः ७५) 'भीमोऽपि न बकद्वेषी' (पुटः ८२) 'कर्ण इव' (पुटः १०१) 'भीष्म इव शिखण्डिमुक्तैरर्धचन्द्रैराचिततनुः' (पुटः १०२) 'भीमोऽपि कीचकसुहृत्' (पुटः १०५) 'भारतसमरभूम्येव' (पुटः ११३) 'उत्तरगोग्रहणसमरभूम्येव वर्धमानबृहन्नलया, कुरुदेशढक्कयेव' (पुटः ११८) 'विराटलक्ष्म्येव आनन्दितकीचकशतया' (पुटः १२०) 'पार्थ इव सुभद्रान्वितः सभीमसेनश्च' (पुटः १४१) 'अर्जुनसमरमिव नन्दिघोषमुखरितदिगन्तरम्' (पुटः १७२) 'पाण्डवा इव दिव्यचक्षुःकृष्णागुरुपरिमिलिताः' (पुटः १७४) 'केचिद्धार्तराष्ट्रा इव विश्वरूपावलोकनजनितेन्द्रजालाद्भुतप्रत्ययाः' (पुटः १७८) 'केचित्पाण्डुपुत्रा इवाक्षहृदयाज्ञानहृतक्षमाः' (पुटः १८०) 'कौरवसैनिका इव द्रोणशास्त्रसूचकाः' (पुटः १८२) 'भारतसमरमिव वर्धमानोलूकशकुनिकलकलम्, धृष्टद्युम्नवीर्यमिव कुण्ठितद्रोणप्रभावम्' (पुटः २२६) 'महाभारतेनेव सुपर्वणा' (पुटः ३०२) 'भारतसमरभूमिमिव दूरप्ररूढार्जुनाम्' (पुटः ३१४) 'धार्तराष्ट्रसेनामिव अर्जुनशरनिकरपरिवारिताम्, कुरुसेनामिव उलूकद्रोणशकुनिसनाथाम्' (पुटः ३१६) 'महाभारतसमररुधिरोद्गार इव कुरुक्षेत्रेषु' (पुटः ३२३) 'शन्तनुरतिव्यसनाद्वने विललाप, युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज' (पुटः ३४०) 'कश्चित्सुयोधन इव शङ्कितोरुभङ्गः सरोजलं विवेश, कश्चित् शरतल्पशय्यागतो भीष्म इव गतायुश्चिरं श्वसन्नासीत्, कश्चित्कर्ण इव विक्लवीकृताङ्गः शक्तिमोक्षमकरोत्' (पुटः ३५६).

बहुशः श्लेषप्रयोगेषु अन्यत्रापि प्रयुक्तपूर्वाण्येव पदानि वाक्यानि च—न जानीमः किमु नाम कारणम्—तथैव किंचित्परिवर्तेन वा पुनरयमुद्गिरति[1] । कामिनश्च तेनैव

---

1. 'वाहिनीशतनायकः' (पुटः २१) 'वाहिनीशतसमाकुले' (५५)। 'दक्षिणाशाप्रसाधकः' (२०) 'प्रसाधिताशेन' (४९) 'सर्वाशाप्रसाधके' (३२५)। 'जनितानिरुद्धसंपत्, रतिसुखप्रदश्च' (२०) 'जनितानिरुद्धलीलस्य, रतिप्रियस्य' (५०)। 'सकलकलाकुलगृहम्' (३५) 'सकलकलाकुलगृहेण' (४९)। 'बृहन्नलानुभावोऽपि' (२२) 'विजृम्भमाणबृहन्नलया' (११८)। 'रविरिव छायासंतापहरः' (२२) 'विकर्तनस्येव स्निग्धच्छायस्य' (१२०)। 'स सदागतिः' (३१) 'अनुगतदक्षिणसदागतये' (५०)। 'नृत्यत्कबन्धबन्धुरे' (५६) 'नृत्यत्कबन्धया' (११३)। 'मेनकानखमार्जनधवल...' (५७) 'रतिनखमार्जनरत्न...' (३४५)। 'शिशुरिव कृतधात्रीधृतिः' (१००) 'शिशुजनलीलामिव कृतधात्रीधृतिम्' (३१५)। 'रावण इवापीतलोहितपलाशशतसेवितः' (१५७) 'लङ्कामिव बहुपलाशसेविताम्' (३१६)। 'सुग्रीव इव ऋक्षगवयशरभकेसरिकुमुदपनससेव्यमानपादच्छायः' (९८) सुग्रीवसेनामिव पनसनलकुमुदसेविताम्' (३१६)। राशिभिरिव मीनमकरकुलीरमिथुनसंगतैः' (१०७) 'राशिमिव समीनकुलीरम्' (३३६)। 'दर्शिताभयोऽपि मृत्युफलदायी' (१०४) 'दर्शिताभयामपि विभीषणाम्' (३१७)। 'जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतायुः' (१४३) 'समं द्विषतां धनुषां च जीवाकर्षणं योधाश्चक्रुः' (३५२)। 'मत्तमातङ्गकुम्भस्थलविगलित...' (५४, ९८, ११०, ३३१)। 'मकरन्दबिन्दुसंदोह...' (६१, ११०, २८१)।

पदेन पदान्तरेण च [1]बहुषु स्थलेषु उपमानभावं निबध्नतोऽस्य कवेर्न खलु स्फुटमवगच्छामो वयमान्तरमभिप्रायम् । श्लेषकदर्थनामुपेक्ष्य, यद्ययं तत्तद्वस्तूनि वर्णयति; तर्हि तदतीव शब्दतोऽर्थतश्च चारुतरं[2] संपद्यते । सम्यक् विमृश्यमाने च सुविपुलमेवं श्लेषकोलाहलमारचयतोऽस्य सुबन्धो-

'त्रिभुवनविजय...' (७१, १६४, २४३)। 'दोषानुबन्ध ..' (८४, १५९)। 'स्यन्दमानहरिचन्दनरस...' (९७) 'हरिचन्दनस्यन्दमानरस...' (१३४)। 'अनेकनल्वशतमध्वानं गत्वा' (९६) 'कतिपयपदमध्वानं गत्वा' (१२०) 'गव्यूतिमात्रमध्वानं गत्वा' (३०९) 'अनेकशतयोजनमध्वानं गत्वा' (३१३) 'कतिपयदूरमध्वानं गत्वा' (३३१)। 'प्रवृद्धगुल्म...' (१०६, ३१७)। 'अत्रान्तरे भगवानपि मरीचिमाली' (१२१, २०७)। 'शिखरावलग्नं तारागणमिवोद्वहन्' (९८, १३७) 'शिखरगतमुक्ताजालव्याजेन पुरयुवतिदर्शनागतं तारागणमिवोद्वहद्भिः' (२८७)। 'दात्यूहव्यूहमदकलकेलीकुहकुहाराव...' (१११) 'अप्रत्यूहदात्यूहकुहकुहाराव...' (३२८)। 'कुलायकुक्कुट...' (१११, ३२८)। 'निस्पन्दकरणग्रामः' (१२२, ३२४)। 'शरद्दिवसा इव' (१७५, ३५३)। 'चक्रवाकहृदय...' (२०८, ३१३)। 'अमृतार्णवनिमग्न...' (२०७, ३५०)। 'कालमनेकं निनाय' (३४३, ३५७)।

1. 'कामीव' (८७, ९९.) 'कामिन इव' (१२०) 'महाशृङ्गारीव' (१५८) 'षिद्ग इव' (१६२) 'कामिनीव' (२२२) 'विलासिनमिव' (३३६) 'शृङ्गारिणमिव' (३३६) 'समृद्धविलासिन इव' (३५३)।

2. दृश्यन्तां प्रभातवासवदत्ताविन्ध्यरेवाभागीरथीवसन्तसूर्यास्तमयचन्द्रोदयश्मशानवाटसागरकच्छोपान्तजलनिधिवर्षाशरत्समयवर्णनानि ।

स्तत्र सहायाः प्रायेण [1]कतिचन शब्दा एवेत्यवगम्यते। भूयसा च गद्यकवीनां पद्यानि न भवन्ति सम्यञ्चि; अस्य तु पद्यान्यतीव चारुतराणीति सहृदयानामनुवाचनेनैव स्फुरेदिति नात्रास्माकं निरूपणभारः। प्राचां बहूनामयमनुकुर्वन्नपि, विशिष्य शब्दतोऽर्थतश्च कालिदासं बाणं चानुसरतीति ज्ञायते[2]। अयं च परमास्तिकः; अस्य च महान्बहुमानो वैदिकसिद्धान्त इति स्फुटं ज्ञायते[3]। शिवनामानि[4] तत्र

1. अम्बर (१५०, १०७, १४८, २२१) पल्लव (५१, १२१, १३१, २२२) वंश (४८, १०४, १२८, ३१७, ३१८) वृष (२३, १२९, १४५, १४८) शर (८६, १४६, ३१६, ३४३) गोत्र (२९, १५२, ३३५, ३५५) पयोधर (६४, ६८, ६९, ७५, २२२, २८५, ३४४, ३४५) तारा (२२१, २२४) तारका (१५१, २२२, २२६, ३२३) प्रवाल (५२, १३०, ३१६) पावक (३२, ३९, १४१) आशा (२०, ४९, १७५, ३२५) इन्द्राणी (१३१, १६१, ३१४) पात्र (३४, ६१, ३३५) भुजङ्ग (१३२, १४०) जातिः (१४७, १५७) सुरता (१३२, २८८) रूप (१७५, ३१६) उत्कालिका (५२, ६५).

2. यथा चैतत्, तथा तत्र तत्र व्याख्यान एव निरूपितमिति तत एव द्रष्टव्यम्। निरूपयिष्यते चेदं क्वचित्क्वचिदुत्तरत्र।

3. दृश्यन्तां विचार्यन्तां च प्रदर्शितपूर्वाः काश्चन टिप्पण्यः।

4. विरूपाक्ष (८४, ९९) पशुपति (७६, ९९) महेश्वर (४४, ४८) हर (२१) वृषध्वजः (३१) शंकर (३९) ईशान (४४) शर्व (४९) रुद्र (८४) मल्लिकार्जुन (१००) महानट (१३२) खण्डपरशु (३३२) शूलपाणि (३१२)

तत्र स्मरन्नपि, अधिकं स्मरति [1]विष्णुनामानीति, मुक्तोपेतत्वं[2] विष्णोरेव वदतीति, श्लोकद्वयेन[3] च प्रथमतो विष्णुं स्तौतीति च हेतोर्विशेषतो विष्णावेव भक्तिरस्येति संभाव्यते । किंच विष्णुविषयकश्लोकयुगलेऽपि 'हरिः' इति, 'दामोदरः' इति च नाम गृह्णानः, [4]शिवविषयकपद्ये न शिवं नामतो निर्दिशति । आदिमे विष्णुपद्ययुगे च विष्णोः सर्वशक्तत्वादिकान् ईश्वरत्वनियतान गुणान्गर्भीकरोति ; अन्तिमे च शिवपद्ये न तथा आचरतीतीदमप्यस्य ऊहस्य भवत्यवष्टम्भकमिति वदामः ॥

अस्य च सुबन्धोर्गद्यं श्लेषरहितवर्णनस्थले प्रायेण उत्कलिकाप्रायम्[5] । क्वचित्क्वचिन्मुक्तकमपि भवति । वाग्धोरणी

1. नारायण (१८, ३१५, ३५६) विष्णु (४५, ४६, ८४, ३४२) राम (४२, ४७, १२५, २४४, ३३४) राघव (२९, ३१५, ३५६) कृष्ण (१७, १४१, २४०) नृसिंह (१७) कंसाराति (१८) सागरशायी (१९) चक्री (४१) वामन (७६) चक्रधर (८४) जनार्दन (९९) वैकुण्ठ (१२०) गोपाल (१२५) पुण्डरीकाक्ष (१३६) हरि (२४४) अच्युत (३३५)

2 'विष्णुमिव अनेकसुप्तोपेतम्' (पुटः ३४२)

3. (क) 'खिन्नोऽसि......हरिर्जयति' (पुटः १).
(ख) 'कठिनतर......दामोदरो भवतः' (पुटः ६).

4. 'स जयति...शूलपाणिरिव' (पुटः ७).

5. 'वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च । भवेदुत्कलिकाप्राय

च न बाणस्येवास्य प्रसन्नगम्भीरा; नापि दण्डिन इव शिथिलललिता । वृत्तिश्च भूयसा [1]आरभटी, क्वचन मध्यमकैशिकी च[2] । प्रायेण गौडीया च रीतिः[3] । प्रायो नारिकेलपाकः[4]; क्वचिच्च आम्रपाकः । बहुषु च स्थलेषु कतमो वा पाक इति परिच्छिद्य न वयमभिधातुं प्रभवामः । अस्य च श्लेष इव

---

चूर्णकं च चतुर्विधम् । आद्यं समासरहितं वृत्तभागयुतं परम् । अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।' इति दर्पणकारः । वामनस्तु, 'गद्यं वृत्तगन्धि चूर्णकमुत्कलिकाप्रायं च' 'पद्यभागवद्वृत्तगन्धि' 'अनाविद्धललितपदं चूर्णम्' 'विपरीतमुत्कलिकाप्रायम्' इति त्रीनेव भेदानङ्गीकरोति । तेनैव 'विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम् । यथा वा—कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इत्युदाहृतम् । इदं च वाक्यं 'रुधिरच्छटा' इति, 'भासुरकेसरिकदम्बकेन' इति च भेदेन वासवदत्तायां २३१ पुटे दृश्यते ।

1. 'अत्युद्धतार्थसंदर्भा वृत्तिरारभटी स्मृता ।'

2. 'मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी' इति विद्यानाथः ।

3. 'ओजःकान्तिगुणोपेता गौडीया रीतिरिष्यते ।' इति विद्यानाथः । 'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्' इति दण्डी । दृश्यताम्—१११, १५४, १६८, २२४, २८४, २८१, ३११, ३३१, पुटेषु समासभूयस्त्वम् ।

4. 'स नालिकेरपाकः स्यादन्तर्गूढरसोदयः ।' इति विद्यानाथः ।

यमके[1] अनुप्रासे[2] च महदस्ति कौतुकम् । यमकस्थलं तु अतीव क्लिष्टं सम्यगविदितभावकं कथंचिद्योजनीयान्वयं कृच्छ्रेण कल्प्यमानार्थकं च भवति । अनुप्रासश्च सर्वत्र रमणीयः, कचित्तु नितरां[3] सुन्दरश्च संवृत्तः ॥

अयं च सुबन्धुः कस्मिन्काले जन्म लेभे इति विषयमिदानीं विचारयामः । अयं किल कविकालनिर्णयविषयः सर्वेषामपि विमर्शकानां तया तया गमनिकया सुदूरमात्मलोचनं व्यापारयतामनवसाना अव्यवस्थिता च वादसमरभूमिः । केवलं रसभावचमत्कारादिष्वेव निजचक्षुर्निक्षिपतामस्मत्पूर्वपुरुषाणामत्र परमौदासीन्यमेव कष्टमभूदस्य निखिलस्यापि निदानं वादकोलाहलस्य । एतावता च समयेन पक्षप्रतिपक्षोद्भावनादिना पाश्चात्त्यैरस्मद्देशीयैश्च विमर्शकैरस्य कवेः कालविषये योऽयं निर्धारितः सिद्धान्तः, तं तावत्प्रथमतः प्रदर्शयामः ॥

1. दृश्यतां दूतीसंवादप्रकरणं (२६१–२७९) वसवदत्तान्तःपुरप्रमदाजनालापप्रकरणं च (२८९–२९८)

2. दृश्यतां 'स्फुटपाटवोत्कटविशङ्कटानेकविटपिविटपोत्कटस्फुटकुसुमपुटपिहितपदषट्पदावलिषु' (२३१) 'अतिचपलजलकपिकुलविहरणतुलितसलिलकणनिकरपरिमिलनशिशिरिततमालतलम्' (३४१) इत्यादि।

3. दृश्यतां ३४१. पुटः। तत्र हि ह्रस्ववर्णैनेव भूयसा घटयित्वा संपादितोऽनुप्रासः ।

अयं किल कविः श्रीविक्रमादित्यं स्मरति[1], स्मरति च कालिदासोपज्ञं शकुन्तलाशापवृत्तान्तम्[2] । श्रीविक्रमादित्यः, तत्सभालङ्कारभूतः कालिदासश्च क्रिस्तीयषष्ठशतकादिमभागे समुत्पन्नाविति ज्ञायते; यतः कलिवर्षेषु द्वाचत्वारिंशशतकसमुत्पन्नेन 'आल्बूणि' नाम्ना पारसीकैतिहासिकेन कोरूर्समरे श्रीविक्रमादित्येन विजिग्ये इति लिखितं वर्तते। कोरूर् युद्धं च क्रिस्तीयषष्ठशतकारम्भे समुद्भूतमिति चरित्रग्रन्थतो ज्ञायते। शत्रुञ्जयमाहात्म्यचीनयात्रिकलेखादिविमर्शेऽपि विक्रमादित्यः क्रिस्तीयषष्ठशतकारम्भे पञ्चमशतकावसाने वा स्थित इति निर्णीयते। किं च वासवदत्तायां क्रिस्तीयषष्ठशतकान्तिमभागसमुत्पन्नेन दण्डिना विरचिता[3]छन्दोविचितिः स्मर्यते । तथा नैयायिकशिरोमणिः श्रीमानुद्द्योतकरोऽप्यत्र स्मृतः[4], यः किल वात्स्यायनमुनिप्रणीते न्यायसूत्रभाष्ये दिङ्नागप्रभृतिभिर्दूषिते तदुद्दिधीर्षया न्यायवार्तिकं विरचयामास[5];

1. 'सारसवता....विक्रमादित्यं' (११-पुटः)

2. 'विफलमिव दुष्यन्तस्य कृते दुर्वाससः शापमनुबभूव शकुन्तला (पुटः-१९.१)

3. दृश्यतां १०८, १३५, ३०२, पुटेषु ।

4. 'न्यायविद्यामिव उद्द्योतकरस्वरूपाम्' (पुटः ३०३)

5. 'यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद । कुतार्किकाज्ञाननिवृत्तिहेतुर्विधीयते तस्य मया निबन्धः' इति न्यायवार्तिका-

यश्च षष्ठशतकसमुत्पन्न इति चरित्रवेदिनां प्रवादः । अपि च भदन्तधर्मकीर्तिकृतोऽलंकारो नाम ग्रन्थविशेषोऽप्यत्र स्मर्यते[1] । धर्मकीर्तिश्च षष्ठे शतके समुत्पन्नः प्रमाणसमुच्चयनाम्नो न्यायभाष्यखण्डनपरस्य दिङ्नागाचार्यकृतस्य ग्रन्थस्य व्याख्यां प्रमाणवार्तिकप्रमाणविनिश्चयप्रसन्नपादांश्च ग्रन्थान् चकार[2] । प्रमाणसमुच्चयव्याख्याच्छलेन च न्यायवार्तिकमपि [3]खण्डयामासेति श्रूयते । किंच वासवदत्ताग्रन्थोऽयं सुप्रतिष्ठिते

---

रम्भे । 'यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्, तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसंतमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकारेण स्वनिबन्धोद्द्योतेन तदपनीयते' इति, 'कुतार्किकैः दिङ्नागप्रभृतिभिराहितमज्ञानं कुतार्किकाज्ञानम्' इति च वार्तिकतात्पर्यटीका ।

1. कन्दर्पकेतुना साक्षाद्दृश्यमानाया वासवदत्ताया वर्णनावसरे 'बौद्धसंगतिमिव अलङ्कारभूषिताम्' इति पाठः, 'अलङ्कारो नाम धर्मकीर्तिकृतो ग्रन्थविशेषः' इति शिवरामव्याख्यानं च कलिकत्तामुद्रिते पुस्तके परं दृश्यते । तदनुसारेण एतत् । अस्मद्दृष्टेषु अन्येषु सर्वेष्वपि कोशेषु 'सत्कविकाव्यरचनामिव अलङ्कारप्रसाधिताम्' इत्येव दृश्यत इति तथैव पाठः स्वीकृतः । (पुटः ३०३).

2. केचित्तु बौद्धसंगतिर्नाम ग्रन्थोऽपि धर्मकीर्तिना विरचितः; प्राचीनालङ्कारिकेषु चायमन्यतमो धर्मकीर्तिरिति वदन्ति । दृश्यतां पीटर्सन्महाशयस्य सुभाषितावलिभूमिका ।

3. 'इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् । उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात्' इति तात्पर्यटीकायां वाचस्पतिमिश्रः ।

मीमांसकमते लिखित इति विमर्शनायां स्फुरति । मीमांसकमतं च कुमारिलभट्टेन पुनरुज्जीवितं सत् षष्ठशतकमध्यभाग एव प्रतिष्ठां समीचीं लेभ इति ज्ञायते । आतश्च पूर्वोक्तैर्हेतुभिरयं सुबन्धुः क्रिस्तीयषष्ठशतकादनन्तरमुत्पन्न इति निश्चीयते । क्रिस्तीयसप्तमशतकसमुत्पन्नो[1] बाणभट्टश्च हर्षचरिते वासवदत्ताग्रन्थं स्मरति[2] । बालरामायणादिकर्तुः राजशेखरस्य [3]पूर्वपुरुषः कविराजश्च राघवपाण्डवीयकाव्ये सुबन्धुं बाणभट्टात्प्राचीनं निर्दिशति[4] । ततश्च सुबन्धुरयं क्रिस्तीयषष्ठशतकमध्यमभागे तदन्तिमभागे वा जीवति स्मेति सिद्धं भवति ॥

अपरे त्वत्र प्रत्यवतिष्ठमाना एवं वदन्ति— यदुच्यते भट्टबाणादयं सुबन्धुः प्राचीन इति, तत्र महती पुनरस्माक-

1. बाणभट्टो हर्षवर्धनाश्रित इति सुप्रसिद्धम् । हर्षवर्धनश्च ६०६ क्रिस्ताब्दे राज्यभारं स्वीचकारेति ताम्रशासनतो ज्ञायते । दृश्यतामस्मदीया प्रियदर्शिकाभूमिका (८. पुटः).

2. 'कवीनामगलद्दर्पो नूनं वासवदत्तया । शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥'

3. 'न चान्ये गण्यन्ते तरलकविराजप्रभृतयो महाभागस्तस्मिन्नयमजनि यायावरकुले' इति बालरामायणे ।

4. 'सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः । वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा' इति प्रथमसर्गे एकचत्वारिंशः श्लोकः ।

मस्ति विप्रतिपत्तिः । तां च परस्तात्प्रस्तोष्यामः । इदं च पुनरस्माकं शङ्कास्पदम्, यत्सुबन्धुना स्मर्यमाणो विक्रमादित्यः किं शकारातिः सुप्रसिद्धो विक्रमार्कः, उत अन्यो वा कश्चिदिति । यतः श्रूयन्ते खल्वन्येऽपि [1]बहवो विक्रमविक्रमार्कबिरुदधारिणो नृपतयः । न जानीमः, कति वा अस्मदविदितास्तद्बिरुदधारिणो राजानः सन्तीति । यदि च सुप्रसिद्धो विक्रमार्क एव विवक्षितः, तर्हि तदीयः कालो नाद्यावधि इदंतया निर्णीत इति कथं तस्य षष्ठशतकोत्पन्नत्वमभ्युपेमः ॥

छन्दोविचितिश्च दण्डिना कृता वा न वेति, दण्डिकृतैव वा सा सुबन्धुना स्मृतेति च सुबहु विमर्शनीयम् ।

---

1. श्रीपृथ्वीकोङ्गणिमहाराजदानपत्रे 'रिपुतिमिरनिकरनिराकरणोदयभास्करः श्रीविक्रमप्रथितनामधेयः' इति कश्चित्, चालुक्यवंशविष्णुवर्धनदानपत्रे 'तद्भ्रातुर्विक्रमादित्यभूपतेस्तनयः' 'तं जित्वा चालुक्यभीमतनयो विक्रमादित्य एकादश मासान्' इति द्वौ च स्मर्यन्ते । (इण्डियन् आण्टिक्केरी—२. १५६–१५९; १४. ५०—५५) तथा 'पार्वतीशार्ङ्गिपद्मद्वयनिहितमतिर्यो विक्रमादित्यनामा' इति प्राचीनलेखमालायां ७५ लेखे कश्चित् विक्रमादित्यः प्रस्तूयते । भोजपितुः सिन्धुराजस्यापि विक्रमार्क इति बिरुदनाम आसीदित्यपि श्रूयते । समुद्रगुप्तपुत्रो द्वितीयश्चन्द्र गुप्तोऽपि विक्रमार्कबिरुदं धारयामासेति रमेशदत्तमहाशयः स्वकीये प्राचीनभारते विलिखति ।

काव्यादर्शे हि 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा। छन्दोविचित्यां सकलस्तत्प्रपञ्चो निरूपितः। सा विद्या नौस्तितीर्षूणां गम्भीरं काव्यसागरम्' इति दृश्यते। न ह्येतावता छन्दोविचितिर्दण्डिना कृतेत्यभ्युपगन्तुं द्रढीयः प्रमाणं पश्यामः। 'त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः। त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः' इति हारावलीस्थश्लोकानुरोधेन त्रयाणां दण्डिप्रबन्धानामावश्यकतया, संप्रति च दशकुमारचरितकाव्यादर्शयोर्द्वयोरेव समुपलम्भेन छन्दोविचितिरपि तेनैव कृता भवेदित्यूह्यत इति नवीनाविमर्शकोक्तिस्तु न हृद्या। तथा सति कलापरिच्छेदस्यापि काव्यादर्शे दृश्यमानतया तस्यापि तत्कृतत्वस्वीकारापत्त्या प्रबन्धानां चतुष्ट्वापत्तिरिति न मनोरथसिद्धिः। अनयोः कतरस्य तत्कृतत्वाङ्गीकार इत्यत्र न वयं पश्यामो बलवतीं विनिगमनाम्। व्याख्यातारस्तु छन्दोविचितिमन्यदीयामेव मन्यन्ते। इत्थं हि ते विलिखन्ति— 'छन्दांसि विचीयन्ते विज्ञायन्ते अनयेति छन्दोविचित्यां पिङ्गलादिकृतछन्दोग्रन्थे' इति। अनेन च छन्दोविचितिर्नाम न खल्वेको ग्रन्थ इति हि तेषामाशयः स्फुरति। वस्तुतस्तु के नाम ते दण्डिप्रबन्धास्त्रय इति विषयमस्मदीयायां दशकुमारचरितभूमिकायां निपुणं निरूपयिष्यामः। अस्तु वा छन्दोविचितिर्दण्डिकृता

काचित् । तथापि सैव सुबन्धुना गृहीतेति परिच्छेदेन वक्तुं न शक्यते; यतः पूर्वमेव काचिच्छन्दोविचितिरासीदित्यवगम्यते । तथा च बृहत्संहितायां वराहमिहिरः— 'विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्यमेतावत् । श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः' इति । अत्रापि यौगिको वा छन्दोविचितिशब्दः । तत्सर्वथा नास्ति बलवान्हेतुः, येन दण्डिकृतां छन्दोविचितिं सुबन्धुः स्मरतीत्यभ्युपगच्छामः ॥

यदुच्यते हर्षचरिते बाणभट्टेन सुबन्धुकृता वासवदत्ता स्मृतेति ; तन्न वयमंशतोऽप्यङ्गीकुर्मः । बाणेन हि स्मृता वासवदत्ता काचिदाख्यायिका, या सर्वथा सुबन्धुविरचितायाः कथाया वासवदत्ताया विभिन्ना । अन्या च गद्यकाव्येषु आख्यायिका, अन्या च कथा नाम । [1]पूर्वसंदर्भपर्यालोचनायां च हर्षचरिते वासवदत्तापदेन बाणस्तावदाख्यायिकामेव तन्नाम्नीमभिप्रैतीति स्पष्टमवगम्येत विमर्शकैः । आसीदाख्यायिका काचन चिराद्बहोर्वासवदत्ता नामेति संभाव्यते; यतः [2]स्मरति भगवान्पतञ्जलिर्व्याकरणभाष्यका-

1. 'कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वरैः' इति खल्वव्यवहितपूर्वपद्योत्तरार्द्धम् ।

2. 'कतूक्थादिसूत्रान्ताट्ठक्' (४, २, ६०) इति सूत्रे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति वार्तिकव्याख्यावसरे 'आख्यायिका—

रस्तादृशीमाख्यायिकाम् । संभाव्यते च सेयमाख्यायिका प्रद्योतसुतामुदयनपत्नीं वासवदत्तामधिकृत्य स्यादिति । सा किल वासवदत्ता सुप्रसिद्धा । भूयान्खल्ववकाशस्तया तत्पुत्रेण च बृहत्कथायामाक्रान्तः । तस्या एव च नाम तत्तत्कविविरचितेषु विषयतो नामतश्चास्मद्विदितेषु अधिकमुपलभ्यते काव्येषु[1] । हर्षचरितेऽपि हरिचन्द्रसातवाहनप्रवरसेनभासकालिदासानामिव सुबन्धोर्नामानुल्लेखेन वासवदत्तापदमात्रप्रयोगो नूनमुक्तमर्थमुपबृंहयतीति च ब्रूमः । किंच रसभावनिरन्तरवचनचतुरो बाणसदृशः कश्चिन्महामतिरतिक्लेशकदर्थितवाग्विसर्गमविशालमतिं सुबन्धुसमानमन्यं कविमात्मना प्रशंसतीत्येतन्न खल्वस्माकमवतरति श्रद्धापदवीम् । अपि च सन्ध्यावर्णनप्रकरणे यानि 'रोमन्थमन्थर—' इत्यादीनि

वासवदत्तिकः' इति भाष्यम् । 'वासवदत्तिक इति । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । अधिकृत्य कृते ग्रन्थे इत्यत्रार्थे वृद्धाच्छः । तस्य लुबाख्यायिकाभ्यां बहुलमिति लुप् । ततोऽनेन ठक्' इति कैयटः । 'अधिकृत्य कृते ग्रन्थे' इति सूत्रेऽपि 'लुबाख्यायिकाभ्यो बहुलम्' इति वार्तिकमुपादाय 'अधिकृत्य कृते ग्रन्थ इत्यत्र लुबाख्यायिकाभ्यो बहुलं वक्तव्यः । वासवदत्ता' इति भाष्यम् ।

1. स्वप्नवासवदत्तम् , तापसवत्सराजम् , उदयनचरितम् , रत्नावली, प्रियदर्शिका, इत्येवं दृश्यकाव्येषु, शक्तिभद्रकृते उन्मादवासवदत्ताख्यश्रव्यकाव्ये च ।

वाक्यानि [1]वासवदत्तायां दृश्यन्ते, तान्येव [2]हर्षचरितेऽपि सन्ति । एवं [3]बहुत्र स्थलेषु सन्ति शब्दतोऽर्थतश्च संवादाः सुबन्धुबाणभट्टयोः । तत्र चैकमुपजीवता भाव्यमपरेण । केन को नाम अनुक्रियतामिति विचारणायां बाणः सुबन्धुना अनुकृत इत्येव वक्तव्यं भवति ; न पुनर्युज्यते सुबन्धोः स्वमपहृतं बाणेनेत्याभिधातुम् । काव्यार्थचोरान् [4]जुगुप्समानो बाणः शब्दतोऽर्थतश्च महदिदं चौर्यमात्मना कुर्वन्नविशङ्कमलिखद्गद्यकाव्यमिति को हि नाम द्वयोरपि तारतम्यवेदी सहृदयः संमन्येत । किंच, 'कवीनामगलद्दर्पः' इत्ययं श्लोको विना कलिकत्तामुद्रितपुस्तकं सर्वेष्वप्यन्येषु अस्मत्संपादितेषु तालपत्रलिखितेषु ग्रन्थान्ध्राक्षरमुद्रितेषु च वासवदत्तापुस्तकेषु अवसाने योजितो दृश्यते । दत्ता च वाक्यान्तराणां पद्यान्तराणामिव चास्यापि ग्रन्थघटकत्वसू-

---

1. २१९ पुटः । 2. निर्णयसागरमुद्रितस्य हर्षचरितस्य ८९, ९०, पुटौ । (द्वितीयोच्छ्वासान्ते).

3. वासवदत्तायां 'गुरुदारहरणम्—' पुटः ३३७—३४०; हर्षचरिते तृतीयोच्छ्वासारम्भे पुटः ९७—१००. संवादान्तराणि च बहूनि व्याख्यानतोऽवगन्तव्यानि ।

4. 'सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे । उत्पादका न बहवः कवयः शरभा इव ॥ अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः । अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥' इति हर्षचरितारम्भे ।

चिका क्रमप्राप्ता संख्या । अर्वाचीनानां च कवीनां प्रायेण दृश्यते प्रबन्धावसाने स्वोत्कर्षपरनिन्दाकथनकुतूहलम्[1] । तथा च 'कवीनाम्——' इति पद्यं सुबन्धुविरचितं सत् हर्षचरिते प्राचीनकविप्रशंसापद्येषु कथमपि प्रवेशमलभत वा, उत बाणकृतमेव तदेतत्पद्यं लेखकपरम्परया कथंचित् वासवदत्तायामप्यवसाने स्वयमवकाशमधिजगाम वेति न वयमिदानीं किमपि परिच्छिद्य वक्तुं प्रभवामः । किंच, स खलु कोऽपि समय आसीत्काव्यलोकस्य, यत्र कवयो भूयसा सभङ्गैरभङ्गैश्च क्लिष्टैरर्थविधुरैश्च श्लेषैः कोलाहलमारचयन्तः कृतार्थभावमन्वभूवन । तादृशे समये समुत्पन्नः किल त्रिविक्रमभट्टः सर्वात्मना वासवदत्तानुकारिणं प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासं नलचम्पूनामकं प्रबन्धमारचयामास । मनोगतौ वर्णनायां श्लेषयोजने पदप्रयोगे [2]कथासंक्षेपेण वर्णनादरणे च सुबहु साम्य-

1. 'हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे । अपि शिशुरकविः कविः प्रभावाद्भवति कविश्च महाकविः क्रमेण' इति रत्नाकरः । 'सद्वृत्तार्थं च पुस्तकं परिचितं कीर्णैर्वचोदेवताभूषामेचक-मौक्तिकैरिव हठाक्षिप्तसंश्लेषैरक्षरैः । व्याहारेण हृदन्तरालविहरद्विद्यावधू-पुरध्यानभ्रान्तिकृता सततसादपठत्स्वं काव्यमव्याकुलः' इति मङ्खकः । 'ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु' इति नैषधकर्ता श्रीहर्षः ।

2. यावन्नलवृत्तमेव कथा सप्तभिर्विस्तृतैरुच्छ्वासैर्निरूपिता ।

मस्ति नलचम्पूवासवदत्तयोरिति सकृदनुवाचनेनैव सुगममिदं विमर्शकानाम्[1]। त्रिविक्रमोऽपि सरस्वत्यनुग्रहेणैव सुबन्धुर्वासवदत्तामिव नलचम्पूं चकारेति श्रूयते कापि किंवदन्ती[2]। स च त्रिविक्रमो बाणादर्वाचीन एव; यतः सोऽयं बाणं[3] कादम्बरीं[4] च स्मरति। इत्थं च विमृश्यमाने, तादृशे कालपरिवर्त एव युज्यते सुबन्धोरप्यवस्थानसंभावना। कविराजपद्येनापि न सुबन्धोर्बाणात्प्राचीनता प्रतीयते। तत्र पद्ये सुबन्धोः प्रथमतः पश्चाद्बाणस्य च ग्रहणं तु, श्लेषादिसंकटेषु बाणापेक्षयापि सुबन्धोरधिकतरप्रवृत्तिदर्शनेनेति न तावता पूर्वोक्तार्थसिद्धिः। कथाद्वयं श्लेषेण निर्वोढुं प्रवृत्तस्य कविराजस्य युक्त एव हि श्लेषमयजीविते सुबन्धौ पक्षपातः। ऐच्छिको वा तत्र पूर्वापरनिर्देश इति न तेन कस्याप्यर्थस्य सिषाधयिषा युक्ता। एवमेव राजशेखरेणापि योग्यतां कालपौर्वापर्यं वा अगणयित्वा ऐच्छिकमेव कवीनां पूर्वापरनिर्देश-

1 दृश्यन्तां निर्णयसागरप्रथममुद्रितस्य नलचम्पूग्रन्थस्य ११, १७, २६, ४४, ५०, ५२, ६७, ७१, ७५, ८४, ९७, ९९, ११४, १३३, पुटाः, पुटान्तराणि च।

2. दृश्यतां नलचम्पूभूमिकायां विवृतिनामकबृहट्टीकात उद्धृत्य योजितः किंवदन्तीभागः।

3. 'शश्वद्बाणद्वितीयेन...रञ्जितो जनः॥' (१४ पद्यम् प्रथमोच्छ्वासः).

4. 'कादम्बरीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः' (पुटः १२)

मादृत्य [1]पद्यद्वयं व्यरचि । एतेन [2]मङ्खकपद्यमपि विचारितप्रायम् । किंचैवं सति वीरनारायणचरिते विद्यमानात् [3]वामनबाणपद्यात्सेत्स्यत् बाणादर्वाचीनत्वं सुबन्धोः केन वार्यताम् । अप्रतिपत्तिर्वा भवतु पुनरुभयोरप्यनयोः ॥

यच्चोच्यते राघवपाण्डवीयकर्ता कविराजो राजशेखरस्य पूर्वपुरुष इति, तत्र नास्माकं प्रसीदत्यन्तरात्मा । यतोऽयं स्वकीये काव्ये स्मरति मुञ्जराजं धारानगरीं [4]च । भोजपिता-

---

1. (क) 'सुबन्धौ भक्तिर्नः क इव रघुकारे न रमते धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् । विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिरस्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥' (सुभाषितहारावली, सूक्तिमुक्तावली) (ख) 'भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कविर्माघो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः । दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥' (शार्ङ्गधरपद्धतिः).

2. 'मेण्ठे स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः । वाग्देव्या विरमन्तु मन्तुविधुरा द्राक् दृष्टयश्चेष्टते शिष्टः कश्चन स प्रसादयति तां यद्वाणिसद्वाणिनी ॥' (श्रीकण्ठचरितम्. सर्गः २ पद्यम् ५३)

3. 'प्रति[illegible]कविभेदनबाणः कवितातरुगहनविहरणमयूरः । सहृदयलोकसुबन[illegible] [illegible]यति श्रीभट्टबाणकविराजः ॥'

4. '[illegible]नीविद्याशोभिनो यस्य श्रीमुञ्जादियती भिदा । धारापतिरसावासीदयं [illegible]धरापतिः ॥' (सर्गः १ पद्यम् १८).

महः[1] सिन्धुराजजनको वाक्पतिराजापरनामधेयो[2] मुञ्जराजो हि क्रिस्ताब्दीयदशमशतकचरमभागे स्थित इति [3]शिलालेखै र्ज्ञायते । राजशेखरश्च क्रिस्ताब्देषु ९५९ वर्षात् पूर्वभावीति [4]निश्चीयते । किंच धारानगरी सुप्रसिद्धेन भोजराजेनैव राजधानीत्वं नीतेत्यवगम्यते[5] । कविराजश्चायं मुञ्जं भोजपितामहमेव धाराधीश्वरं विलिखति । ततश्च संभाव्यते कविरा-

1. (क) दृश्यन्तां सुप्रसिद्धभोजराजदानपत्रम् , परमारवंश्यानां नृपान्तरणां च दानपत्राणि प्राचीनलेखमालायाम् ।

(ख) 'दिवं यियासुर्मम वाचि मुद्रामधत्त यां वाक्पतिराजदेवः । तस्यात्मजन्मा कविबान्धवस्य भिनत्ति तां संप्रति सिन्धुराजः ॥' (नवसाहसाङ्कचरितारम्भे). मुञ्जो भोजपितृव्य इत्यपि बहूनां संमतम् । तथैव च समुपलभ्यते प्राचीनलेखमालायां ११८ लेखे । एतत्तत्त्वं तु अन्यदा विचारयिष्यामः ।

2. दृश्यतां प्राचीनलेखमालायां प्रथमलेखस्य टिप्पणी ।

3. दृश्यन्तां प्राचीनलेखमालायां १, २, ३, ११८, लेखाः ।

4. दृश्यतां श्रीदुर्गाप्रसादस्य कर्पूरमञ्जरीभूमिका ।

5. भोजजनकसिन्धुराजमधिकृत्य पद्मगुप्तमहाकविना विरचिते नवसाहसाङ्कचरिते, 'अस्ति क्षितावुज्जयिनीति नाम्ना पुरी विहायस्यमरावतीव । बबन्ध यस्यां पदमिन्द्रकल्पो महीपतिर्वाक्पतिराजदेवः' इत्यारभ्य बहुभिः श्लोकैरुज्जयिनी वर्णिता । अनन्तरं च 'राजास्ति तस्यां स कुवलेन्द्रनिकुञ्जविश्रान्तयशस्तरङ्गः । भास्वान्ग्रहाणामिव भूपतीनामग्रणीर्मोन्त्रौख्यो धुरि सिन्धुराजः' इति दृश्यते ।

जोऽयं भोजादनन्तरमुत्पन्नः स्वदृष्ट्या मुञ्जमपि धाराधीश्वरं चकारेति । कविराजोक्तस्तत्प्रभुः स्मरहरधरणीसंभवान्ववायालंकारः कामदेवराजश्च कदा समुत्पन्न इति न ज्ञायते ॥

किं च वासवदत्तायां मनोजवनामकतुरगवर्णनप्रकरणे[1] स्थितम् 'इन्द्रायुध' पदं व्यञ्जयसरण्या अपि नाम कादम्बर्यां चन्द्रापीडस्य इन्द्रायुधमश्वं स्पृशतीति बलवानस्माकमस्ति संशयः । तथा च निपुणं निष्पक्षपातं च निरूपयन्तो वयं बाणदर्वाचीनमेव सुबन्धुमभिमन्यामहे । बाणेन उक्ता वासवदत्ताख्यायिका कुत्रेति यदि पृच्छ्यते, तर्हि सा भट्टारहरिचन्द्रगद्यबन्धेन समं सुखासिकामनुभवतीत्युत्तरं वदामः । अहो बत महदिदं विषादस्थानम्, यद्भारतवर्षे तत्तद्ग्रन्थकर्तृभिः स्मृता बहवः प्राञ्चः प्रबन्धाः प्रलीना अभूवन् । 'बहवो न्यायग्रन्थाः संस्कृतभाषाविरचिताः टिबेट्देशे तद्देशभाषया अनूदिता इति तैरनुवादैरेव ज्ञायते । तेषां च मूलग्रन्थानां नामान्यपि न ज्ञायन्ते महापण्डितैरपि' इत्युक्त्वा तेषामष्टाविंशतेर्ग्रन्थानां नामानि मञ्जुभाषिण्यां मासपञ्चकात् प्राक् प्रकटितानि च समयेऽत्र स्मरामः । किं बहुना । क्रिस्तीयपञ्चदशशताब्द्यामुत्पन्नेन साहित्यदर्पणकृता स्मृतान्यपि हि बहूनि दृश्यानि श्रव्याणि च काव्यानि अन्ये च अनेके ग्रन्था:

1. दृश्यतां २०९ पुटः ।

सांप्रतं न समुपलभ्यन्ते । चिरादिव किलायं रूढमूलः संप्रदायो भारते वर्षे, यत्पण्डिताः स्वशिष्येभ्योऽप्यप्रदाय प्रौढांस्तत्तद्ग्रन्थानन्ततो वल्मीणामेव कल्पयन्त्याहारमिति । तत्रेदमसाधारणमाश्चर्यकरं वा, यद्बाणभट्टेन दृष्टाया आख्यायिकायाः सांप्रतमनुपलम्भ इति । केचित्तु हर्षचरिते 'भट्टारहरिचन्द्रस्य पद्यबन्धो नृपायते' इति यत्र कुत्रचन स्थितं पाठान्तरमवलोक्य तादृशश्च पद्यप्रबन्धो हरिचन्द्रकविकृतधर्मशर्माभ्युदयकाव्यमेवेति मन्यन्ते । तन्तु न समीचीनम्; हरिचन्द्रो हि गुणभद्राचार्यविरचितमुत्तरपुराणमभिवीक्ष्य जीवन्धरचम्पूं चकार । स एव खलु धर्मशर्माभ्युदयस्यापि काव्यस्य कर्ता । गुणभद्राचार्यश्च क्रिस्ताब्देषु ८०.७ वर्षे उत्तरपुराणं परिपूरयामास[1] । तथा च ८९७ वर्षादप्यनन्तरं जातो धर्मशर्माभ्युदयकर्ता हरिचन्द्रः कथं क्रिस्ताब्दीयसप्तमशतकप्रारम्भसमुत्पन्नेन बाणभट्टेन स्वप्रबन्धे स्मर्यताम ।

यच्च कुमारिलभट्टेन मीमांसकमते सुप्रतिष्ठापिते समनन्तरमयं कविः समभूदिति, तत्र नास्माकं विप्रतिपत्तिः । परं तु इदमत्र वदामः— कुमारिलभट्टः श्रीशंकराचार्यसमकालिक इति सर्वसंप्रतिपन्नम । श्रीशंकराचार्याणां कालश्च क्रिस्तीया-

1. सर्वमिदमस्मन्मित्रवर्यैः श्रीकुप्पुस्वामिशास्त्रिभिर्जीवन्धरचम्पूभूमिकायां विस्तरेणोपपादितम् ।

ब्दारम्भात्पूर्व इति, क्रिस्ताब्देषु सप्तमं शतकमिति, अष्टमी शताब्दी इति, नवमं वर्षशतकमिति च परपक्षप्रतिक्षेपपुरःसरं वादकोलाहलमारचयतां विमर्शकानां विदुषां नाद्यापि विश्रान्ता विवादपद्धतिरिति कथं नाम तत्समकालिकस्य भट्टकुमारिलस्य क्रिस्ताब्दीयषष्ठशतकसमुत्पन्नत्वं दृढं वयं विश्रसिमः— इति ॥

किंच यावद्भवभूतिनाटकं प्राचीनेषु बाणादीनां प्रबन्धेषु न खलु दृश्यते तावान्बौद्धमतोपरि प्रद्वेषः, यावानस्ति वासवदत्तायां प्रदर्शितः सुबन्धुना । बौद्धमतोपरि ब्राह्मणानां प्रद्वेषश्च न प्रथमं समये आसीन्; परं तु कालक्रमेणैव सोऽयं संबभूवेति खल्वैतिहासिका वदन्ति । इतोऽपि वदामो वयं बाणादर्वाचीन एव सुबन्धुरिति ॥

इदं पुनर्ब्रूमः— यत्काव्यालंकारसूत्रकर्तुर्वामनादयं प्राचीन इति; यतो गणभेदनिरूपणावसरे वामनेन उत्कलिकाप्रायस्योदाहरणतया 'कुलिशशिखर—' इति वासवदत्तावाक्यं किंचिदिव भेदेन निवेशितं [1]सूत्रवृत्तौ । काव्यालंकारकर्ता वामनश्च कश्मीरमहीपतेर्जयापीडस्य मन्त्री क्रिस्ताब्दीयाष्टमशतकमध्यभागस्थित इति [2]विश्वस्यते ॥

1. दृश्यतां भूमिकायां २९ पुटे टिप्पणीशेषः ।

2. दृश्यतां निर्णयसागरमुद्रितकाव्यालंकारसूत्रभूमिका ।

यत्तु काव्यालंकारसूत्रवृत्तौ '[1]अर्थस्य प्रौढिरोजः' इति सूत्रव्याख्यानावसरे 'साभिप्रायत्वं यथा— सोऽयं संप्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः। आश्रयः कृतधियामित्यस्य सुबन्धुसाचिव्योपक्षेपपरत्वात्साभिप्रायत्वम्' इति दृश्यते; तत्र चन्द्रगुप्तः कोऽसौ; कश्च तदीयः पुत्र इति न ज्ञायते। प्रसिद्धचन्द्रगुप्त एवात्र गृहीत इति तु न वक्तुं शक्यते। चन्द्रगुप्तो हि चरमं नन्दं हत्वा चाणक्येन सिंहासनमारोपितः। चन्द्रगुप्तमारभ्य यावद्बृहद्रथं दशभिर्नृपतिभिरलंकृतो मौर्यवंशः। दशानां च तेषां राज्यभरणकालः सप्तत्रिंशदुत्तरं वत्सराणां शतम्[2]। चरमं च मौर्यवंशनृपतिं बृहद्रथं तदीयः सेनापतिः पुष्पमित्रो निहत्य स्वतनयमग्निमित्रं सिंहासनमारोप्य स्वयं परं यथापुरं सेनापतित्वमेव[3] अध्यातिष्ठत्। अयमेव च अग्नि-

1. निर्णयसागरमुद्रितस्य पुस्तकस्य ३२ पुटः। 2. 'नवैव तान्नन्दान्कौटिल्यो ब्राह्मणः समुद्धरिष्यति। ... कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति। ...एवं मौर्या दश भूपतयो भविष्यन्ति। अब्दशतं सप्तत्रिंशदुत्तरं ते पृथिवीं भोक्ष्यन्ति...' इति विष्णुपुराणे चतुर्थांशे चतुर्दशाध्यायः।

3. 'ततः पुष्य(ष्प)मित्रः सेनापतिः स्वामिनं हत्वा राज्यं करिष्यति। अस्यात्मजोऽग्निमित्रः' इति विष्णुपुराणम् (४, १४, ९—१०) 'स्वस्ति यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थमायुष्मन्तं पुत्रमग्निमित्रम्' इति मालविकाग्निमित्रे ५-अङ्के।

मित्रः [1]कालिदासेन मालविकाग्निमित्रीये नायकतां प्रापितः। कालिदासोपज्ञं च शकुन्तलाशापवृत्तान्तं सुबन्धुरयं वासवदत्तायां प्रस्तौतीति पूर्वमेव निरूपितम्। तदेवं विमृश्यमाने, चन्द्रगुप्तस्य तत्तनयस्य च कालात् शताधिकेषु गतेषु वत्सरेषु राजभावं प्राप्तस्य अग्निमित्रस्य नायकतामुपवर्णयतः कालिदासादप्यनन्तरं जातः सुबन्धुः प्रसिद्धचन्द्रगुप्ततनयस्य साचिव्यमध्यास्तेति कथंकारं युज्यते कथमप्युपपादयितुम् ॥

वस्तुतस्तु काव्यालंकारसूत्रवृत्तिपुस्तकेषु केषुचित् 'वसुबन्धुसाचिव्योपक्षेप——' इति, केषुचित् 'वस्तुबन्धुसाचिव्य——' इति च दृश्यते। वस्तुबन्धुरित्येतदपि वसुबन्धुरिति लेखनीये लेखकादिप्रमादेन पतितं स्यात्। दिङ्नागाचार्यगुरोरसङ्गस्य सहोदरः, विक्रमार्कसभायां वैदिकमतानुसारिभिर्वादकेल्यां निर्जितस्य मनोरथस्य शिष्यश्च कश्चन वसुबन्धुरासीदित्यवगम्यते[2]। समुद्रगुप्तपुत्रो द्वितीयश्चन्द्रगुप्तोऽपि विक्रमार्क इति बिरुदनाम स्वीचक्रे इति च चरित्रग्रन्थादवसीयते। तत्कोऽयं

1. मालविकाग्निमित्रं कालिदासकृतमेवेति स्थापितं दृश्यतां यस्. पि. पण्डितमुद्रितमालविकाग्निमित्रभूमिकायाम्।

2. दृश्यतां आर् सि दत्तमहाशयस्य प्राचीनभारतम्, प्रयागात्प्रचार्यमाणायाः सरस्वत्या नाम हिन्दीमासपत्रिकाया अष्टमसंपुटस्य दशमसंचिकायां प्रकटितम्, 'चीन- जापान में संस्कृतग्रन्थ' इति लेखनं च।

चन्द्रगुप्तः, कोऽसौ विक्रमार्कः, क एष वसुबन्धुरिति न वयं निश्चित्य सांप्रतं किमपि वक्तुं शक्नुमः। सर्वमपि विषयमापादचूडमवधानेन सुनिपुणं विमृश्य प्रसङ्गान्तरे एतत्तत्त्वं निरूपयिष्यामः। एतावता च पूर्वोक्तेषु सर्वेष्वपि हेतुषु निपुणमालोड्यमानेषु, क्रिस्ताब्दीयसप्तमशतकादिमभागोत्पन्नबाणभट्टादर्वाचीनः, अष्टमशतकमध्यमभागोत्पन्नालंकारिकवामनात्प्राचीनश्च वासवदत्ताकर्ता सुबन्धुरिति सिद्धम् ॥

अथेदानीं वासवदत्तां किंचिद्विमृशामः। अत्र हि प्रतिपादितायाः कथायाः किं मूलमिति न ज्ञायते। तत्र तत्र स स कथाभागः प्राचीनं तत्तत् कथाशकलमुपजीवति। अपि नाम जरतीभिः कर्णपरम्परया श्रुतवतीभिः शिशुजनस्वापाय कथ्यमानं कथाशरीरमेष सुबन्धुरात्मकाव्यमारोपयामास? न खलु बृहत्कथायां श्रूयमाणा कविभिश्च बहुभिरात्मकाव्येषु प्रस्तूयमाना वासवदत्ता सुबन्धुप्रबन्धस्य नायिका भवितुमर्हति। अन्यथा हि तस्याश्चरितं बृहत्कथाविवर्तभूतात्कथासरित्सागरादवगम्यते। तथा हि——

आसीदर्जुनात्सप्तमः कौशाम्ब्यामुदयनो नाम राजा। स च कुलक्रमागतं वत्सराज्यं प्राप्तोऽपि विनोदलालसो विन्यस्य विश्वस्तेषु मन्त्रिषु राज्यभारं स्वयं सर्वदापि वीणां वादयन् मृगयामटन् गजांश्च जीवतो गृह्णन् कालं यापयामास। अस्मिन्नेव च समये

उज्जयिनीपतिश्चण्डमहासेनो[1] नाम राजा स्वकन्यां वासवदत्तां वत्सराजाय दित्सुरपि निराकरणभिया प्रार्थनाविमुखस्तत्रोपायान्तरमलभमानः कपटहस्तिप्रयोगेण वत्सराजं स्वपुरीं प्रापय्य निगलितमेनं स्वकन्याया वीणाचार्यमकरोत् । गच्छता च कालेन सोऽयमुदयनो नितान्तमनुरक्तामभिवीक्ष्य वासवदत्ताम्, यौगन्धरायणेन मन्त्रिणा दत्तस्य योगस्य महिम्ना स्रंसितबन्धनस्तदुक्तरीत्यैव सर्वमनुतिष्ठन्, कदाचिन्निशीथे पूर्वमेव ग्राहितसंकेतया तया वासवदत्तया तत्सख्या च काञ्चनमालया सह करेणुमधिरुह्य स्वपुरीमाजगाम[2] ॥ — इति ॥

**प्रसिद्धा हि वासवदत्ता उज्जयिनीपतेः पुत्री उदयनेन वत्सराजेन परिणीयते । इयं खलु कुसुमपुरपतेः शृङ्गारशेखरस्य सुता कन्दर्पकेतुना उपयम्यते । उदयनस्य च पिता सहस्रानीकः । कन्दर्पकेतोश्च जनकश्चिन्तामणिः । नायिकयोः परमुभयोरस्ति साम्यं नामधेयेन । सापि पितुरविदिता गूढं पत्या स्वपुरीं नीयते; इयमपि तथैव परिणेत्रा पितृनगरादपवाह्यत इत्यस्मिन्नंशे विद्यते संवाद उभयोः । सुबन्धुश्च वास-**

---

1- 'प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे' इति कालिदासः । एवमेव अन्येऽपि वासवदत्तां प्रद्योतपुत्रीमाचक्षते । कथासरित्सागरे बृहत्कथामञ्जर्यां च चण्डमहासेनपुत्रीति निरूपितम् । बृहत्कथायां कथं वा वर्तत इति न जानीमः ।

2. एषा च कथा प्रियदर्शिकाभूमिकायां विस्तरेण सुस्पष्टं विलिखितास्माभिः ।

वदत्तां पित्रा पुष्पकेतवे दित्सितामेव कन्दर्पकेतुरादाय जगामेति कथामुपनिबध्नाति। कथासरित्सागरबृहत्कथामञ्जरीभ्यां तु प्रसिद्धवासवदत्ताजनक एव वत्सराजाय स्वकन्यां दित्सति स्मेति ज्ञायते। भवभूतिस्तु 'वासवदत्ता च पित्रा संजयाय राज्ञे दत्तमात्मानमुदयनाय प्रायच्छदित्यादि' इति मालतीमाधवे विलिखति। तन्न जानीमः कथं वा वासवदत्ताचरितं बृहत्कथायां वर्तत इति। सुबन्धुना च, मन्यामहे, न किल बृहत्कथा साक्षादवलोकिता प्रमाणीकृता वा। 'अपूर्वा बृहत्कथा मया श्रुता, प्रत्यक्षीकृता च' इति शुकमुखेन वदन् सुबन्धुः–– प्राचीना बृहत्कथा आत्मना श्रुतमात्रैव, न तु प्रत्यक्षिता। स्वगृहीतः कथाभागश्च कर्णाकर्णिकया स्वयं श्रुतः काव्यमारोपितः–– इति सूचयतीवेति प्रतिभाति॥

अयं च सुबन्धुरन्यकविवद्यथासंप्रदायमादितश्चतुर्भिर्मङ्गलं विधाय, परस्तादष्टभिः पद्यैः सुजनान् प्रशंसति; निन्दति च दुर्जनान्। अयं सुजनदुर्जनप्रशंसानिन्दाचारः प्रथमतो गद्यकाव्यम्, कालक्रमेण च पद्यकाव्यमपि क्वचित्क्वचिदाचक्राम। अत्र विद्यमानानि द्वादशापि पद्यान्यतिरमणीयानि; परं तु प्रशंसानिन्दापद्येषु विषयपर्यालोचनया तत्तत्पद्यानां यथोचितं तत्तत्स्थानेषु विनिवेशो न कृत इति परं वक्तव्यं

भवति । श्रीविक्रमार्कविरहेण सूक्तीनां जातं दुर्जातं सकरुणमान्तरेण भावेन सुबन्धुरयमनुशोचति । अनन्तरं च कथानायकपितरं चिन्तामणिराजं महता प्रबन्धेन वर्णयति । अन्यगद्यकविवदयमप्येतद्वर्णने परिसंख्यां श्लेषं व्यतिरेकम् उत्प्रेक्षाम् उपमां च अलंकारं पुरस्कृत्य सुबहु शब्दकोलाहलमारचयति । श्लेषैकदृष्टिश्चायं तदा औचित्यमपि विस्मरतीति निरूपितं प्राक् । 'तदित्थं नास्ति वागवसरः पूर्वतरेषु राजसु' इत्युपरिष्टादुपसंहरिष्यन्नयं कविः, श्लेषेण तत्कारणसमर्थनावसरे कथं 'महावराहो गोत्रोद्धरणप्रवृत्तोऽपि—' इत्यादिना महावराहमप्यत्रान्तर्भावयतीति न ज्ञायते । 'स पुनरन्य एव देवः—' इत्यारभ्य 'तथा हि— स पर्वतः' इत्यादिना तस्मिन्नृपतौ पर्वतत्वं हिमालयत्वं वृषध्वजत्वं सदागतित्वं समुद्रत्वं चन्द्रत्वं मेरुत्वं च आरोपितं श्लेषभङ्ग्या समर्थयन्कविरयं श्लेषापहृतमना विस्मरतीव स्वयमुपपाद्योपपादकयोरानुगुण्यम् । तत्रैव प्रकरणे अन्तकात् राहोश्च व्यतिरेकं समर्थयतोऽस्य कवेः श्लेषलाभं विना नान्यं चमत्कारं कमपि वयमुपलभामहे । श्लिष्टोपमारूपकविरोधाभासानां कविना स्मारं स्मारं यत्र कुत्रापि पुनःपुनर्विनिवेशनं सर्वथा सहृदयानुद्वेजयति । क्लेशेनार्थकल्पनं च बहुत्र आश्रयणीयं भवति । एवं महता वाग्विसर्गेण चिन्तामणिं वर्णयन्नपि कविरयं तस्य राज-

धानी का, को वा जनपद इत्यनिवेदयन् तज्जिज्ञासाकुतूहलिनो भग्नमनोरथानेव करोति । अनन्तरमारभते कथानायकं कन्दर्पकेतुमभिवर्णयितुम् । तत्रापि स्वकीयं श्लेषदण्डादण्डि सम्यगयमाविष्करोति; परं तु प्रयुक्तपूर्वानेव पददरिद्र इव कविरयं श्लेषान्प्रयुङ्क्ते । श्लेषलोभेन च उपमानभावं सचेतनस्य अचेतनस्य वा पदार्थस्य कल्पयन्, तेन सचेतनस्य उपमेयभावं च निर्वहन्नयं कविस्तद्विषये सर्वानप्यन्यगद्यकवीन्सुदूरमतिशेते इति निर्भयं दृढं च वदामः । तरुणीनामुपवनलताभिः सादृश्यमुपपादयता कविनानेन प्रत्युक्तम् 'भ्रमरसंगताः, प्रवालहारिण्यः' इति विशेषणम्; 'एताः प्रवालहारिण्यो भ्रमद्भ्रमरसंगताः' इति जीवन्धरचम्पूप्रबन्धेऽपि दृश्यते । ततः प्रभातं वर्णयन् स्वप्ने कन्दर्पकेतुना दृष्टां वासवदत्तां विस्तरेण वर्णयति । तत्र कुमुदिनीनायकं दधिधवलकालक्षपणकपिण्डत्वेनोत्प्रेक्षमाणोऽयम् 'स्वयमुपहृतपिण्डपात्रान्भक्तिप्रवणेन मनसा सिद्धादेशान्नग्नक्षपणकान्पप्रच्छ' इति कादम्बरीं स्मारयति । अत्र चोत्प्रेक्षा अतीव चारुतराः संपन्नाः । प्रदीपानां वर्ण्यमानं दानवसादृश्यं श्लेषैकचक्षुषामेव हृद्यम् । 'आसन्नमरणास्विव' इत्येतदुपमां विना अन्यत्सर्वमपि कामिनीवर्णनं रुचिरमेव संवृत्तम् । प्राभातिकमारुतवर्णनावसरे 'मुर्मुरचूर्णमिव समन्तादर्पके दर्पकेषु दहनस्य' इत्ये-

तन् नियतं शिशुपालवधे[1] तादृशं वर्णनं स्मारयति । अनन्तरं वासवदत्तावर्णनप्रकरणे, मध्यभागस्य क्षीणतायां हेतूत्प्रेक्षणं मनोहरं कादम्बरीवर्णनप्रकरणसंवादि च । किं बहुना—— वासवदत्तावर्णनावसरे न किमप्यवद्यं पश्यामो विना 'वानरसेनामिव' इत्युपमायोजनजनितान्मन:संकोचात् । वासवदत्ताया ग्रहमयीत्वसमर्थनं च, वासवदत्तया स्वप्ने दृष्टस्य कन्दर्पकेतो: पुण्यसरिन्मयत्वोपपादनापेक्षयापि चारुतरमेतत्प्रकरणालंकारभूतं च । 'संकल्पसिद्धिमिव शृङ्गारस्य' इत्यादीनि तु हर्षचरिते दधीचवर्णनप्रकरणमुपजीवति । स्वप्ने दृष्टां कन्यां प्रबुद्ध: कन्दर्पकेतुरपश्यन्परां कोटिमारूढो मदनतापस्य परिहृतसकलोपभोगो दिवसमेकं रात्रिं चैकामनैषीत् । अथ तस्य सखा मकरन्द: कथमपि लब्धप्रवेशदर्शनस्तमाश्वासयामासेति कविरयं कथां बध्नाति । पूर्वमननुभूतस्यापि वस्तुन: 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्तरीत्या स्वप्ने दर्शनमभ्युपगच्छाम: । अङ्गीकुर्मश्च 'श्रवणाद्दर्शनाद्वापि मिथ: संरूढरागयो: ।...इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम्' इत्यालंकारिकाणां वचनप्रामाण्येन दम्पत्यो: स्वप्ने परस्परदर्शनम् , तन्मूलं च तयोरनुरागवृद्धिम् । परं तु नास्माकं हृदयं तत्र प्रसीदति । स्वप्ने स्यान्नाम दर्शनम् । तेन च संभ-

1. सर्ग ६ श्लो. ६; स. १०. श्लो. १७; स. ११. श्लो. १७.

वतु समुत्कण्ठा साक्षाद्दर्शने। यथा हि चित्रे मालविकां दृष्टवतः साक्षात्तद्दर्शने समुत्कण्ठा समभूदग्निमित्रस्य। किं स्वप्नदर्शनमात्रेण दम्पत्योरारोहतु परां कोटिं जाल्मोऽयं मन्मथहतकः? अस्तु च स्वप्ने तद्दर्शनम्, भवतु च तेन प्रकृष्टः कामसंतापः कन्दर्पकेतोः। अथापि दिनमेकमहोरात्रं सविषादमवस्थितोऽयं कन्दर्पकेतुर्न खलु पित्रा ज्ञातः, नापि समाश्वासित इत्येतन्न किलास्माकं बुद्धिमधितिष्ठति। किंच, स्वप्ने दृष्टायास्तस्या नामादिकमपृच्छन्कन्दर्पकेतुः, मन्यामहे, तदिदं सर्वं प्रश्नेन अवगच्छन्त्या वासवदत्ताया नियतं बुद्धितो हीयते। अपि नाम कथाविस्तरार्थं शारिकासंदेश-योजनार्थं च कविनेदमकारणमनाविष्कृतं स्यात्! अत्र च 'निर्लक्ष्यमाकाशतले आलिङ्गनार्थं प्रसारितबाहुयुगलः' इत्युक्तिः 'मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः—' इति मेघदूत-सूक्तिमनुसरति। आगतश्च मकरन्दो विहाय प्रकृतं दीर्घ-दीर्घां दुर्जननिन्दां करोति। किमर्थमियं दीर्घतरा दुर्जन-निन्दा कविनात्र योजितेति न वयं जानीमः। न केवलमिदं दुर्जननिन्दाप्रकरणमस्थानपतितम्; परं तु तदवतारणमपि बलीयसा प्रयत्नेन कृतमिति सकृत्पश्यतामपि स्फुरिष्यति। आत्मानमप्यवधारयितुमशक्तस्य कन्दर्पकेतोर्मनसि केवलं श्लेषकदर्थितः स्वकीय उपदेशः कथंकारं स्थितिं लभेतेति मक-

रन्द एव जानाति! श्रुत्वा चैतत् 'शतमन्युसमाकुला भवत्यस्माकं चित्तवृत्तिः। नायमुपदेशकालः' इति युक्तमुत्तरं दत्तं कन्दर्पकेतुना। तत्र 'नेयमुपदेशरीतिः' इति यद्यभविष्यत्, तर्हि इतोऽपि सुन्दरमभविष्यत्। 'पच्यन्त इव मेऽङ्गानि' इत्यादि वाक्यं तु सर्वात्मना कादम्बरीमापिबति। मकरन्देन सह कन्दर्पकेतोः पुरान्निर्गमनं च, किं फलमभिसंधाय, कं देशमुद्दिश्येति सुबहु जिज्ञासाकौतुकमुत्पादयति। फलस्य सुस्पष्टत्वात्कविना किमनुक्तं स्यात्? विन्ध्यागिरेर्वर्णनं च यथापुरं बहुविधैः श्लेषैरनेकविधाभिश्च फक्किकाभिर्विस्तृतमारचितम्। औचित्यानौचित्यविचारस्तु वर्णनावसरेषु दूरेतरामस्य सुबन्धोरिति मुहुर्मुहुर्वदतामपि नास्माकमस्ति मनसस्तृप्तिः। श्लेषं विना रेवानदीवर्णनं च सुष्ठु संपन्नम्। अनन्तरं क्रामतः क्रान्तस्य च सिंहस्य वर्णनं स्वभावोक्तिमालिङ्गति। किमु नाम मकरन्देन तरुलतागुल्मातिरोहितेन क्रामन् क्रान्तश्च सिंहो दूरात् दृष्टः स्यात्! इह कृतं विन्ध्याटवीवर्णनं च पुनरपि क्रियमाणेन तेन शब्दतोऽर्थतश्च प्रायेण संवदति। रात्रौ च यस्यैव जम्बूतरोरधः पल्लवशयने कन्दर्पकेतुः सह मकरन्देन सुष्वाप; तस्यैव जम्बूतरोः शिखरे शुकशारिकयोः कलहोत्पत्तिः, अधस्तात् वासवदत्तासखीप्रेषितायाः शारिकाया अवस्थानं च भवितव्यतया वा कवि-

प्रभावेण वा समुपजातं स्यात्! कादम्बर्यामिव शुकेनैव अत्रापि कथा कथनीयेति विवक्षितं स्यात्कवेरिति प्रतिभाति । ससुरालयेऽपि पवित्रे कुसुमपुरे च, यायजूक इव सुरतार्थी जलौका इव रक्ताकृष्टिनिपुणश्च वेश्याजनः सर्वथा कदर्थयत्यस्माकं हृदयम् । पुण्यां सुरसितं वर्णयन्नयं कविः प्रसन्नगम्भीरां वाचं भागीरथीमिव प्रवाहयति । शृङ्गारशेखरविषयं पद्यद्वयं च मनोरमं संवृत्तम् । तत्र च प्रकरणे परिसंख्यायां वृषपदं शुक्रार्थेऽपि प्रयुञ्जानः, 'रतिकील इव जघन्यकर्मलग्नः' इत्यनेन पूर्वमेव व्रीडितान्पुनरपि ह्रेपयति साधून् । प्रायेण हि गद्यकाव्येषु, नायको नायिका वा देवताप्रसादलब्धजन्मेति वर्ण्यते; तमेतं नियममनतिक्रामन्नस्मात्कविरपि 'तयोश्च मध्यमोपान्ते वयसि वर्तमानयोः कथमपि दैववशात्--' इति वदन्नात्मानमप्यपवादाद्रक्षन् । वासवदत्तायाश्च परिणाममुपयात्यपि यौवने परिणयपराङ्मुख्ये निदानं कविमात्रगोचरम्!

अथ वासवदत्ताया विवाहोत्कण्ठाजननायेव वसन्तकाल आगच्छति । अत्र च वसन्तकालवर्णनं शब्दार्थाभ्यां चारुतरं सत् कालिदासादीनां सूक्तिष्वधिकमस्य कवेः परिचयमावेदयति । स्वयंवरार्थमागतेषु राजपुत्रेषु कन्दर्पकेतोरनागमनम्, तस्य स्वयंवरपरिज्ञानाभावात्, स्वप्ने परं वासवदत्तादृष्टिगो-

चरत्वावश्यकतया, कथाविस्तरलालसेन कविमहिम्ना वा समुपपद्येत। आगतानां च राजपुत्राणामवस्थितिवर्णनमतीव क्लिष्टमनुचितार्थघटितं च। यस्मिंश्च दिने स्वयंवरो निर्णीतः, तस्मिन्नेव दिने रात्रौ वासवदत्ताया भाग्यवशात्, पतिलाभभावनाप्रकर्षेण वा स्वप्ने दृष्टिगोचरतामुपगतः कन्दर्पकेतुः। अत्रापि कन्दर्पकेतुवर्णने 'आदिकन्दं शृङ्गारपादपस्य' इत्यादिकं हर्षचरिते दधीचवर्णनमेवोपजीवति। बुद्धिमती च वासवदत्ता; या स्वप्नेऽपि दृष्टस्य यूनो नामादिकं शृणोति। प्रबुद्धा च सा कन्दर्पकेतुवत्परां कोटिमारूढा मदनतापस्य विलपन्ती मूर्च्छन्ती सखीनां च शिशिरोपचारैः कथमपि जीवितं धारयन्ती तमेव युवानमितस्ततो विलोकयन्ती तिष्ठति। अत्र च प्रकरणे वासवदत्ताया विरहावस्थावर्णनं सर्वात्मना शब्दार्थाभ्यां कादम्बर्या हर्षचरितस्य च छायां सेवते। स्वप्ने दृष्टमात्रे यूनि कस्याश्चिदेवं विरहावस्थावर्णनं कथं वा स्वाभाविकसरणिं हृदयसंवादं वा अधिगच्छतीति संशेरते सहृदयाः। वासवदत्ताप्रियसखीभिः समं समालोच्य कन्दर्पकेतुभावमाकलयितुं प्रेषिता तमालिका नाम शारिका किं वा नगरमुद्दिश्य स्वकीयं प्रस्थानमारभतेति न ज्ञायते। कन्दर्पकेतुनगरं कविना, स्वप्ने पृष्टवत्या वासवदत्तया, तन्मुखात्सर्वमवगतवतीभिस्तत्सखीभिः, संदेशार्थं प्रेषितया तमालिकया च परं विदितं

सत् तद्धृदय एव तिष्ठतु । छिन्नतामपि नास्माकं तद्रहस्यं प्रकाशतां यास्यति । यथा तथा वा प्रतिष्ठतां तमालिका; अथाप्ययमासादितः कन्दर्पकेतुस्तयेति तमालिकाया वा, वासवदत्ताया वा, अन्ततः कवेर्वा भाग्यमेव, विश्वसिमः, तत्र कारणम् । स्वप्ने संपन्नं च वृत्तान्तं तथैव प्रत्यक्षेण संवादयन्नयं कविः सत्ख्यातिवादिनां दृढतमं दृष्टान्तमेकं प्रदर्शयति । संदेशपद्यं च रमणीयतमं भावपुष्टं च । अथ तमालिकया सह वासवदत्तावृत्तान्तं पृच्छत एवास्य कन्दर्पकेतोर्मरीचिमाली अस्तमधिगच्छति । समुद्रे मज्जतः सूर्यस्य, संध्यायाः, तिमिरोद्गमस्य, उदयन्तीनां ताराणाम्, चन्द्रोदयरागस्य, उद्गच्छतश्चन्द्रस्य च वर्णनं बाणादिच्छायामनुसृत्य सम्यगेव निर्वर्तितं कविना । औचित्यविस्मरणं तु सार्वत्रिकमेवास्य श्लेषलुब्धस्य । तत्र 'तिमिरमुदजृम्भत' 'तिमिरमजायत' 'अन्धतमसमजृम्भत' इति त्रिस्तिमिरवर्णनम्, 'रजनीपतिरुदयमाससाद' 'उडुपतिरुज्जगाम' इति द्विश्चन्द्रवर्णनं च कालकलाभेदमाश्रित्य कविना कृतं स्यादिति संभावयामः। अथवा कविरेव जानाति तत्र दृढं हेतुम् । तत्रापि नक्षत्रवर्णने सुतरां मनोहारिण्य उत्प्रेक्षाः । सायंकाले अभिसारिकाप्रेषिता दूत्यः प्रियतमैः सह संभाषन्ते । तादृशं च संभाषणं न खलु सर्वैरपि प्रकटं ज्ञातुमर्हतीति मत्वा कविस्तत्र

तावन्तं परिश्रममङ्गीचकार शब्दार्थघटनायाम्; यावता व्याख्यातृभिरन्यैश्च तन्मुखप्रेक्षिभिर्व्युत्पित्सुभिस्तदिदं गोप्यं दूतीसंभाषणम्, 'इदमित्थम्' इति निश्चित्य मनसि कलयितुं न शक्यते! तत्र हि प्रकरणे व्याख्यातारः प्रायेण भिन्नभिन्नमेव खल्वभ्यूहन्ति दूतीसंभाषणप्रकारम्। नितान्तगोपनीये चार्थे यमकप्रपञ्चमोहनचूर्णं समन्ततो विक्षिपन्नयं कविः सर्वानपि भ्रमयति। इदमेव किमु कारणं स्यादस्य कवेर्वासवदत्तान्तःपुरप्रमदालापप्रकरणेऽपि यमकविन्यासस्य? को हि रसिकश्च धार्मिकश्च कविर्दम्पतिसंश्रयं वृत्तान्तं प्रकटतां नयतु! वयमपि तदेतदवगन्तुं बहुधा तत्र प्रायस्याम, अवागच्छाम च कियत्कियदपि; परं तु तदेव स्यादिति न दृढमस्माकमस्ति विस्रम्भः। अथ सायन्तने तनीयसि प्रवाति नभस्वति, कन्दर्पकेतुः सह मकरन्देन तमालिकादर्शितेन पथा वासवदत्तानगरं गत्वा, अन्तःपुरे परस्परं किमपि गूढगूढं यमकप्रयोगेण संभाषमाणानां प्रमदाजनानामालापकथाः शृण्वन्नेव वासवदत्ताभवनं प्रविश्य तत्र तां पश्यति। वासवदत्ताभवने च सालवलयस्य, पताकानाम्, नदीनाम्, प्रासादानां च सौन्दर्यमन्यादृशम्; यतः श्लेषलुब्धेन कविनानेन सकामेनापि नातीव कदर्थयितुमशक्यत। तत्र च 'अरण्यमिव अनेकसालशोभितम्' इति वासवदत्ताभवनस्य

अरण्यसादृश्योक्तिस्तु, कपोलकज्जलबिन्दुवत् दृष्टिदोषपरिहारेच्छया वा चिररूढस्वशैलीभङ्गभिया वा कविना कृता स्यात् । परस्परं पश्यन्तावेव च तौ प्रथमतो मूर्च्छामधिगत्य पश्चाल्लब्धसंज्ञौ एकमासनं भूषयतः । चिरोत्कण्ठितयोः साक्षाद्दर्शने मूर्च्छाधिगमो युक्तः स्वाभाविकश्च । 'एकासनमलंचक्रतुः ।' इति परमश्लीलमभवत् ॥

अनन्तरं वासवदत्तासख्या कलावत्यां अनुभूतपूर्वां वासवदत्तायाः कष्टामवस्थामावेदितः कन्दर्पकेतुः संमन्त्र्य, वार्तान्वेषणाय मकरन्दं तत्र नगरे नियुज्य तुरगमारुह्य वासवदत्तया सह निशि नगरान्निर्गच्छति । कन्दर्पकेतुः अन्तःपुराधिकृतैः कञ्चुक्यादिभिरदृष्टः, अविदितश्च शृङ्गारशेखरेण, वासवदत्ताभवनं येनोपायेन प्राविशत्; स एव सांप्रतं निर्गमनेऽपि तेन स्वीकृतः स्यात् । प्रवेशनिर्गमने परमस्माभिर्ज्ञातव्ये ; तत्र च यः कोऽप्युपायो भवतु; किमर्थं सोऽत्र प्रकटनीय इति कविरयमनावश्यकविस्तरभीरुरभिमन्यते! अयं च वासवदत्तायाः पत्या सह निर्गमप्रकारो वत्सराजपत्नीनामधेयवहनं बलवत्समर्थयति । तत्र गजपृष्ठदेशो विशाल इति नायिकासख्याः काञ्चनमालाया अपि स्थातुमवकाशः समजनि । तुरगः किलात्र वाहनमिति न कलावती शशाक सह प्रस्थातुम् । अथ वा वासवदत्तयैव खलु फलमूलाद्यन्वेषणाय गन्त-

व्यमिति तदर्थं कविर्न संमन्यते कलावत्याः सहागमनम् । अथ मालतीप्राप्तये महामांसविक्रयं कर्तुं श्मशानवाटमुपगतो माधव इति कथामुपनिबध्नन्तं भट्टभवभूतिमनुकर्तुमतिशयितुं वा समभिलष्यतः कवेर्मन्त्रप्रयोगेण नगरान्निर्गतौ दम्पती प्रथमत एव श्मशानवाटं पश्यतः । आदितस्तयोस्तद्दर्शनमागामिनो दुःखस्य सूचकमिति शाकुनिकेन वा कविना निबद्धमिदम् । अपवित्रमतिरौद्रमत्यन्तजुगुप्साकरं वर्णनमहिम्ना पुरःस्थितमिव च भाव्यमानं श्मशानमिदम्, श्लेषचक्षुषा पश्यतः कवेः शूलपाणिरिव पुरुषातिशय इव चक्रवर्तीव च भासते । तुरगेणैव वहतोः कन्दर्पकेतुवासवदत्तयोर्विन्ध्याटव्यां प्रभाता भवति निशा । प्रभातवर्णने च अन्यादृशमदर्शितपूर्वमात्मनः सामर्थ्यमाविष्कृतं कविना । मलिनप्रभं क्रमेणान्तर्धीयमानं च तारागणम्, विकसन्तीं कमलिनीम्, तत्र मकरन्दभिक्षामटतो मधुकरगणान्, अस्तमयमानमिन्दुमण्डलम्, आखण्डलाशायाः प्रसादम्, अरुणकिरणानामारुण्यम्, रक्तमण्डलमुदयन्तं सवितारम्, बालातपस्य सर्वतः प्रसरणम्, क्रमेण सूर्यरश्मीनामौष्ण्यासादनं च रमणीयया फक्किकया मनोहारिणीभिरुत्प्रेक्षाभिश्च वर्णयन्नयं कविराजयति सहृदयप्रशंसासर्वस्वम् । ततश्च तत्र गतौ तौ दूराध्ववहनपरिश्रान्तौ कुत्रचित् स्वपितः । वासवदत्ता च प्रथमतः प्रबुद्धा फलमूलाद्यन्वेषणाय नल्वमात्रं

वने गच्छति । गच्छन्तीं च तां दृष्ट्वा तज्जिघृक्षया प्रधावतो-रुभयोः किरातसेनापत्योर्महद्युद्धं प्रवर्तते । युद्धसंरम्भेण भग्नाश्रमो मुनिः पश्चादागत्य पश्यन्कोपान् वासवदत्तां शिलामयी पुत्रिका भवेति शपति । प्रार्थितश्च प्रियपाणिस्पर्श शापस्यावसानमादिशति । अत्र 'वने नल्वमात्रमगच्छत्' इत्युक्तावपि 'यस्याश्रमः, तेन मुनिना' इत्युत्तरत्र वक्ष्यमा-णत्वात् वासवदत्ता कस्य चन मुनेराश्रमं तत्परिसरदेशं वा गतेति ऊहनीयम । वासवदत्ताभाग्यमेव किरातसेनापती उभौ एकदा प्रैषयत्; युद्धे च मिथः प्रहारेण निरवशेषमुभ-यमपि सैन्यममारयत् । शप्ता चेयं वासवदत्ता, कुमारवने गमनेन महासेनकृतानुशासनाज्ञताभावं प्राप्ताया ऊर्वश्या अर्हति भगिनीत्वमधिगन्तुम । कोऽसौ मुनिरिति जिज्ञासा तु तिष्ठत्वशान्ता; का क्षतिः ! अन्यतः पश्यामः—सुप्तश्च कन्दर्प-केतुर्मध्याह्ने प्रबुद्धः प्रियामनवलोकयन्महता विषादेनाविष्टस्तत इतः परिभ्रमन्प्राणत्यागमभिलष्यन् दक्षिणेन काननं निर्गत्य महासागरकच्छोपान्तेन कतिपयदूरमध्वानं गत्वा जलनिधिं पश्यति । अत्र वासवदत्तां तत इतो विचिन्वन्कन्दर्पकेतुः, ऊर्वशीगवेषणपरं पुरूरवसमनुकरोति । दिवास्वापस्य च इदं फलमिति धर्मशास्त्रज्ञाः । तथा कन्दर्पकेतोर्जलनिधिपतनेन मर-णाध्यवसायः, मालतीविरहेण मूर्च्छितं माधवं चिरादनाश्व-

स्तमवलोक्य पुनर्जीवितप्रत्याशारहितस्य गिरिशिखरमारुह्य पाटलावत्यां पतितुमिच्छोर्मकरन्दस्य, कपालकुण्डलापहृतां मालतीमनवलोक्य विषादेन मधुमतीस्रोतःसंदानितपवित्र-मेखलान्महीधरविटङ्कादात्मानं पातयितुमभिलषन्तीनां काम-न्दकीमदयन्तिकालवङ्गिकानां च समुद्योगं स्मारयति । अत्र कविर्महासागरकच्छोपान्तं जलनिधिं च यावच्छक्यं स्व-भावोक्तिमाश्रित्यैव वर्णयति; उत्प्रेक्षते च समीचीनम्; अथापि सर्वत्र आत्मस्वभावं नियन्तुमशक्नुवन् फेनसंचयैः सापस्मार-मिव पश्यति समुद्रम् । अनातुरस्य आत्मत्यागः कथं युक्त इति विमृशन्, बहूनां पूर्वेषामकृत्यैरात्मनोऽप्यकृत्यमिदं न्या-य्यीकर्तुं व्यवस्यन्नयं कन्दर्पकेतुः, कवेरिव स्वस्यापि बहुषु पुराणेषु परिचितिं सुस्पष्टमवगमयति । ततश्च पुलिनतलमा-साद्य कृतस्नानादिसकलकृत्यो जलनिधिजलमवतरितुमारभते कन्दर्पकेतुः । पुलिनतलवर्णने च कविरयं ह्रस्वानेव वर्णान् घटयित्वा ओजोगुणमुपपादयन्नसाधारणमानन्दमुपजनयति श्रोतॄणाम् । आत्मत्यागाय जलनिधिमवतरतोऽस्य कन्दर्पकेतोः, पुण्डरीकव्यतिकरेण शरीरमुत्स्रष्टुमारभमाणायाः महाश्वेताया इव, मन्मथदाहेन देहत्यागाय संनह्यन्त्या रतेरिव च समाश्वा-सनाय आकाशात्सरस्वती समुच्चरति । श्रुत्वा चैतत्कन्दर्पकेतुः प्रियाप्राप्तिप्रत्याशया मरणारम्भात् विरतः फलमूलादिना वने

वर्तयन् इतस्ततः परिभ्रमन्कालमनेकं नयति । एवं कालं यापयत एवास्य कन्दर्पकेतोर्वर्षासमयः समागच्छति । अत्र पूर्ववाक्ये 'कालमनेकं निनाय' इत्युक्त्वा उत्तरवाक्यारम्भे 'एकदा तु कतिपयमासापगमे' इत्युक्तिः कथं संगतेति विशेरते विमर्शकाः । तत्रापीदमाश्चर्यादाश्चर्यम्, यत्कचन पुस्तकेषु 'कतिपयदिवसागमे' इति दृश्यते पाठः । समागतश्च वर्षाकालः कविमुखात् श्लेषेणैव स्वगुणानाविष्करोति । तत्र च इन्द्रधनुषः, जलधरस्य, विद्युतः, केतकीपुष्पस्य, जलकणानाम्, करकाणाम्, सेन्द्रगोपस्य नवशाद्वलस्य च वर्णनं सरसाभिरुत्प्रेक्षाभिश्चेतश्चमत्करोति । अथ शरत्समय आगच्छति । कविसमयानुसारेण च ये ये पदार्था यथा यथा वर्णनीयाः शरत्काले, तथैवात्रापि वर्णिता इति न तत्र न्यूनता केनापि वक्तुं शक्यते । 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्' इत्यारभ्य महाकाव्यत्वसंपादकतया यन्निरूपितं दण्डिना वर्णनम्; तत्र प्रथमार्धं संपूर्णमनेन शुश्रूषितं कविना । ऋतवश्च वसन्तावर्षाशरदस्त्रय एवात्र निरूपिताः । अन्येषां त्रयाणामत्र अन्तर्भावं मन्यत इवायं कविः । विरहिणि कन्दर्पकेतौ वर्षागमनवर्णनम्, रामायणे रामस्य, तदनुसारेण विक्रमोर्वश्यां पुरूरवसश्च विरहावस्थायां वर्षागमोक्तिं स्मारयति । विरहवेदनाधिक्यनिरूपणाय च तथा वर्णनमित्यपि रसिकाः । शरत्कालप्राप्तिनिरूपणं च मार्गे कर्द-

माद्यभावेन तदानीमुपलब्धया वासवदत्तया साकमक्लेशेन कन्दर्पकेतोः स्वपुरीगमनायेति संभावयामः। शरत्समयारम्भे च इतस्ततः परिभ्रमता कन्दर्पकेतुना स्वप्रियानुकारिणीति स्पृष्टा शिलामयी पुत्रिका यथापुरं वासवदत्तास्वरूपं प्रतिपद्यते। अत्रान्तरे च श्रुतवृत्तान्तः समागच्छति मकरन्दः। तेन वासवदत्तया च समं कन्दर्पकेतुः स्वपुरं गत्वा हृदयाभिलषितानि सुखानि अनुभवति। अत्र मकरन्देन श्रुतो वृत्तान्तः कोऽसौ, कुत्र वा श्रुत इति कविहृदयमेव जानाति। यदि कुसुमपुरे एव कन्दर्पकेतोः कष्टो वृत्तान्तः; तर्हि एकपुत्रीकेण शृङ्गारशेखरेण कुतो नागतम्, कुतो वा नान्विष्टा पुत्री इत्यादिशङ्का समुत्पद्यते। विवाहादिषु च महता धनव्ययेन विप्राणां भोजनं दक्षिणादानं पुरोधसो बहुमाननमिति सर्वमिदमज्ञकृत्यमिति प्रतिवर्षं तत्र तत्र सभासु महान्तं कोलाहलमाचरतां नव्यनागरकाणां बहुमानपात्रमयं परिष्कारप्रियः (!) सुबन्धुर्न लोकरीतिमनुसृत्य विवाहमहोत्सवादिकं दम्पत्योर्निर्वर्तयति। परस्परानुरागे सति तावतैवालम्, किमन्येन निरर्थकेन वर्णाचारेणेत्ययमभिमन्यते। वैदिकवंशोत्पन्नो भूषणबाणस्तु उत्तरकादम्बर्याम् 'यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहः, तथापि लोकसंव्यवहारोऽनुवर्तनीय

एव ' इति वदन् अग्निसाक्षिकं विवाहमपि दम्पत्योरावश्यकं पश्यति । इतश्च वयम् , कुसुमपुरे वार्तान्वेषणाय नियुक्तस्य का वा मकरन्दस्य वार्ता इति, सह वासवदत्तया स्वपुरं प्रतिष्ठमानः कन्दर्पकेतुः किं नाम नगरमधिगच्छति इति च अवगन्तुमविदिता एव गूढमनुगमिष्यामः कन्दर्पकेतुवासवदत्तामकरन्दान्सह सहृदयैः ॥

इति

श्रीवत्सचक्रवर्ती

**अभिनव भट्टबाणः कृष्णमाचार्यः ।**




श्रीः ।

# ॥ वासवदत्ता ॥

करबदरसदृशमखिलं
भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः
सा जयति सरस्वती देवी ॥ १ ॥

---

अखिलभुवनलीलाकल्पनाशिल्पकारः
स्वपदविहतबन्धश्लेषदुःखस्सुबन्धुः ।
सुकृतमहितगद्यारम्भराजत्कथोऽसौ
गिरिवरकृतवासः श्रीनिवासो मुदे स्तात् ॥

वासवदत्ताशक्तिः कर्णेनाग्राह्यपार्थविषयान्या ।
सम्यग्विमृश्य कृष्णस्तदनुगुणां प्रक्रियां प्रकाशयति ॥

प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासमस्मिन्कविराचचक्षे ।
अतः परीक्षाकुतुकेन कृष्णः पदं निधत्ते पथि नव्यमव्ये ॥

अथ तत्रभवान् सुबन्धुर्नाम महाकविः वासवदत्ताख्यस्य प्रारिप्सितस्य गद्यकाव्यस्य निर्विघ्नपरिसमाप्तये ग्रन्थारम्भे कृतं स्वेष्टदेवताप्रशंसात्मकं मङ्गलमुपनिबध्नाति— करबदरेति । सा सरस्वती देवी भारतीदेवी, देवी दीव्यन्ती सरस्वती तदाख्या नदी च ।

जयति सर्वोत्कर्षेण वर्तते । सा कीदृशी । यस्याः प्रसादतः अनुग्रहात् । सूक्ष्ममतयः सूक्ष्मधिषणाः । कवयः कवयितारः । अखिलं भुवनतलं निखिलं जगत् । करे करतले विद्यमानं यत् बदरं बदरीफलं तेन सदृशं तुल्यं सुस्पष्टमित्यर्थः । पश्यन्ति । 'करबदरसमानं प्रेक्ष्य दृष्टया प्रतीच्या ।' इति भोजः। यदनुग्रहमाहिम्ना परोक्षानपि पदार्थान् अध्यक्षानिव स्वोत्प्रेक्षया समालोक्य कुशाग्रधिषणाः काव्यकर्तारस्स्वस्वप्रबन्धेषु वर्णयन्ति, सा वाग्देवी विजयते इति समुदितार्थः । नदीपक्षेचेत्थम् । यस्याः सरस्वतीनद्याः प्रसादतः अकालुष्यात् । सूक्ष्ममतयः अल्पबुद्धयः । "सूक्ष्ममध्यात्मदभ्रयोः ।" इति वैजयन्ती । के जले विद्यमानाः वयः पक्षिणः हंसाद्याः । वय इति पक्षिवाचिनो विशब्दस्य बहुवचने रूपम् । "विविष्किरपतत्रयः ।" इत्यमरः । अखिलं भुवनतलं जलाधःस्थलम् । "भुवनं विष्टपेऽपिस्यात्सलिले गगनेऽपि च ।" इति मेदिनी । "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः । करबदरसदृशं अतिस्पष्टम् । यद्वा करवत् अरसदृशं इतिछेदः । वबयोरभेदः । रसस्य जलस्य दृक् प्रतिमानं यस्मिन् सः रसदृक् स न भवतीत्यरसदृक् तं जलप्रतिमासवर्जितमित्यर्थः । "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे ।" इत्यनेकार्थसङ्ग्रहः । 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके ।' इति मेदिनी । करवत् आकाशतुल्यं पश्यन्ति । कं जलं गतिं ददातीति करः आकाशः । "करो नभोंऽशुहस्तेषु राजदेये घनोपले ।" इत्यजयः । "आपूर्यमाणपर्यन्तमप्यन्तःस्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्" इत्यच्छोदसरोवर्णने कादम्बरी ।

खिन्नोऽसि मुञ्च शैलं
बिभृमो वयमिति वदत्सु शिथिलभुजः ।

"कं जलं लवः बिन्दुः दरं ईषत् सदृशं तुल्यं जललवस्य ईषत्सदृशं पश्यन्ति मानयन्ति । स्वच्छतया अल्पजलमिव पश्यन्तीत्यर्थः । रलयोर्बवयोश्चाभेदः" इति कश्चित् । अत्र प्रकरणादिना वाग्देव्यादिरूपे प्रकृतार्थे पर्यवसिते मरुस्वतीनद्यादिरूपाप्रकृतार्थप्रतीतिः शब्दशक्तिमूलव्यञ्जनाधीना । तत्र च वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः । न चायं प्रकृताप्रकृतश्लेषस्य विषयः । सरस्वतीति विशेष्यस्यापि श्लिष्टत्वात् । धर्मिणोऽपि श्लिष्टत्वे तादृशश्लेषस्यानभ्युपगमात् । विशेषणमात्रस्य श्लिष्टत्वे हि सः । अन्यथा शब्दशक्तिमूलध्वनेरेवोच्छेदापत्तेः । तथा च ध्वनिकारादय ईदृशं विषयं शब्दशक्तिमूलानुरणनध्वनिमाहुरिति प्राञ्चः । नव्यास्तु असावुदयमारूढ इत्यादाविव प्रकृतेऽपि विशेष्यस्य श्लिष्टत्वेऽपि प्रकृताप्रकृतश्लेष एव । अप्रकृतार्थप्रतीतिरपि भवत्यभिधयैवेति न व्यञ्जनापेक्षा । एतादृशविषये प्राचां शब्दशक्तिमूलध्वनिव्यवहारस्तु न अप्राकरणिकार्थप्रतीत्यभिप्रायेण । परन्तु प्रकृताप्रकृताभिधानमूलकस्य उपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायेणैव । न चैवं शब्दशक्तिमूलवस्तुध्वनेरुच्छेदः । शनिरशनिश्च तमुच्चैरित्यादौ तत्संभवादिति प्राहुरित्यलम् ॥ १ ॥

खिन्न इति । [ त्वं ] खिन्नः गिरिधारणेन श्रान्तः । असि ।

भरभुग्नवितथबाहुषु
गोपेषु हसन् हरिर्जयति ॥ २ ॥

शैलं गोवर्द्धनगिरिम् । मुञ्च । वयं बिभृमः धारयामः । इति गोपेषु वदत्सु । शिथिलः वहनक्रियायां किञ्चिदिव विश्लथः न तु सर्वात्मना तद्धारणाद्विनिवृत्तः भुजः यस्य स तथोक्तः । एतेन अज्ञेष्वप्याश्रितेषु भगवतो निरतिशयं वात्सल्यमभिव्यञ्जितम् । अत एव भुजानां भुग्नत्वमात्रं न तु भङ्गः । शैथिल्ये सत्येव एवं किमुत सर्वथा विनिवर्तने इति काव्यार्थापत्तिर्व्यज्यते । भरेण भुग्नाः भगवत्करसंस्पर्शमहिम्ना किंचिदवनताः न तु भग्नाः वितथाः व्यर्थाः भारवहनासमर्था इत्यर्थः बाहवः भुजाः येषां तेषु तथोक्तेषु सत्सु । हसन् बहूनामस्माकमेतद्वहने न क्लेशलेशोऽपि स्यात् त्वं तु एकाकी चिराद्धारणेन खिन्न इति येषामभिमानेन वयमिति बहुवचनान्तोक्तिः, अहो पुनरेतेषां मनागिवास्मद्भुजशैथिल्ये सत्यपि भुजभुग्नतेत्येवं सकरुणं हसन्नित्यर्थः । हरिः श्रीकृष्णः । जयति सर्वोत्कर्षेण वर्तते । जि जये । अथ च, हरिः इन्द्रः । जयति न्यूनीभवति । जि ञि अभिभवे । "अभिभवो न्यूनीकरणं न्यूनीभवनं च ।" इति शाब्दिकाः । उपसर्गाणां द्योतकत्वात् यमयुङ्क्त वेदितुमित्यादाविव अत्रापि उपसर्गद्योत्यार्थान्तर्भावेन केवलस्य वृत्तिः । अस्मिन् पक्षे सित् नः असि इति, भरभुक् नवितथबाहुषु इति च पदच्छेदः । परोऽनुनासिक इति विकल्पादनुनासिकाभावः । इन्द्रपूजोद्युक्तेषु नन्दादिषु भगवता विनिवर्तितेषु तदनन्तरं नन्दादीनामुक्ति-

रियम् । अत्र अनभिहितोऽपि देवेन्द्रो गोपैरभिमुख इव संबोध्योच्यते । ( हे इन्द्र ) नः अस्माकं संप्रति तत्वं जानतामित्यर्थः । खित् खेदः अहो वयमजानन्तो वास्तवार्थमियता कालेन वृथा पुरुहूतं पूजयामः स्मेति पश्चात्ताप इत्यर्थः । खिदिति भावे क्विबन्तम् । असि त्वं “ असि इति त्वमित्यर्थे, अस्मि इति अहमित्यर्थे च तिङन्तप्रतिरूपकं अव्ययं ।” इति प्रामाणिकाः । मुञ्च अस्मान् त्वत्पूजका वयमिति मतिं वा त्यज । न वयमितःपरं त्वत्पूजकाः, नापि त्वमस्माकं पूज्य इति भावः । वयम् । शैलं असति बाधके सर्वं वाक्यं सावधारणमिति न्यायेन गोवर्धनमेव न तु त्वामित्यर्थः । ‘शैलभूतेन गर्वघ्नका वयं वनवतानवता किमहिद्रुहा’ इत्यन्यत्र श्रीकृष्णवाक्यम् । बिभृमः पोषयामः आराधयाम इति भावः । यद्वा बिभृमः अभयं इति छेदः । अभयमित्येतेन बिभृम इत्येतदाक्षिप्तस्य वयमित्यस्य विशेषणम । अभयं भूतपूर्वास्मद्भिन्नाः वयमिति योजना । न वयं पूर्ववन्मूढा वर्तामहे इति भावः । इति गोपेषु वदत्सु । हसन अहो वराका एते कृष्णस्य दुरुपदेशेन मोहितास्सन्तः किमपि साम्प्रतं प्रलपन्ति । अचिरादेव निश्चलमेते विभावितवैभवा अस्मानर्चयिष्यन्तीत्यवमवगत्या हसन्नित्यर्थः । भरभुक अतिशयेन हविर्भोक्ता । अत एव पुरुहूत इति तस्य संज्ञा । ‘भरोऽतिशयभारयोः’ इत्यनेकार्थसंग्रहः । हरिः । नवितथः सत्यः दृढ इत्यर्थः बाहुः प्रयत्नः येषु तेषु नवितथबाहुषु दृढाभिसन्धिष्वित्यर्थः । बाहृ प्रयत्ने, इति भौवादिकः । शिथिलभुजः विगतभोजनः । तस्मै शिथिलितानां भोजनाद्युपकरणानां श्रीकृष्णवचनानुरोधेन गोवर्धनगिरये

कठिनतरदामवेष्टन-
लेखासन्देहदायिनो यस्य ।
राजन्ति वलिविभङ्गाः
स पातु दामोदरो भवतः ॥ ३ ॥

दत्तत्वादिति भावः । तथा च भागवते । "महेन्द्रः किं करिष्यति, अद्रेश्चारभ्यताम्मखः, य इन्द्रयागसंभारास्तैरयं साध्यतां मखः ।" इति । यद्वा शिथिलभुजः विगतभुजाभिमानः अपगतदर्प इति यावत् । रुष्टेन इन्द्रेण कृतस्य शिलावर्षरूपद्रोहस्य भगवता प्रतिकृतत्वादिति भावः । अस्मिंश्च पक्षे जयतीत्यस्य सर्वोत्कृष्टो भवतीत्यर्थोऽपि सुसंगतः । विगतदर्पस्य इन्द्रस्य पश्चात् भगवन्तं स्तुतवतस्तदनुग्रहेण सर्वोत्कर्षसंभवात् । तथा च भागवते । "गोवर्धने धृते शैले आसाराद्रक्षिते व्रजे । गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च । विविक्त उपसंगम्य व्रीडितः कृतहेलनः । पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ।" इति । एतेन सर्वोऽपि गोवर्द्धनोद्धरणप्रसङ्गकार्थस्संगृहीत इति बोध्यम् । अत्र भगवत्करपङ्कजस्पर्शमहिम्ना गोपानां भुजभुग्नत्वमात्रकथनादनिष्टाभावेन केवलं इष्टानवाप्तिवर्णनरूपो विषमालङ्कारभेद इति कुवलयानन्दकारः ॥ २ ॥

**कठिनेति** । यस्य दामोदरस्य । वलिविभङ्गाः त्रिवलीविभागाः । कठिनतरं अतिकर्कशं यत् दाम रज्जुः तेन यत् वेष्टनं बन्धनं कठिनतरं अतिदृढं यत् दामवेष्टनमिति वा तेन जातानां लेखानां रेखाणां सन्देहं संशयं ददतीति तथोक्ताः दृढतररज्जुबन्धनेन जाता रेखा

**स जयति हिमकरलेखा**
**चकास्ति यस्योमयोत्कया निहिता ।**
**नयनप्रदीपकज्जल-**
**जिघृक्षया शिरसि रजतशुक्तिरिव ॥ ४ ॥**

---

वा इमे इति शङ्क्यमाना इत्यर्थः । राजन्ति विभान्ति । अथ च यस्य वलिविभङ्गाः यत्कर्तृकाः बल्याख्यदानवकर्मकाभिभवाः । वबयोरभेदः । कठिनतरं दामवेष्टनं दानवकर्तृकपाशबन्धनं येषां तेषां लेखानां देवानां "लेखा अदितिनन्दनाः ।" इत्यमरः । यः अ-सन्देहः सन्देहाभावः प्राणधारणे दुःखनिवर्तने वा निश्चय इत्यर्थः । तं ददतीति तथोक्ताः । राजन्ते । यस्येत्यस्य विशेषणं वा एतत् । सः दाम उदरे यस्य स दामोदरः श्रीकृष्णः । भवतः युष्मान् । पातु रक्षतु । प्रकृतश्लेषः ॥ ३ ॥

**स इति** । सः शिवः । जयति । स कीदृशः । यस्य । हिमकर-लेखा चन्द्रकला । उत्कया उत्कण्ठितया । "उत्क उन्मनाः ।" इत्यमरः । उमया पार्वत्या । नयनं ललाटलोचनमेव प्रदीपः तस्य यत्कज्जलं अञ्जनं तस्य जिघृक्षया ग्रहीतुमिच्छया । शिरसि शिवमूर्धनि । निहिता निक्षिप्ता । रजतशुक्तिः रजतमयो मुक्तास्फोट इव रजतमयः कपालखण्ड इव वा । "शुक्तिः शङ्खनके शङ्खे कपालखण्डदृग्रुजोः । नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि ॥" इति हैमः । चकास्ति प्रकाशते । उत्सुकान्निहिता इति पाठं स्वीकृत्य "उत्सुकशब्दो भावप्रधानः । यद्वा अन्तति बध्नातीत्यन् उत्सुकस्य

भवति सुभगत्वमधिकं
विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो
द्विगुणरुचिं हिमकरोद्द्योतः ॥ ५ ॥

विषधरतोऽप्यतिविषमः
खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी
स कुलद्वेषी पुनः पिशुनः ॥ ६ ॥

---

अन् उत्सुकान् उत्कण्ठितबन्धनकर्त्री अत्युत्कण्ठोत्पादिकेति यावत्। अति आदि वन्धने । क्विप् । हिमकरलेखाविशेषणम् ।" इति शिवरामव्याख्यानन्तु हेयम् ॥ ४ ॥

**भवतीति** । विस्तारिताः ख्यापिताः परेषां गुणा येन तस्य तथोक्तस्य । सुजनस्य साधोः । सुभगत्वं सौभाग्यं रम्यत्वमित्यर्थः । अधिकं भवति । हिमकरोद्द्योतः चन्द्रप्रकाशः चन्द्रिकेत्यर्थः । विकासितानि विकासं प्रापितानि कुमुदानि येन स तथोक्तस्सन् । द्विगुणरुचिं पूर्वापेक्षया समाधिकां कान्तिं । वहति । कुमुदविकासेनेव चन्द्रातपस्य परगुणवर्णनेन सुजनसौभाग्यस्य लब्धपरभागत्वादिति भावः । **अर्थान्तरन्यासः** ॥ ५ ॥

**विषधरत इति** । खलः दुर्जनः । विषधरतः सर्पादपि । अतिविषमः अतिक्रूरः, अत्यन्तं विषस्य मालक्ष्मीः समृद्धिः यस्येति च ।

अतिमलिने कर्तव्ये
भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां
रूपं प्रतिपद्यते दृष्टिः ॥ ७ ॥

ति विद्वांसः अभिज्ञाः । मृषा न वदन्ति । परं तु सत्यमेव ब्रुवते त्यर्थः । कुतः । यत् यस्मात्कारणात् । अयं विषधरः । नकुलद्वेषी नकुलः सर्पभुक् प्राणिविशेषः द्वेषी शत्रुः यस्य तादृशः नकुलेन सह द्वेषवानिति वा, कुलद्वेषी न भवतीति च । "सर्पभुङ्नकुलस्समौ ।" इति वैजयन्ती । सः पिशुनः पुनः दुर्जनस्तु । कुलद्वेषी स्वकुल एव द्वेषवान् । सकुलद्वेषीत्येकं पदम् । समानं कुलं येषां ते सकुलाः सगोत्राः तेषु द्वेषवानिति वा । विषधरोऽपि सर्पः न स्वजातिवैरमाधत्ते । अयं पुनः खलः अन्यानिव स्ववंशजानपि द्विषन्नपकरोतीत्यहो दुर्जनस्य क्रौर्यातिरेक इति भावः । नकुलद्वेषीत्यत्र "यश्चास्यापराधी तमेव सर्पो दशति । न तु तत्कुलद्वेष्टेत्यर्थः ।" इति शिवरामव्याख्यानन्तु न हृदयंगमम् । **श्लेषकाव्यलिङ्गयोस्सङ्करः** । अर्थान्तरन्यास इति शिवरामस्तु चिन्त्यः ॥ ६ ॥

**अतिमलिन इति** । खलानां दुर्जनानाम् । धीः बुद्धिः । अतिमलिने अत्यन्तं मलीमसे नितरां जुगुप्सित इत्यर्थः । **कर्तव्ये** कर्मण्येव । अतीव अत्यन्तम् । अतीवेत्येकं पदमत्यन्तार्थकमिति भट्टः ।

हस्त इव भूतिमलिनो
यथा यथा लङ्घयति खलस्सुजनम् ।
दर्पणमिव तं कुरुते
तथा तथा निर्मलच्छायम् ॥ ८ ॥

---

निपुणा समर्था । भवति । कौशिकानां उलूकानाम् । दृष्टिः चक्षुः । तिमिरे हि तमसि खलु । रूपं शुक्लादिकं पुरोवर्तिविषयस्वरूपं वा । प्रतिपद्यते गृह्णाति । "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ।" इत्यमरः । **अर्थान्तरन्यासः** ॥ ७ ॥

**हस्त इवेति** । भूतिमलिनः ऐश्वर्यमत्तः, पक्षे भस्मच्छुरितः । खलः । हस्तः कर इव । यथा यथा । सुजनं सज्जनम् । लङ्घयति अतिक्रामति परिभवतीति यावत्, पक्षे घर्षयति । तथा तथा । तं सुजनम् । दर्पणं मुकुरमिव । निर्मला विशुद्धा छाया कान्तिः, पक्षे प्रतिबिम्बं यस्य तादृशम् । कुरुते । यावानैश्वर्यमत्तस्य दुर्जनस्य साधुषु परामवातिरेकः, तावान्पुनः क्षान्तिजुषां साधूनां भस्मपरामृष्टस्य दर्पणस्येव सौभाग्यातिशय इति भावः । 'प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ।' इति भारविः । 'छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा ।' इति कालिदासश्च । 'भूतिर्भस्मनि संपदि ।' इति, 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इति चामरः । **उपमा** ॥ ८ ॥

विध्वस्तपरगुणानां

भवति खलानामतीव मलिनत्वम् ।

अन्तरितशशिरुचामपि

सलिलमुचां मलिनिमाभ्यधिकः ॥ ९ ॥

सा रसवत्ता विहता

नवका विलसन्ति चरति नो कङ्कः ।

विध्वस्तेति। विध्वस्ताः निह्नुताः परेषां गुणाः येषां तादृशानाम्। खलानां दुर्जनानाम् । मलिनत्वं मलिनिमा । अतीव भवति । स्वयमेव मलिनानां दुर्जनानां परगुणनिह्नवः न केवलं न गुणाय, प्रत्युत मालिन्याभिवृद्धये एवेत्यर्थः । अन्तरिता आच्छादिता शशिरुक् चन्द्रकान्तिः यैस्तेषां तथोक्तानाम् । सलिलमुचां तोयदानामपि । मलिनिमा मालिन्यं नीलिमा च । अभ्यधिकः । ये सलिलवर्षेण उपकुर्वन्ति तेषामपि चन्द्रप्रकाशप्रच्छादने नितरां मालिन्यं किमुत अपकारैकनिरतानां परगुणापह्नवव्यसनिनां दुर्जनानामिति तात्पर्यम् । एतदर्थमेव अपिकारः सलिलमुक्पदप्रयोगश्च । दुर्जनानां परगुणापह्नवव्यसनमपि प्रकारान्तरं मालिन्यसंपत्तेरिति भावः । शिवरामस्तु "अव्ययानामनेकार्थत्वात् प्रकृते अपिकारस्य हेतुपरत्वम् । अपि यतः कारणात्" इति व्याचष्टे ॥ ९ ॥

सारसवत्तेति । विक्रमादित्ये तन्नाम्नि राज्ञि । सरसि पद्माकरे

**सरसीव कीर्तिशेषं**

**गतवति भुवि विक्रमादित्ये ॥ १० ॥**

इव । कीर्तिशेषं यशश्शेषम् । गतवति लोकान्तरं गते सतीत्यर्थः । भुवि पृथिव्याम् । सा प्रसिद्धा । रसवत्ता रसिकता गुणवत्ता वा । विहता नष्टा । यद्वा रसवत्ता प्रबन्धानां रसपुष्टिः । विहता । विक्रमादित्येन परिपोषितैः निर्भरैः कविभिः कृतानां प्रबन्धानां रसमयत्वात्, तदनन्तरं तादृशस्य राज्ञोऽभावेन तथाविधानां रसप्रचुराणां प्रबन्धानामनवतारादिति भावः । अज्ञाताः कुत्सिता वा नवाः नवकाः । अज्ञाते कुत्सिते वा कः । नूतनाः किंराजानः कुकवयो वेत्यर्थः । विलसन्ति स्फुरन्ति । यद्वा रलयोरभेदः । विरसन्ति विरुद्धं विविधं वा शब्दायन्ते । राजपक्षे, केवलं इदानीन्तना राजानो वाचा परं विकत्थन्ते, नतु विक्रमार्क इव "क्रिया केवलमुत्तरम्" इति न्यायमनुवर्तितुं प्रभवन्तीत्यर्थः । कविपक्षे च, पूर्वकविवत् न रसमयं काव्यं संग्रथितुमेते कुकवयः पारयन्ति, अपि तर्हि निरर्थकशब्दाडम्बरकोलाहलेनैव कृतार्थभावमनुभवन्तीत्यर्थ इति बोध्यम् । तथाच शिवलीलार्णवे श्रीनीलकण्ठदीक्षितः । "कृते युगे व्यञ्जनयावतीर्णे त्रेतायुगे सैव गुणीबभूव । आसीत्तृतीये तु युगेऽर्थचित्रं युगे तुरीये यमकप्रपञ्चः ॥" इति । रस शब्दे, भौवादिकः । यद्वा नवकाः अज्ञाताः कुत्सिता वा नव । नवन् शब्दात् कः । विलसन्ति । पूर्वं हि सुप्रसिद्धा विक्रमार्कसभास्तारा नव पण्डिता आसन्, येषामेव च नवरत्नानीति व्यपदेशः । साम्प्रतं तु आत्मनोऽपि तान्मन्यमाना हन्त

अन्य एव नव कुपण्डिता वल्गन्तीत्यर्थः । नव तानि रत्नानि च ज्योतिर्विदाभरणे परिगणितानि। "धन्वन्तरिक्षपणकामरसिंह शङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥" इति । कं । कः । नो चरति न भक्षयति। अराजन्वत्त्वाज्जगतो मात्स्यन्यायरीत्या दुर्बलं प्रबलः पीडयतीत्यर्थः । कः कं नो चरति नानुगच्छति । पण्डितोऽपि पोषकाभावेन क्षीणस्सन् पामरमप्यनुसरतीत्यर्थो वा। चर गतिभक्षणयोः । शिवरामस्तु "को जनः कं व्यवहारं न करोति। यद्वा कः तादृक्पाण्डितंमन्यःकं मूर्धानं नो चरति न गच्छति नारोहति। अपि त्वारोहत्येव" इति व्याचष्टे । यद्वा सारसवत्ता इत्येकं पदम्। न बका इति छेदः। वबयोरभेदः। न बका विलसन्तीति, चरति नो कङ्क इति च वाक्ये काकुरनुसन्धेया । तथा चायमर्थः। सारसवत्ता हंसतुल्यता। यथा हि हंसाः नीरक्षीरयोः क्षीरमेव गृह्णन्ति, तथा केवलं गुणमात्रग्रहणकुतुकितेत्यर्थः। विहता । सर्वेऽपि साम्प्रतं दोषैकगवेषणपरायणा इति भावः । सारसशब्दात् तेन तुल्यमिति वतौ ततो भावे तल् । "चक्राङ्गः सारसो हंसः" इति शब्दार्णवः। यद्वा सारविषये सवत्ता अभ्यनुज्ञातृत्वं ऐश्वर्यं वा । विहता नष्टा । सवत्ता इति, षु प्रसवैश्वर्ययोरित्यस्मात् भौवादिकात् शतृप्रत्यये ततो भावे तलि निष्पन्नम् । तत्र प्रसवोऽभ्यनुज्ञानमिति वैयाकरणाः। "सारो बले स्थिरांशे च मज्ञि पुंसि जले धने। न्याय्ये क्लीबं त्रिषु वरे" इति मेदिनी । बकाः बकवृत्तयः कपटकर्माणः न विलसन्ति। काक्वा विलसन्त्येवेत्यर्थः । विवेकिनो नृपतेरभावात् व्याजप्रवृत्तानामेव सम्प्रति विलासोदय इति भावः । अथवा बकाः

कुबेराः धनिन इति यावत् । न विलसन्ति । अत्र काकुर्नापेक्षिता । यागादीनां यथावदभावेन वर्षादिविरहाद्दुर्भिक्षाक्रान्तास्सर्व एव दरिद्रति, न तु कश्चिदपि लक्ष्मीवानस्तीति भावः । "बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसि ।" इति मेदिनी । कङ्कः यमः । नो चरति । काक्का भक्षयत्येवेत्यर्थः । यद्वा कः यमः । कं । न चरति न भक्षयति सर्वमपि भक्षयत्येवेत्यर्थः । धर्मव्यवस्थायाश्शीर्णत्वात् प्रजानामकालएव मरणमुपजायत इति भावः । यद्वा कङ्कः चिह्नमात्रेण ब्राह्मणः ब्राह्मणब्रुवः । नो चरति किम् । वर्णाश्रमरक्षकस्य नृपतेरभावात् द्विजातयो न कर्मणा किन्तु यज्ञोपवीतादिचिह्नमात्रेणैव ब्राह्मण्यं वहन्तीत्यर्थः । वर्णाश्रमव्यवस्था हन्त सर्वापि व्याकुलेति भावः । "कङ्को ब्राह्मणलिङ्गिनि । लोहपृष्ठे यमे" इत्यनेकार्थसंग्रहः । "को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिषु ।" इति नानार्थरत्नमाला । सरःपक्षे च इत्थम् । कीर्तिशेषं स्थलमात्रशेषम् । "कीर्तिः स्त्री यशसि स्थले" इति भागुरिः । यद्वा कीर्तिः पङ्कः । "कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च ।" इति हैमः । सा भूतपूर्वा । रसवत्ता जलवत्त्वम् । विहता । यद्वा सारसवत्ता सारसाख्यपक्षिविशेषसहितत्वम् । "सारसः पक्षिभेदेन्द्वोः क्लीबन्तु सरसीरुहे ।" इति मेदिनी । बकाः तदाख्याः पक्षिविशेषाः । न विलसन्ति । कङ्कः तदाख्यः पक्षिविशेषः । नो चरति । इदमुपलक्षणम् । जलाभावेन न पक्षिणस्संचरन्तीति तात्पर्यम् । अथवा सारसवत्ता कमलयुक्तत्वम् । विहता । बकाः न विलसन्ति किं इति काकुरनुसन्धेया । केवलं मीनग्रहणाय बका एव तत्र पङ्कशेषे

अविदितगुणापि सत्कवि-
भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि
हरति दृशं मालतीमाला ॥ ११ ॥

---

सरसि वल्गन्तीत्यर्थः । कङ्कः तरङ्गः । नो चरति नोद्गच्छति । "कङ्कौ तु लहरीगृध्रौ" इत्युत्पलः । अन्ये तु विक्रमसहितः आदित्यः विक्रमादित्यः तेजस्वी सूर्य इत्यर्थः । विक्रमादित्य इव विक्रमादित्य इति, विक्रमादित्यः आदित्य इवेति वा उपमा । सरसीवेत्यनुरोधात् । सरसीत्येतच्च भुवीत्यस्योपमानम् । विक्रमादित्य एव विक्रमादित्य इति श्लिष्टं रूपकं वास्तु । अलङ्कारयोरेवं संभेदेन प्रयोगस्तु, सा केतुमालोपवना बृहद्भिरित्यादौ बहुशो दृष्ट एवेति न काचिदनुपपत्तिः । एतत्पक्षे च सारसवत्ता इत्यत्र प्रशंसायां मतुप् । विकासेन च प्राशस्त्यम् । तथा च सारसवत्तेत्यस्य विकसितकमलयुक्तत्वमित्यर्थः । बका न विलसन्तीत्यादिकं च रात्रौ सरसि पक्षिमात्रसंचारभावतात्पर्यकम् । तत्र बका इत्येतत् जलपक्षिणां, कङ्क इत्येतत् तदन्येषां चोपलक्षणमिति व्याचक्षते । **उपमा** ॥ १० ॥

**अविदितेति** । सत्कवीनां महाकवीनां भणितिः सूक्तिः । "भणितिश्शब्दसौष्ठवे" इति तु भागुरिः । अविदिताः अपर्यालोचिताः गुणाः प्रसादमाधुर्यादयः यस्यास्सा तथोक्ता श्रुतमात्रा सत्यपीत्यर्थः । कर्णेषु । मधुधाराम् । वमति उद्गिरति वर्षतीत्यर्थः ।



**गुणिनामपि निजरूप-**
**प्रतिपत्तिः परत एव संभवति ।**
**स्वमहिमदर्शनमक्ष्णो-**
**र्मुकुरतले जायते यस्मात् ॥ १२ ॥**

---

एतदेव हि महाकविसूक्तीनां सौभाग्यसर्वस्वम् , यदनपेक्षितान्यविमर्शमापातमात्रेणापि सङ्गीतकवत्सङ्कलनं नाम कर्णानन्दस्येति भावः । तथा चाहुः । "अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसंपदा । गीतवद्धृदयाह्लादं तद्विदां विदधाति यत् ॥ तत्काव्यम्" इति । मालतीमाला । अनधिगतः अनाघ्रातः परिमलः सौरभ्यं यस्याः तादृशी सत्यपि । दृशं दृष्टिम् । हरति । यथा मालतीमालाया आपातमात्रेणैव प्रथमतो दृष्टिहरत्वं तदीयपरिमलगुणानुभवे च महान्मनसः प्रमोदातिरेकः, तद्वदेव सुकविसूक्तेरपीति भावः । **दृष्टान्तालङ्कारः** ॥ ११ ॥

**गुणिनामपीति** । गुणिनां गुणवतां सज्जनानामपि । निजरूपप्रतिपत्तिः स्वस्वरूपज्ञानं स्वकीयपाण्डित्यादिनिश्चय इत्यर्थः । परतः अन्येभ्य एव । संभवति । तत्र निदर्शनं दर्शयति—स्वमहिमेति । यस्मात् । अक्ष्णोः चक्षुषोः स्वयं सर्वं पश्यतोरित्यर्थः । स्वमहिम्नः स्वमहत्त्वस्य दर्शनम् । मुकुरतले आदर्शे । जायते । यथा हि सर्वदर्शनक्षमयोरपि नेत्रयोः निजस्वरूपपरिज्ञाने स्वयमपारयतोरन्यापेक्षा, तथैव गुणवतां स्वयमन्यविवेचकानामपि स्वकीयगुणपाण्डित्यादिनिश्चयः परेष्वेवायतत इति भावः ॥ १२ ॥

अभूदभूतपूर्वः, सर्वोर्वीपतिचक्रचारुचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः, नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारा-

---

इतः कथामारभते— **अभूदित्यादिना** । चिन्तामणिर्नाम राजा अभूदिति संबन्धः । चिन्तामणेर्विशेषणानि अभूतपूर्व इत्यादीनि । पूर्वं भूतः भूतपूर्वः स न भवतीत्यभूतपूर्वः । पूर्वमेतादृशो न कोऽपि राजासीदित्यर्थः । सर्वेषां उर्वीपतीनां राज्ञां चक्रं समूहः तस्य चारूणां चूडामणीनां या श्रेणी पङ्क्तिः सैव शाणः निकषः तस्य कोणे कोटौ कषणेन घर्षणेन निर्मलीकृताः चरणनखा एव मणयो यस्य स तथोक्तः । सर्वैरपि भूपतिभिर्वन्दितचरण इत्यर्थः । मणयो हि नैर्मल्याय निकषे घृष्यन्त इति स्थितिः । 'मणय इव नखा इत्युपमितसमासः' इति शिवरामस्तु शाणकोणकषणमण्यादिपदप्रयोगस्वारस्येन उत्तरपदार्थप्राधान्यं विवक्षमाणस्य कवेरननुकूलः, श्रेण्येव शाण इति स्वोक्तिव्याहतश्च । उपमितसमासे हि पूर्वपदार्थप्राधान्यम् । न चैतत् कषणपदस्वारस्यं सहते । एवमेव ह्युपमारूपकयोरालङ्कारिकैर्विवेचितो विषयविभाग इत्यलम् । **नृसिंह इवेति** । दर्शितः हिरण्यस्य स्वर्णस्य कशिपोः अन्नाच्छादनयोः क्षेत्रस्य केदारस्य च दानेन वितरणेन विस्मयः आश्चर्यं येन तादृशः । स्वर्णभोजनादिप्रद इत्यर्थः । पक्षे हिरण्यकशिपुर्नाम कश्चिद्दैत्यः । तस्य क्षेत्रं शरीरं तस्य दानेन विदारणेन विस्मयः येन दर्शितः स तथोक्तः । अत्र उपमालङ्कारः । श्लेषेण धर्मैक्यम् । एवमुत्तरत्रापि तत्र तत्र बोध्यम् । "एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयोः पृथक् ॥" इति विश्वः । "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः ।" इति मेदिनी । "दानं मतं गजमदे रक्षणछेदशुद्धिषु । विश्राणनेऽपि ।" इति हैमः । दानमिति ददातेः द्यतेश्च ल्युटि रूपम् । **कृष्ण इवेति** ।

**यण इव सौकर्यसमासादितधरणीमण्डलः, कंसारातिरिव जनि-**

कृतं वसूनां ध्रुवो धरश्च सोमश्चेत्युक्तानां अष्टानां वसूनां देवानां च तर्पणं प्रीणनं येन तादृशः । कृतं वसुभिः धनैः देवतर्पणं यागो येनेति वा । यद्वा कृतवसून् कालिकवर्षादिना प्रजानां जनितैश्वर्यान् देवान् कृतवसुं देवं इन्द्रं वा तर्पयतीति तथोक्तः । एतेन अस्य शास्त्रवश्यत्वम्, यागादीनां यथावदनुष्ठानम्, तेन च देवानां तुष्टिः, ततश्च वृष्ट्यादिना सुभिक्षम्, पश्चाच्च पुनरपि यागादिक्रियेत्येवमन्योन्योपकार्योपकारकभाव उक्तो भवति । तथा च भगवता गीतम् । "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् । देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ । इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥" इति । "दुदोह गां स यज्ञाय सस्याय मघवा दिवम् । संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥" इति कालिदासश्च । अथवा कृतं वसुदेवस्य अग्निदेवस्य तर्पणं येन तादृशः । "उपरचितपशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यः" इति शूद्रकवर्णने कादम्बरी । कृतवसुः कृतरश्मिः यो देवः सूर्यः तं तर्पयतीति वा । "मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य" इति तत्रैव कादम्बरी । 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।' इत्यमरः । पक्षे कृतं वसुदेवस्य तन्नाम्नः स्वपितुः तर्पणं येन तादृशः । 'वसुदेवोऽस्य जनकस्स एवानकदुन्दुभिः ।' इति कृष्णप्रकरणे अमरः । **नारायण इवेति** । सौकर्येण निष्प्रयासं समासादितं संपादितं धरणीमण्डलं भूवलयं येन तादृशः । यद्वा शोभनः करः हस्तः यस्य सः सुकरः तस्य भावः सौकर्यम् । "भुजबलोपार्जित भूमण्डलः" इति तारापीडवर्णने कादम्बरी । 'करः राजदेयो भागः' इति कश्चित् । पक्षे सौकर्यं सूकरस्य

तयशोदानन्दसमृद्धिः, आनकदुन्दुभिरिव कृतकाव्यादरः, सागरशायीव अनन्तभोगिचूडामणिमरीचिरञ्जितपादः, वरुण इ-

वराहस्य भावः कर्म वा । **कंसारातिरिवेति** । कंसस्य अरातिः शत्रुः कृष्णः । यशः कीर्तिः, दाः दानम्, आनन्दः, एतेषां समृद्धिः संपत्तिः जनिता उत्पादिता येन स तथोक्तः । दा इति भावे क्विप् । यद्वा यशो ददातीति यशोदा तादृशी आनन्दसमृद्धिः जनिता येन तादृशः । आत्मन आनन्दसमृद्धयेऽपि यशस्विन्येव पथि प्रवर्तत इति भावः । यशोदेषु आनन्दसमृद्धिः येन जनिता स इति वा । पक्षे यशोदा नन्दश्च कृष्णस्य पोषकौ मातापितरौ । तयोः आनन्दसमृद्धिः येन जनिता तादृशः । **आनकदुन्दुभिरिवेति** । आनकदुन्दुभिः वसुदेवः । कृतः काव्येषु आदरो येन तादृशः । कृतकाव्येषु कविषु आदरो यस्येति वा । यद्वा काव्या बुद्धिः कृतकाव्याः कृतबुद्धयः तेषु आदरो यस्य स तथा । पक्षे कृतं कलितं काव्यायाः पूतनायाः दरं भयं येन स तथा । कंसनिदेशादितः प्रस्थिता पूतना किन्नु नाम करिष्यत्यमङ्गलमित्युत्पन्नभय इत्यर्थः । "काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्यात्पूतनाधियोः ।" इति मेदिनी । "दरोऽस्त्री भयशङ्कयोः । दरन्त्वव्ययमल्पार्थे" इति नानार्थरत्नमाला । यद्वा कृतकः कृत्रिमः दौर्जन्यभयान्नाटितः अवौ प्रभौ कंसे आदरो यस्य स तथा । "अविर्नाथे रवौ मेषे शैले मूषिककम्बले ।" इति मेदिनी । "कृतकावी तत्पुत्रौ तयोरादरो यस्येति गुरुचरणाः ।" इति शिवरामः । **सागरेति** । अनन्तः तन्नामा भोगी सर्पः शेष इत्यर्थः । पक्षे अनन्ताः अभ्यधिकाः भोगिनः राजानः विलासिनो वा । मरीचयः किरणाः । "अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु ।" इति मेदिनी । "भोगस्तु भोजने वित्ते निर्वेशे पालने सुखे । वनितादिभृतौ राज्ये सर्पस्य फणका-

**वाशान्तरक्षणः, अगस्त्य इव दक्षिणाशाप्रसाधकः, जलनिधि-**

---

ययोः ।" इति नानार्थरत्नमाला । **वरुण इवेति ।** आशान्तं सर्वतः शमसहितं कलहादिक्षोभरहितं रक्षणं यस्य स तथा । यद्वा अन्याः आशाः दिशः आशान्तराणि तेष्वपि क्षणः उत्सवः यस्य सः तथोक्तः । वैदेशिकैरप्यभिनन्द्यमान इत्यर्थः । अशान्तरक्षणमिति पदच्छेदेन अशान्तं अनवरतप्रवृत्तं रक्षणं यस्येति वा । यद्वा आशान्तरेषु अभिलाषान्तरेषु क्षणः विरामः यस्य स तथा संप्राप्तसर्वमनोरथ इत्यर्थः । आशानां मनोरथानां अन्तं अवसानं परां काष्ठां रक्षतीति तथा यावत्तृप्ति दातेत्यर्थ- इति वा । पक्षे आशान्तं दिगन्तं रक्षतीति तादृशः दिक्पाल इत्यर्थः । "आशा तृष्णादिशोः स्त्रियाम् ।" इति विश्वः । "क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः ।" इति हैमः । **अगस्त्य इवेति ।** दक्षिणानां कुशलानां प्राज्ञानां वा आशां अभिलाषं प्रकर्षेण साधयतीति तथा । दक्षिणायां आशा दक्षिणाशेति वा । पक्षे दक्षिणस्याः आशायाः दिशः प्रसाधकः अलङ्कर्ता । "दक्षिणः सरले प्राज्ञे विदग्धोदारयोरपि ।" इति भागुरिः । "दक्षिणो दक्षिणोद्भूत सरलच्छन्दवार्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम् ॥" इति मेदिनी । "अलङ्कर्ता प्रसाधकः ।" इति शब्दार्णवः । इतः परं धर्मैक्यसंपादकेन श्लिष्टविशेषणद्वयेन उपमां निर्वहति — **जल-निधिरिवेत्यादिना ।** जलनिधिः समुद्रः । वाहिनी सेना, पक्षे नदी । 'सेनानद्योश्च वाहिनी' इति भागुरिः । समः तुल्यः करस्य राजग्राह्य-भागस्य प्रचारो व्यवस्था यस्य स तथा । यद्वा मया लक्ष्म्या सहितः समः सलक्ष्मीकः करः हस्तः येषान्ते समकराः, तादृशाः प्रकृष्टाः चाराः स्पशाः यस्येति तथोक्तः । 'क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति

**रिव वाहिनीशतनायकः समकरप्रचारश्च, हर इव महासेनानुयातो निर्जितमारश्च, मेरुरिव विबुधालयो विश्वकर्माश्रयश्च, रवि**

---

संपदः ।' इति भारविः । 'समः सलक्ष्मीकः करस्य हस्तस्य प्रचारः यस्य' इति शिवरामः । पक्षे मकराणां नक्राणां प्रचारेण संचारेण सह वर्तत इति तादृशः । 'मकरो निधौ । नक्रे राशिविशेषे च' इति हैमः । **हर इवेति** । महासेनेन सुब्रह्मण्येन अनुयातः अनुगतः । "कार्तिकेयो महासेनः" इत्यमरः । पक्षे महत्या सेनया अनुयातः । निर्जितः मारः मदनः येन स तथा । उभयत्रापि तुल्यमेतत् । "हर इव जितमन्मथः" इति कादम्बरी । यद्वा राजपक्षे निर्जिताः विजिता माराः शत्रवः येन स तथा । निर्जितः मारो विघ्नो येनेति वा । "मारौ मन्मथशात्रवौ" इति भागुरिः । "मारोऽनङ्गे मृतौ विघ्ने" इति विश्वः । **मेरुरिवेति** । विबुधानां विदुषां आलयः आश्रयः । 'विः पक्षी तस्मिन् बुधाः शाकुनिका इत्यर्थः ।' इति कश्चित् । पक्षे विबुधाः देवाः । "विबुधौ सुरपण्डितौ ।" इति भागुरिः । विश्वस्य जगतः यत्कर्म रक्षणं तदाश्रयः । 'विश्वेषां जनानां कर्म शिल्पादि तदाश्रयः' इति शिवरामः । विश्वं समस्तं कर्म हस्त्यारोहचित्रलेखनादि तदाश्रय इति वा । यद्वा विश्वस्य जगतः कर्म शुभाशुभं तस्याश्रय इति स तथा । राज्ञस्तद्भागभागित्वादिति भावः । अथवा वीनां पक्षिणां शुनां कुक्कुराणां च यत्कर्म ग्रहणमोक्षादि तदाश्रयः पक्षिमृगाखेटचतुर इत्यर्थः । पक्षे विश्वकर्मा देवशिल्पी सूर्यो वा । **रविरिवेति** । क्षणे उत्सवकाले यद्दानं तत् प्रियं यस्येति स तथा । वा प्रियस्येति प्रियशब्दस्य परनिपातः । 'क्षणस्य उत्सवस्य दानं क्षणदानम्, यद्वा क्षणे विषुवादिपुण्यकाले दानं क्षणदानम्' इति कश्चित् । पक्षे

रिव क्षणदानप्रियः छायासन्तापहरश्च, कुसुमायुध इव जनितानिरुद्धसंपत् रतिसुखप्रदश्च, विद्याधरोऽपि सुमनाः,

---

क्षणदायाः रात्रेः नप्रियः । नप्रिय इति नशब्देन समासात् न नलोपः । 'क्षणं पूजादिकर्मणां निमेषादिक्षणं ददातीति क्षणदः । अनप्रियः अनाः प्राणिनः तेषां प्रियः लोकस्य प्रिय इति यावत् । अथवा अनप्रियः प्रिय एवेति यावत् । क्षणदश्चासौ अनप्रियश्चेति क्षणदानप्रियः' इति कश्चित् । छायया निजकान्त्या संतापं हरतीति तादृशः । चन्द्रस्येव तस्य कान्तेराह्लादकत्वादिति भावः । छायया लक्षणया अभिगम्यस्वभावतया सन्तापहर इति वा । 'छाः छेदनं छो छेदन इत्यस्मात् भावे क्विप् । छां छेदं यान्तीति छायाः दीनाः । यातेः कर्तरि क्विप् । तेषां सन्तापहरः' इति कश्चित् । पक्षे छाया सूर्यभार्या । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्ब-मनातपः ।" इत्यमरः । **कुसुमेति** । जनिता उत्पादिता संपादिता वा अनिरुद्धा अनिवारिता संपत् समृद्धिः येन स तथा । जनिता अनि-रुद्धानां युद्धेषु अनिवारितानां वीराणां, चराणां वा संपत् येनेति वा । पक्षे अनिरुद्धो नाम प्रद्युम्नरूपिणः कामस्य पुत्रः । "अनिरुद्धश्चरे पुष्पचा-पसूनावनर्गले ।" इति हैमः । रतिसुखं क्रीडासुखं प्रददातीति तादृशः । कामतन्त्राभिज्ञ इत्यर्थः । पक्षे रतिः कामपत्नी तस्याः सुखं । इतः परं विरोधाभासेन वर्णयति । **विद्याधरोऽपीत्यादिना** । अत्र सर्वत्र आ-पातप्रतीयमानं विरोधमपिकारो द्योतयति । विद्याधरः देवयोनिविशेषः । सुमनाः देवः । देवयोनिविशेषस्य साक्षाद्देवत्वं विरुद्धम् । विद्याधरः चतुर्दशानां अष्टादशानां वा विद्यानामभिज्ञः । आन्वीक्षिक्यादीनां चतुर्णां राजोपयुक्तानां विद्यानां वेत्तेति वा । "चतसृष्वपि ते विवेकिनी नृपविद्यासु निरूढिमागता ।" इति भारविः । सुमनाः शोभनहृदय इति परिहारः ।

धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रयः, बृहन्नलानुभावोऽपि अन्तस्सरलः, महिषीसंभवोऽपि वृषोत्पादी,

---

एवमेवोत्तरत्रापि विरोधपरिहारौ बोध्यौ । "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः ।" इति मेदिनी । **धृतराष्ट्र इति** । धृतराष्ट्रः दुर्योधनस्य पिता । गुणः भीमसेनः । दुर्योधनपितुर्धृतराष्ट्रस्य भीमसेनप्रियत्वं विरुद्धम् । पक्षे धृतं राष्ट्रं राज्यं येन तादृशः सुराजेत्यर्थः । गुणाः प्रसिद्धाः । "धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे ।" इति हैमः । मौर्वीसूदवृकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ । सत्वादौ सन्ध्यादौ त्यागादावप्रधाने च गुणः ॥" इति नानार्थरत्नमाला । **क्षमेति** । क्षमां भूमिं अनुगतः प्राप्तः । सुधर्मा देवसभां आश्रित इति विरोधः । क्षमा क्षान्तिः । शोभनो धर्मः सुधर्मः तं आश्रितः । यद्वा शोभनो धर्मो येषां ते सुधर्माणः तैः आश्रित इति परिहारः । **बृहन्नलेति** । बृहन् महान् यो नलः तृणविशेषः नलं पद्मं वा तमनुसृत्य भाव उत्पत्तिर्यस्य तादृशः । अन्तः मध्ये सरलः वृक्षविशेषः । तृणविशेषानूद्भूतस्य तत्वावश्यंभावेन मध्ये सरलवृक्षत्वमिति विरुद्धम् । पक्षे बृहन्नला विराटनगरे तत्संज्ञकः अर्जुनः तस्येव अनुभावो माहात्म्यं यस्य स तथा । बृहन् नलस्य नलमहाराजस्येव अनुभावो यस्येति वा । अन्तः मनसि सरलः उदारः, रसिको वेति परिहारः । "नलो राज्ञि कपौ नडे । पितृदैवेऽथ नलं स्यात्पद्मे" इति हैमः । "सरलः पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु ।" इति मेदिनी । "सरलो रसिकस्समौ ।" इति वैजयन्ती । 'बृहन् महान् यो नलस्तृणभेदस्तस्येवानुभावो यस्य । यथा यत्नानपेक्षः सोऽभिवर्द्धते तथायमपीत्यर्थः । तादृशोऽप्यन्तर्मध्ये सरलो ग्रन्थिरहित इति विरोधः ।' इति शिवरामः । **महिषीति** । महिषस्य स्त्री महिषी । वृषः वृषभः ।

अतरलोऽपि महानायकः, राजा चिन्तामणिर्नाम । यत्र च शासति धरां छलजातिनिग्रहप्रयोगो वादेषु,

---

महिषीसंभवस्य महिषजातीयत्वेन वृषभोत्पादित्वं विरुद्धम् । पक्षे महिषी कृताभिषेका राज्ञी । वृषः धर्म इति परिहारः । "महिषी नृपयोषिति । सैरिभ्यामोषधीभेदे" इति हेमचन्द्रः । "कृताभिषेका महिषी" इत्यमरः । "वृषो धर्मे बलीवर्दे शृङ्ग्यां पुराशिभेदयोः ।" इति मेदिनी । **अतरल इति** । तरलः मध्यमणिः । तद्भिन्नः अतरलः । महान् श्रेष्ठः नायकः मध्यरत्नम् । मध्यमणिभिन्नस्य मध्यमणित्वं विरुद्धम् । पक्षे तरलः चञ्चलः स न भवतीत्यतरलः धीरः । महान् नायकः नेता इति परिहारः । "तरलो भास्वरे चले हारमध्यमणौ षिद्गे" इति, "नायको नेतरि श्रेष्ठे हारमध्यमणावपि ।" इति च क्रमेण हैमविश्वौ । नामेति प्रसिद्धावव्ययम् । "आभासत्वे विरोधस्य विरोधाभास इष्यते ।" इति विरोधाभासलक्षणम् । **यत्रचेति** । यस्मिन् चिन्तामणिनाम्नि नृपतौ । धरणीमण्डलं शासति रक्षति, एवं परं एवमेव व्यवस्थितमित्यन्वयः । **छलेति** । छलस्य "वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" इति सूत्रलक्षितस्य त्रिविधस्य छलस्य, जातेः "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति निरूपितायाः जातेः, निग्रहस्य "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" इति लक्षितस्य निग्रहस्थानस्य च प्रयोगः छलजातिनिग्रहप्रयोगः । वादेषु "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति लक्षितेषु शास्त्रार्थविमर्शेष्वेव, न तु प्रजासु, तद्यवहारेषु वा, चलेन कपटेन जातेः शूद्रत्वादिजातेः निग्रहस्य निह्नवस्य प्रयोगः उक्तिः । यद्वा छलजात्या कपटजन्मना छद्मपरिग्रहेणेत्यर्थः । निग्रहस्य बन्धनस्य भर्त्सनस्य वा प्रयोगः करणम् । यद्वा निग्र-

नास्तिकता चार्वाकेषु, कण्टकयोगो योगेषु, परीवादो

---

हस्य सीमायाः प्रयोगः क्षेत्रसीमाविवादविषये कपटेन इदं मदीयमेवेति साधनम् । "जातिः सामान्यजन्मनोः ।" इत्यमरः । "अथ निग्रहः । बन्धने भर्त्सने सीम्नि" इत्यनेकार्थसंग्रहः । न्यायशास्त्रेष्विति क्वचित्पाठः । अत्र सर्वत्र परिसंख्यालंकारः । " किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते । तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥" इति तल्लक्षणम् । **नास्तिकतेति** । नास्ति परलोक इति मतिर्यस्य स नास्तिकः । अस्ति नास्ति दिष्टमिति ठक् । तस्य भावः नास्तिकता । चार्वाकेषु लोकायतिकेषु । तेषां "तावानेव हि लोकोऽयं यावानिन्द्रियगोचरः ।" इति हि सिद्धान्तः । न तु प्रजासु नास्तिकता न अस्ति किंचिदपि यस्य स नास्तिकः दरिद्रः तस्य भावः नास्तिकता दारिद्र्यम् । विद्यमानवाचिना यत्किंचिद्वस्तुलाक्षणिकेन अस्तीति तिङन्तप्रतिरूपकाव्ययेन नशब्दस्य बहुव्रीहिः, समासान्तः कः । **कण्टक इति** । कण्टकस्य पुलकस्य योगः संबन्धः । योगेषु "योगश्चित्तवृत्तिनिरोधः" इति लक्षितेषु योगेषु । तदा योगिनां ब्रह्मानुभवेन पुलकोद्गमसंभवादिति भावः । यद्वा योगेषु संयोगेषु । तदा रोमाञ्चस्य सात्विकभावस्य संभवात् । न तु प्रजासु राज्ये वा कण्टकस्य क्षुद्रशत्रोः योगः । यद्वा कण्टकस्य सूच्यग्रस्य योगः अङ्गुल्यग्रेषु प्रवेशनम् । महापराधिनां दण्डनाया अयमेकः प्रकारः, यदङ्गुल्यग्रेषु सूचीप्रवेशनम् । न हि तादृशा दण्डनीयाः प्रजासु सन्ति । येषां कण्टकयोगो दण्डना स्यादिति भावः । एवमेव करच्छेदनेत्रोत्पाटनादिकं दण्डनायाः प्रकारान्तरमिति बोध्यम् । "कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः ।" इति मेदिनी ।

**वीणासु, खलसंयोगः शालिषु, द्विजिह्वसंगृहीतिः अहि-तुण्डिकेषु, करच्छेदः कुड्मलग्रहणेषु, नेत्रोत्पाटनं मुनीनाम्,**

---

शिवरामस्तु नियोगेषु इति पाठं स्वीकृत्य, "कण्टकः अनेनेदं भुक्तमिति तत्स्वामिनि कथकः तस्य योगो नियोगेषु । मोहासिया इति भाषायाम् । पक्षे कण्टकः क्षुद्रशत्रुः । कण्टकः क्षुद्रशत्रौ च कर्मस्थानिकदूषणे । इति विश्वः ।" इति व्याचष्टे । **परीवादइति** । परीवादः वीणावादनवस्तु, पक्षे अपवादः । "परीवादोऽपवादे स्याद्वीणावादनवस्तुनि ।" इति मेदिनी । परीवादः तन्त्री । "तन्त्रीनिर्वादयोः परीवादः" इति वैजयन्तीति परे । **खलेति** । खलः व्रीह्याद्याघट्टनस्थानम्, पक्षे खला दुर्जनाः । शालयः कलमाः । "व्रीह्याद्याघट्टनस्थाने खलो धूर्ते त्वयं लिषु ।" इति नानार्थरत्नमाला । **द्विजिह्वेति** । द्वे जिह्वे येषां ते द्विजिह्वाः सर्पाः, पक्षे पिशुनाः । अहितुण्डेन सर्पमुखेन दीव्यन्तीति आहितुण्डिकाः व्यालग्राहिणः । "द्विजिह्वो भुजगे खले ।" इति नानार्थरत्नमाला । "व्यालग्राह्याहितुण्डिकः ।" इत्यमरः । अहितुण्डिक इति पाठे संज्ञापूर्वकत्वान्नवृद्धिरिति सुधा । **करच्छेद इति** । करच्छेदः करेण वृन्तस्य छेदः । कुड्मलग्रहणेषु मुकुलापचयेषु । न तु करस्य हस्तस्य छेदः, तादृशस्य दण्डनीयस्याभावात् । यद्वा करस्य राजदेयभागस्य छेदः विभङ्गः । करदा एव सर्वेऽपि नृपतय इति भावः । शिवरामस्तु क्लृप्तकरग्रहणेषु इति पाठं स्वीकृत्य "करच्छेदः क्लृप्तादपि राजदेयभागान्न्यूनीकरणम्" इति व्याचष्टे । **नेत्रेति** । नेत्राणां वल्कलानां मूलानां वा उत्पाटनं उत्पाट्य उद्धृत्य वा स्वीकरणम् । पक्षे नेत्रोत्पाटनं नयनोत्पाटनं स च दण्डनाविशेषः । मुनयः ऋषयः वृक्षविशेषाश्च । अत्र विरोधाभासोऽपि । "नेत्रं वस्त्रेऽक्षिण वैशाखगुणभूरुहमूलयोः ।" इति नानार्थरत्नमला । "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने ।"

**राजविरुद्धता पङ्कजानाम्, सार्वभौमयोगो दिग्गजानाम्, सूचिभेदो मणीनाम्, शूलभङ्गो युवतिप्रसवेषु, अग्नितुला-**

---

इति मेदिनी । **राजेति** । राजा चन्द्रः, पक्षे नृपतिः । द्विजराजेति पाठान्तरम् । द्विजराजः चन्द्रः, पक्षे द्विजाश्च राजा च । **सार्वभौमेति** । सार्वभौमेन तदाख्येन दिग्गजेन योगः संबन्धः, दिग्गजानाम् । सार्वभौमस्य तदन्तःपातित्वादिति भावः । न तु अन्येषां नृपतीनां सार्वभौमेन सार्वभौमपदेन योगः संबन्धः । अस्यैव चक्रवर्तित्वात् । यद्वा सार्वभौमस्य सार्वभौमपदस्य योगः सर्वस्या भूमेरीश्वर इत्येवं रूपा व्युत्पत्तिः । दिग्गजस्येति पाठे तु उभयत्रापि सार्वभौमपदं शब्दपरम् । **सूचीति** । सूचिः लोहमयच्छिद्रकरणोपकरणविशेषः । तया भेदः छिद्रकरणम् । पक्षे सूचिभेदो दण्डनाविशेषः । यद्वा सूचिभिः पिशुनैः भेदः परस्परकलहोत्पादनम् । पिशुनार्थकस्सूचिन् शब्द इकारान्तो नान्तो वा । "सूची वेधकदुर्जनौ ।" इति केशवः । यद्वा सूचिः नृत्यविशेषः तस्यां भेदः नाट्यशास्त्रोक्तरीतेर्व्यत्यासः । सर्वासामपि नर्तकीनां सुशिक्षितत्वादिति भावः । "स्त्री सूचिर्नृत्यभेदे च व्यधनीशिखयोरपि ।" इति रत्नकोशः । **शूलेति** । शूलेन प्रसवामयेन भङ्गः क्लेशः । पक्षे शूलेन वध्यशङ्कुना भङ्गः विभेदः । शूलेष्वारोपणीयो दण्ड्यो नास्तीति भावः । यद्वा शूलस्य केतनस्य भङ्गः । अस्य राज्ञो न कुत्रापि ध्वजभङ्ग इत्यर्थः । "वध्यशङ्कौ शस्त्रमात्रे शूलोऽस्त्री प्रसवामये ।" इत्यजयः । "शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति ।" इति मेदिनी । **अग्नीति** । अग्निना शुद्धिः नैर्मल्यवर्णौज्ज्वल्यम्, तुलया घटेन शुद्धिः मानविशुद्धिश्च, स्वर्णानामेव । न तु प्रजानां अग्निदिव्येन तुलादिव्येन च शुद्धिः । तादृशस्य महाभियोगस्य प्रजासु अभावादिति भावः । दिव्यप्रमाण-

**शुद्धिः स्वर्णानाम्, दुश्शासनदर्शनं महाभारते, करपत्र-विदारणं जलजानाम्, परमेवं व्यवस्थितम्। महावराहो**

---

प्रकरणे "तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये । महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ।" इत्यारभ्य याज्ञवल्क्येन तुलाग्निदिव्यस्वरूपमेवमुक्तम् । "तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वावतारितः । त्वं तुले सत्यधामासि पुरा दैवैर्विनिर्मिता । तत्सत्यं वद कल्याणि संशयान्मां विमोचय । यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय । शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ।" इति, "करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् । सप्ताश्वत्थस्य पर्णानि तावत्सूत्रेण वेष्टयेत् । त्वमग्ने सर्वभूतानामन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम । तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् । अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि । स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् । षोडशाङ्गुलिकं ज्ञेयं मण्डलं तावदन्तरम् । मुक्त्वाग्निं मृदितव्रीहिरदग्धश्शुद्धिमाप्नुयात् । अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ।" इति च । विस्तरस्तु याज्ञवल्क्यव्यवहारकाण्डतत्रत्यविज्ञानेश्वरीययोर्द्रष्टव्यः । **दुश्शासनेति** । दुश्शासनः दुर्योधनस्यानुजः, पक्षे दुष्टं शासनं दुश्शासनम् । **करपत्रेति** । करैः सूर्यकिरणैः पत्राणां दलानां विदारणं परस्परविश्लेषः विकासनमिति यावत् । यद्वा करः हस्तः । जलजानां पद्मानाम् । यद्वा जलजानां शङ्खानामेव करपत्रेण क्रकचेन विदारणं संस्काराय । न तु प्रजानां करपत्रेण विदारणं दण्डनाविशेषः । करपत्त्रविदारणं चन्दनानामिति क्वचित्पाठः ।

उपरिष्टात् "नास्ति वागवसरः पूर्वतरेषु राजसु" इति वक्ष्यति । तदेवोक्तिभङ्ग्या समर्थयते—**महावराह इत्यादिना** । गोलाया भूमेः

गोत्रोद्धरणप्रवृत्तोऽपि गोत्रोद्दलनमकरोत्। राघवः परिहरन्नपि जनकभुवं जनकभुवा सह वनं विवेश। भरतो रामे दर्शितभक्तिरपि राज्ये विराममकरोत्। नलस्य दमयन्त्या मिलितस्यापि पुनर्भूपरिग्रहो जातः। पृथुरपि गोत्रसमुत्सारणविस्तारितभूमण्डलः। तदित्थं नास्ति वागवसरः

---

उद्धरणाय प्रवृत्तोऽपि गोत्राया भूमेः उद्दलनं चूर्णीकरणं अकरोदिति गोत्रस्य वंशस्य उद्धरणाय प्रवृत्तोऽपि गोत्रस्य वंशस्य उद्दलनं अकरोदिति वा विरोधः। पक्षे गोत्राः पर्वता इति परिहारः। "गोत्रं क्षेत्रेऽन्वये छत्रे संभाव्ये बोधवर्त्मनोः। वने नाम्नि च, गोत्रोऽद्रौ, गोत्रा भुवि गवां गणे।" इति हैमः। अत्र असङ्गतिभेदोऽलङ्कारः। "अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा।" इति तल्लक्षणात्। मतभेदेन विभावनाविशेषः, विभावनाविशेषोक्त्योः संकरो वा। **राघव इति**। जनकस्य पितुः भुवं भूमिं राज्यमित्यर्थः। जनकात्पितुर्भवतीति जनकभूः स्वसा च। जनकभुवा जनकराजपुत्र्या सीतया, भगिन्या च। **भरत इति**। विरामं विरक्तिं रामाभावं च। रामस्याभावो विराममिति पक्षे अव्ययीभावः। "विरामो रामाभावः" इति विवृण्वन् शिवरामस्तु चिन्त्यः। **नलस्येति**। पुनर्भूः द्विवारं वृता स्त्री तस्याः परिग्रहः स्वीकारः। पुनर्भूपरिग्रहश्च शास्त्रनिषिद्ध इति नलस्तावच्छास्त्रोल्लङ्घीति भावः। "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।" इति याज्ञवल्क्यः। पुनः पुनरपि भूपरिग्रहः पृथ्वीलाभ इति परिहारः। **पृथुरिति**। गोत्रस्य स्ववंशस्य लक्षणया स्ववंशजानां समुत्सारणेन अपवाहनेन विस्तारितं भूमण्डलं येन स तथा। स्ववंशविरोधी पृथुरिति भावः। पक्षे गोत्राः पर्वता इति परिहारः। पृथुः किल पुरा पर्वतानुत्सार्य

पूर्वतरेषु राजसु । स पुनरन्य एव देवो न्यक्कृतसर्वोर्वीपतिचक्रचरितः । तथाहि । स पर्वतः कटकसञ्चारिणो गन्धर्वान् दर्शितश्रृङ्गोन्नतिः सुखयन्न विरराम । स हिमा-

---

भूमिं समीचकारेति विष्णुपुराणे । **तदित्थमिति** । पूर्वोक्तरीत्या तेषां विरुद्धाचारत्वेन नास्ति तत्र प्रशंसावाचो विषय इति भावः । अत्र पूर्वतरेषु राजसु इत्युक्तेः, राघव इत्यादिना निरूपितानां मध्ये कथं महावराहस्य संघटनमिति सुधीभिर्विचार्यम् । **स पुनरिति** । अन्यः विलक्षणः । अत्र भेदकातिशयोक्तिरिति शिवरामः । वैलक्षण्यमेव प्रतिपादयितुमारभते—**तथाहीति** । पर्वतः शैलः, उत्सवसहितश्च । पर्व उत्सवः अस्यास्तीति विग्रहे "तप्पर्वमरुद्भ्याम्" इति मत्वर्थीयः तप्प्रत्ययः । अत्र रूपकमलङ्कारः । "रूपकं तदभेदो य उपमानोपमेययोः ।" इति लक्षणात् । रूपकस्यापि साहश्यमूलकतया श्लेषेण धर्मैक्यं संपादयति — **कटकेत्यादिना** । कटकः सेना, पक्षे अद्रिनितम्बश्च ।" कटकस्त्वद्रिनितम्बे बाहुभूषणे । सेनायां राजधान्यां च" इति हैमः । **गन्धर्वाः** अश्वाः, देवगायकाश्च । "अश्वे गन्धर्वो दिव्यगायने ।" इत्यमरः। **दर्शितेति** । दर्शिता श्रृङ्गस्य प्रभुत्वस्य उत्कर्षस्य वा उन्नतिः गौरवं उच्छ्रायो वा येन स तथा । यद्वा श्रृङ्गं चिह्नं ध्वजः । उन्नतिः औन्नत्यम् । युद्धकाले हि ध्वजस्तावदुत्क्षिप्य दर्श्यते । पक्षे श्रृङ्गं शिखरम् । "श्रृङ्गं चिह्नविषाणयोः । क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्ष सानुषु ।" इति हैमः । यद्वा राजपक्षे श्रृङ्गं नाम वाद्यविशेषः । तद्वादनं च युद्धारम्भसूचनाय उत्साहसंपत्तये सामूह्यकरणाय वा युद्धे भेरीताडनवत् क्रियत इति प्रसिद्धम् । "स च प्रतस्थे सह मित्रवर्गैः प्रचण्डश्रृङ्गध्वनिपूरिताशैः ।" इति कृष्णविलासे । विररामेत्यत्र व्याङ्परिभ्य इति

लयो नावश्यायोच्छलितः, नो मायाजन्मने हितश्च । स हिमानीगिरिस्थितः, वृषध्वजश्च । स सदागतिः, अवधू-

---

परस्मैपदम् । **स हिमालयइति** । सः राजा । मालयः लक्ष्मी-गृहम् । हीतिप्रसिद्धौ । पक्षे हिमालयः हिमवत्पर्वतः । **नावश्यायेति** । अवश्यायेन गर्वेण उच्छलितः स्वस्थितेः च्युतः, न । यद्वा अवश्यात् आवश्यकात् आयात् धनागमात् अयात् शुभावहविधेर्वा उच्छलितः प्रभ्रष्टः, न । सर्वदा जागरूकस्सर्वत्रेति भावः । आवश्यकार्थे अवश्यमित्यव्ययमिव अवश्यशब्दोऽप्यस्ति । अत एव ओरावश्यके इत्यत्र आवश्यक इति योपधत्वलक्षणो भावे वुञ् । स्पष्टं चेदमन्यत्र । "ग्रामेषु स्वामिग्राह्यो भाग आयः ।" "अयः शुभावहो विधिः ।" अवशी आयोच्छलित इति पदच्छेदः । अवशी इन्द्रियवशः सन् आयोच्छलितो यः, स न भवतीति वा । यद्वा नावश्यायः अच्छलित इति पदच्छेदः । नावश्यायः अदर्पः । अच्छलितः अवञ्चितः । पक्षे अवश्यायेन हिमेन उच्छलितः ऊर्ध्वंगतः प्रवृद्ध इत्यर्थः । "अवश्यायो हिमे दर्पे" इति विश्वः । अवश्यायोच्चालित इति पाठान्तरम् । **नो मायेति** । मायायाः कपटस्य जन्मने उत्पत्तये । हितः अनुकूलः न । निष्कपट इत्यर्थः । पक्षे माया पार्वती । यद्वा न उमाया इति छेदः । उमा गौरी । प्रसिद्धस्तु हिमालयः अवश्यायोच्छलितः (उ) मायाजन्मने हितश्च । अयं पुनर्हिमालयो न तथेति ततोऽस्य व्यतिरेकः । हिमालयत्वेऽपि अवश्यायोच्छलितत्वादिकं नेति विरोधश्चेत्येके । अधिकाभेदरूपकमित्यन्ये । पर्वतपक्षे उमाया जन्मने अहित इति पदच्छेदेन अत्र पूर्वत्र च कथंचिदन्वयेनैव कृतं कस्यचिद्व्याख्यानन्तु व्यतिरेकस्वरसवाहिवाक्यशैल्यननुगुणम् ॥ **स इति** । स हि । मानी मानयुक्तः । "मानश्चित्तसमुन्नतिः ।" इत्यमरः । गिरि

ताखिलकान्तारः, पावकाग्रेसरः, न भोगोत्सुकः, सुमनोहरश्च। स रत्नाकरः, अनहिभयः, अगाधः, समर्यादः, नोद्रो-

---

वाचि स्थितः । सत्यवागित्यर्थः । वृषः धर्मः ध्वजः यस्य स वृषध्वजः धार्मिक इत्यर्थः । पक्षे, हिमानीगिरौ हिमवत्पर्वते स्थितः हिमानीगिरिस्थितः । महत् हिमं हिमानी । "इन्द्रवरुण" इति आनुक् ङीप् च । "हिमारण्ययोर्महत्वे" इति वार्तिकम् । "हिमानी हिमसन्ततिः ।" इत्यमरः । वृषः वृषभः ध्वजः यस्य स वृषध्वजः शिवः । "वृषो धर्मे बलीवर्दे" इति मेदिनी । अत्रापि वृषध्वजस्य हिमानीगिरिस्थितत्वमुक्तमिति व्यतिरेकः, तस्यापि संभवादन्वयो वा । रूपकम् । **स सदेति** । सः । सतां साधूनां आगतिः आगमनस्थानं पोषक इति यावत् । पक्षे सदा गतिः गमनं यस्य स सदागतिः वायुः । "मातरिश्वा सदागतिः ।" इत्यमरः । सः सदागतिः वायुरिति रूपकम् । श्लेषेण धर्मैक्यमाह – अवधूतेत्यादिना । अवधूतं निराकृतं अखिलं कान्तारं दुर्भिक्षं दुर्गमो विषयो वा येन स तादृशः । पक्षे अवधूतं कम्पितं अखिलं कान्तारं वनं येन स तथा । "कान्तारं दुर्गमे दुर्गे दुर्भिक्षे काननेऽपि च ।" इति अजयः । **पावकेति** । पावकाः परिपूताः । पक्षे पावकः अग्निः । **न भोगेति** । भोगेषु उत्सुको न । केवलं विषयसक्तो नेत्यर्थः । पक्षे नभसि आकाशे गाः गमनं तत्र उत्सुकः । गा इति गाङ् गतौ इत्यस्मात् भावे क्विप् । शिवरामस्तु "नभोगेषु मेघेषु उत्सुकः । तथा च कालिदासः । मरुत्सखस्येव वलाहकस्येति" इति व्याचष्टे । **सुमन इति** । सुमनसः विद्वांसः, पक्षे पुष्पाणि । "सुमनाः प्राज्ञदेवयोः । जात्यां पुष्पे च" इति हैमः । **स रत्नाकर इति** । सः राजा । समुद्रः मुद्रया राजचिह्नेन अङ्गुलीयकेन सहितः । पक्षे समुद्रः सागर इति रूपकम् । **रत्नाकर**

**इति**। रत्नानां श्रेष्ठवस्तूनां आकरः। "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते।" पक्षे रत्नानां प्रसिद्धानां रत्नानां आकरः निधिः। **अनहिभय इति**। न विद्यते अहिभयं स्वपक्षप्रभवा भीतिः यस्य स तथा। "महीभुजामहिभयं स्वपक्षप्रभवं भयम्।" इत्यमरः। पक्षे अहिभयं जलसर्पजा भीः। व्यतिरेकगर्भमिदं विशेषणम्। जलसर्पविषस्य क्रौर्याभावेन नास्ति तत्राहिभयमित्यन्वयि विशेषणं वा। अनहिमय इति पाठं स्वीकृत्य समुद्रपक्षे अव्याख्याय राजपक्षे परं "अहिरिवाहिः खलः तन्मयो न भवतीत्यनहिमयः" इति शिवरामो व्याचष्टे। कश्चित्तु अनतिमय इति पाठाभ्युपगमेन "नतिः नमस्कारः। नतिमयो न भवतीत्यनतिमयः। यं कंचिदपि न नमतीत्यर्थः। पक्षे तिमयः मत्स्यविशेषाः। अत्र ते न सन्तीति नतिमयः। नतिमयो न भवतीत्यनतिमयः। सन्त्येवात्र तिमय इति यावत्। अत्र समुद्रपक्षे तिमिशब्दस्य समासे अनतिमिरित्येव रूपं युक्तम्। अनतिमय इति रूपं विचारणीयम्।" इत्याह। तथा पाठेऽपि समुद्रपक्षे अत्यन्तं मया जलोष्ट्रा जलवेसरा वा यत्रेति अतिमयः। स न भवतीति व्याख्यातुं शक्यते। अन्वयो व्यतिरेको वा। "मया दैत्योष्ट्रवेसराः" इति हैमः। **अगाधः** गम्भीरः, पक्षे अतलस्पर्शः। "अगाधमतलस्पर्शे" इत्यमरः। "अगाधः लिप्सारहितः। गाधा लिप्सेत्यमरः" इत्यपि राजपक्षे शिवरामः। **समर्यादः** सांस्थितिकः उचितानतिक्रमणशील इत्यर्थः। पक्षे सीमाविशिष्टः। "मर्यादा स्थितिसीमयोः।" इति हैमः। **नोद्रोक इति**। उद्भूतं रोकं छिद्रं पराभ्यूहस्थानं दोषो वा यस्य स उद्रोकः, स न भवतीति नोद्रोकः अप्रमत्तः निर्दोषो वेत्यर्थः। समुद्रस्तु उद्रोकः उद्गतबिल इति व्यतिरेकि विशेषणमेतत्। अयं खलु गद्यकविवाक्यशैल्याः कोऽपि पन्थाः, यन्मध्येपथं विच्छित्तिविरचनं नाम विशेषणेनैवंप्रायेणेति। एवमुत्तरत्रापि क्वाचि-

कः, विस्मयः, सदा हिमकराशयः, अमृतमयः, सत्पात्रः,

दवसेयम् । समुद्रपक्षे रोकाणि नावः उद्गता यत्रेति वा। "रोकं क्रयणभेदे नावि बिलेचरे (ले)। रोकोंशौ" इति हैमः। "पक्षे रोको जलजन्तुविशेषः उत्सृष्टरोको न भवतीति नोद्रोकः सरोक इत्यर्थः।" इति कश्चित्। **विस्मयः** आश्चर्यभूतः । उभयत्र तुल्यमिदम्। राजपक्षे, विगतः स्मयो गर्वो यस्येति वा । शिवरामस्तु "नोद्रोकोऽप्यस्य विस्मयः" इति पाठमङ्गीकृत्य "उद्गतः रोको दीप्तिर्यस्य सः । रुच दीप्तौ। घञ् । इत्यप्यस्य न विस्मयः। अलुब्धत्वादस्य दीप्तेर्न नाश इति भावः। यद्वा अस्य उद्र इति न कोऽपि विस्मयः। जलाखेटशीलस्यास्योद्रसंग्राहकत्वादिति भावः । पक्षे अस्य उद्र इति न कोऽपि विस्मयः। उद्रो जलमार्जारः।" इति व्याचष्टे। **सदेति**। सदाः दानसहितः । हिमकरः चन्द्र इव (शीतलः) आशयः अभिप्रायः मनो वा यस्य सः तथोक्तः। पक्षे हिमकरस्य चन्द्रस्य आशयः स्थानम् । यद्वा सदा अहीनां सर्पाणां मकराणां नक्राणां च आशयः स्थानम् । "आशयः छन्द आधारे" इति त्रिकाण्डशेषः । **अमृतमयः** अमृतस्वरूपः । तद्वदानन्दजनक इति भावः। यद्वा अमृतैः स्वर्णैः प्रचुरः अमृतमयः। प्राचुर्ये मयट् । "अमृतं हृद्यं वचः" इति कश्चित् । "अमृतं यज्ञशेषेऽम्बुसुधामोक्षेष्वयाचिते । अन्नकाञ्चनयोर्जग्धौ खे (स्वे) स्वादुनि रसायने । घृते हृद्ये गोरसे चामृतो धन्वन्तरौ सुरे ।" इति हैमः । पक्षे अमृत सुधा जलं वा ॥ **सत्पात्र इति** । सन्ति विद्यमानानि पात्राणि योग्यपुरुषाः मन्त्रिणो वा यस्य स तथा। पक्षे पात्रं तीरद्वयमध्यम् । "पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे । पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते ।" इति विश्वः। सत्पोत इति पाठे तु, पोता अर्भकाः, पक्षे यानपात्राणि । "पोतः शिशौ वहित्रे च गृहस्थाने च वाससि ।" इति मेदिनी ।

तस्याचलो न क्रोधः, महानदीनः, समुद्रश्च । स क्षणदानन्दकरः, कुमुदवनबन्धुः, सकलकलाकुलगृहम्, नता-

---

**तस्येति** । तस्य राज्ञः । क्रोधः कोपः । अचलः स्थिरः, न । किन्तु क्षणिक एवेति भावः । तदेव हि महापुरुषस्य प्रकृतिः । पक्षे नक्रः अधः इति छेदः । तस्य समुद्रस्य । अधः अधोभागे । अचलः पर्वतः । मैनाक इति शिवरामः । नक्रः मकरश्च । अस्तीति शेषः । **महानिति** । महान् श्रेष्ठः । **अदीनः** न दीनः अकृपण इत्यर्थः । पक्षे महानदीन इत्येकं पदम् । महतीनां नदीनां इनः पतिः । "इनः सूर्ये नृपे पत्यौ" इति विश्वः । **स इति** । "स चन्द्र इव" इति क्वचिन्मुद्रितपुस्तके पाठः । "नताराऽतिवलश्चन्द्रश्च" इति प्राचीनतालपत्रपुस्तके पाठः । अयमेव साधीयान् । रूपकप्रकरणानुरोधात् । एवमेव उत्तरवाक्ये परिदृश्यमानः "अचलाधिकलक्ष्मीः सुमेरुरिव" इति पाठोऽपि न स्वारसिकः । वाक्यान्ते उपमायोजनमपि न वाक्यप्रवाहानुगुणम् । तत्रापि "सुमेरुश्च" इत्येव तालपत्रपुस्तके दृश्यते । सर्वत्र चास्माभिः प्राचीनः स्वारसिकस्तालपत्रपुस्तकधृतः पाठएव प्रमाणीकृतः । सः, चन्द्रः आह्लादकः । चदि आह्लादने । पक्षे इन्दुः । सर्वत्र चकारः पूर्वोक्तसमुच्चायकः । **क्षणदेति** । क्षणं उत्सवं ददातीति क्षणदः । सचासौ आनन्दकरश्चेति क्षणदानन्दकरः । यद्वा क्षणे उत्सवे पर्वादिकाले तत्तदवसरे क्षणे क्षणे वा दाः दानम् । तेन आनन्दकरः । "क्षणदानां सुखप्रदानां आनन्दकर्ता । स्वहिते रतान् सन्तोषयतीत्यर्थः ।" इत्यपि शिवरामः । पक्षे क्षणदा रात्रिः । **कुमुदेति** । कोः पृथ्व्याः मुदि सन्तोषे अवने रक्षणे च विषये बन्धुः । यद्वा मुदा अवनं मुदवनम् । कोः मुदवने बन्धुः । कुमुदः कृपणाः दीनाः तेषामवने रक्षणे बन्धुरिति वा । "कुमुत्त्रिषुस्यात्कृपणे कैरवे तु नपुंसकम् ।" इति मेदिनी ।

वेहितः, सानुचरोऽपि न गोत्रभूषितः। स त्रिशंकुरपि न

---

आसक्तः । सर्वदा तत्प्रसादनैकप्रवण इत्यर्थ इति वा परिहारः । णू स्तुतौ। **सानुचरोऽपीति** । सानुषु पर्वतप्रस्थेषु चरतीति सानुचरः । तादृशस्सन्नपि । गोत्रस्य पर्वतस्य भुवि भूमौ उषितः स्थितः गोत्रभूषितः, न भवतीति विरोधः । पक्षे अनुचरैः सेवकजनैः सहितः सानुचरः । गोत्रेण नाम्ना भूषितः अलंकृतः, न । महावीरोचितानां कर्मणामकरणेन न कुत्रापि विख्यात इत्यर्थ इति परिहारः। यद्वा सानुषु वनेषु चरतीति सानुचरः। अथवा चरति भक्षयतीति चरः पचाद्यच् । सानूनां पल्लवानां चरः भक्षक इति भूधरादिवत्समासः । सानुरित्येतत् वन्यानां फलमूलादीनामप्युपलक्षणम् । अस्य रिपुवर्गः राज्यभ्रष्टः सन् वने वन्येन वर्तयतीति भावः । गोत्रभुवि वंशभूमौ कुलक्रमागते राष्ट्रे इत्यर्थः । उषितो न भवति । उषित इति वसतेः कर्तरि क्तः । यद्वा गोत्रेण छत्रेण भूषितो न भवति । वने पलायमानस्य रिपुवर्गस्य छत्रादिराजचिह्नानि कुतः सन्तीति भावः । "सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने ।" इति, "गोत्रं नाम्नि कुले क्षेत्रे कानने छत्रवर्त्मनोः । संभावनीये बोधेऽपि गोत्रः क्षोणिधरे स्मृतः।" इति च विश्वः । अस्य च रिपवः प्रतिभयकर्माणोऽपि एतद्विषये प्रतिकर्तुमक्षमास्सन्तः एतत्प्रसादनैकप्रवणाः केचित् सपरिजना वनशरणाश्च कतिपये इत्येवमासन्निति प्रकरणार्थः । शिवरामस्तु भीष्मोपीत्यारभ्य गोत्रभूषित इत्यन्तं चिन्तामणेर्विशेषणमभिमन्यमान एवं व्याचष्टे। "भीष्मोऽपि शन्तनुपुत्रोऽपि । अशान्तनवे पितृभिन्नाय हितः । पित्रे न हित इति विरोधः । शन्तनुवाचकः शब्दो दीर्घादिः शान्तनुरित्यप्यस्ति । तथा च त्रिविक्रमभट्टः । शान्तनुतनय इति । भीष्मो राजगुणैर्भयानकः । अशान्तं अनस्तमितं नवं स्तुत्यं नवं नवीनं अन्येभ्यो विलक्षणं

नाक्षत्रपथच्युतः, शंकरोऽपि न विषादी, पावकोऽपि न कृष्ण-

---

वा ईहितं चेष्टितं यस्येति परिहारः । सानुषु शिखरेषु चरति तादृशोऽपि न गोलभुवि पर्वतभूमौ उषितः स्थित इति विरोधः । अनुचरैः सेवकैः सहितः । न गोत्रैः गोत्रजैर्भूषित इति परिहारः । स्वयमेव तेषां भूषक इत्यर्थः ।" इति । अत्र कुत्र वा वाक्यस्वरसस्य कटाक्षपात इति सहृदया एव विमृशन्तु । अत्र सर्वत्र विरोधाभासोऽलंकारः । एतावता शम्व-पकर्षनिरूपणरूपया भङ्ग्या राजानं वर्णयित्वा संप्रति पुनरपि विरोधा-भासं पुरस्कृत्य साक्षादेव तं वर्णयति— **स त्रिशङ्कुरपीत्यादिना** । सः चिन्तामणिः । त्रिशङ्कुः इक्ष्वाकुवंशजः कश्चिद्राजा । तथा सन्नपि । नक्षत्राणां अयं नाक्षत्रः पन्थाः मार्गः नाक्षत्रपथः आकाशं तस्मात् च्युतो नेति विरोधः । तस्य आकाशात् भ्रष्टत्वात् । पक्षे त्रयः शङ्कवः शक्तयः यस्य सः त्रिशङ्कुः । "शङ्कुः शक्तित्रये स्थाणौ" इत्यजयः । "त्रिषु कालेषु शं सुखं कुः पृथ्वी कालत्रयेऽपि सुखिता पृथ्वी यस्य स तथा ।" इत्यपि कश्चित् । त्रिषु कालेषु प्रातर्मध्याह्नसायेषु शङ्कुः शंभुः तत्पूजेति यावत् यस्य स तथेति वा । "शङ्कुः पत्त्रसि-राजालसंख्याकीलकशंभुषु ।" इति हैमः । क्षत्रस्य पन्थाः क्षत्रपथः राजनीतिमार्गः तस्मात् च्युतः भ्रष्टः ना मनुष्यो न । क्षत्रधर्मानुसारी-त्यर्थ इति परिहारः। ना इति पृथकपदम् । नृशब्दस्य प्रथमैकवचने ना इति रूपम् । "अक्षत्रपथच्युतः क्षत्रपथवर्ती स न भवति नाक्षत्र-पथच्युतः क्षत्रपथच्युत इत्यर्थः । स न भवति न नाक्षत्रपथच्युतः क्षत्रपथवर्तीत्यर्थः ।" इति कश्चित् । "त्रिशङ्कुरिव नक्षत्रपथच्युतः" इति शिवरामसंमतः पाठस्तु विरोधाभासप्रकरणविरोधान्न हृद्यः । **शंकरोऽ-पीति** । शंकरः शिवः । सः, विषं अत्तीति विषादी न भवतीति विरोधः ।

**वर्त्मा, आश्रयाशोऽपि न दहनश्च, नान्तक इवाकस्मादपहृत-जीवनः, न राहुरिव मित्रमण्डलग्रहणसंवर्धितरुचिः, न नल-**

---

शंकरः प्रजानां क्षेमंकरः । विषादी विषादवान् न भवति । सर्वदा संतुष्ट एवेति परिहारः । **पावकोऽपीति** । पावकः अग्निः सन्नपि, कृष्णवर्त्मा अग्निः नेति विरोधः । पावकः पवित्रः पवित्रयितृको वा । कृष्णं मलिनं वर्त्म मार्गः आचार इत्यर्थः यस्य स कृष्णवर्त्मा दुराचारः । स न भवतीति परिहारः । "कृष्णवर्त्मा विधुंतुदे । दुराचारे हुताशे च" इति हैमः । **आश्रयाशोऽपीति** । आश्रयं अश्नातीति आश्रयाशः अग्निः । तथा सत्यपि न दहनः न सन्तापकर इति विरोधः । अग्नेः सन्तापकरत्वात् । पक्षे आश्रय-न्तीति आश्रयाः आश्रितजनाः तेषां आशा स्वाभीष्टपूरणप्रत्याशा यस्मिन् सः आश्रयाशः । न दहनः न कस्यापि संतापकर इति परिहारः । "पाव-कोऽपि न कृष्णवर्त्मा नाश्रयाशो न दहनश्च ।" इति क्वचित्पाठः । तत्पक्षे आश्रयाशः अश्रितनाशको नेति व्याख्येयम् । "आश्रयाशः पुमान्वह्नौ त्रिषु चाश्रयनाशके । इति विश्वः । पुनरपि श्लिष्टमालाव्यतिरेकेण तं वर्णयति — **नान्तक इवेत्यादिना** । अन्तक इव अकस्मादपहृतजी-वनो नेत्यन्वयः । एवमेवोत्तरत्रापि । **जीवनं** जीविका, अन्यत्र जीवितं च । "जीवनं वर्तने नीरप्राणधारणयोरपि ।" इति मेदिनी । "उपमा-नाद्यदन्यस्य व्यतिरेकः स एव सः ।" इति व्यतिरेकालङ्कारलक्षणम् । **न राहुरिवेति** । मित्रमण्डलं सुहृदां देशः, अन्यत्र सूर्यबिम्बम् । तस्य ग्रहणे अन्यत्रग्रहणेन विवर्द्धिता विशेषेण वर्द्धिता अन्यत्र विशेषेण छेदिता रुचिः स्पृहा अन्यत्र कान्तिः यस्य स तादृशः ।" मण्डलं देशबिम्बयोः ।" "वर्धनं छेदने वृद्धौ" "रुचिर्युतौ । स्पृहाभिषङ्गशोभासु" इति हैमः । **न नल इवेति** । अयं राजा, कलिना कैतवेन विजितः विग्रहः

इव कलिविजितविग्रहः, न चक्रीव सृगालवधलब्ध-स्तुतिसमुल्लसितः, नन्दगोप इव यशोदयान्वितः,

---

युद्धं यस्य सः कलिविजितविग्रहः। तादृशो न भवति । "कलिः कैतवलोकयोः।" इत्यजयः। नलस्तु, कलिना कलियुगाभिमानिदेवतया विजितः आक्रान्तः विग्रहः शरीरं यस्य तादृशः । "कलिः युद्धं तेन विजितः विग्रहः विरोधः यस्य स तथा। शत्रूणामभावात्।" इति राजपक्षे कश्चित्। "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे।" "विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम् ।" इति मेदिनी। कलिविघटित इति पाठान्तरम् । **न चक्रीवेति** । चक्री विष्णुः। सृगालानां क्षुद्रशत्रूणां वधेन लब्धा या स्तुतिः तया समुल्लसितः सन्तुष्टो न भवति । महावीरस्यास्य प्रबलरिपुनिबर्हणे एव परितोष इति भावः। "सृगालाः क्षुद्रशत्रवः।" इति भागुरिः। "सृगालः क्रोष्टा दुष्टो वा।" इति कश्चित्। पक्षे सृगालो नाम कश्चिद्दैत्यः। "सृगालौ दैत्यजम्बुकौ।" इति नानार्थरत्नमाला। "शृ (सृ) गालो दानवे फेरौ" इति हैमः। सृगालो वञ्चकः क्रोष्टुरित्यमरव्याख्यावसरे "तालव्या अपि दन्त्याश्च शम्बशम्बरशूकराः। रशनापि च जिह्वायां शृगालः कलशोऽपि च। इति शभेदः। शृगालो वञ्चके दैत्ये शृगालं डमरे विदुः। इति विश्वः।" इति सुधा। शिवरामस्तु "न चक्रीव कृष्ण इव शृगालस्य राजविशेषस्य वधेन मारणेन स्तुत्या समुल्लसितः। पक्षे शृगालः कातरः। शृगालो जम्बुके भीरुशूरे वै पार्थिवान्तरे। इति विश्वः। कोशे दानवान्तरे इति पाठस्त्वशुद्धः। एतन्मूलक एव जगद्धरभ्रमः।" इत्याह। पुनरपि उपमया वर्णयति — **नन्दगोप इवेत्यादिना**। नन्दगोपः श्रीकृष्णस्य पोषकः पिता। **यशोदयेति**। यशः कीर्तिः, दया कृपा, ता-

जरासन्ध इव घटितसन्धिविग्रहः, भार्गव इव सदानभोगः, दशरथ इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च, दिलीप इव सुदक्षिणान्वितः रक्षितगुश्च, राम इव जनितकुशलवयोरूपोच्छायः ।

---

भ्यां अन्वितः सहितः । पक्षे यशोदा नन्दगोपस्य पत्नी । **जरासन्ध इवेति** । जरासन्धः कश्चिद्राजा । **घटितेति** । घटितौ आचरितौ सन्धिः विग्रहश्च गुणौ येन स तथोक्तः । "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः । पक्षे घटितः जराख्यया पिशाचिकया कृतः संधिः सन्धानं यस्य तादृशः विग्रहः शरीरं यस्य स तथा । एतत्कथा च भारते द्रष्टव्या । **भार्गव इवेति** । भार्गवः शुक्रः । "उशना भार्गवः कविः ।" इत्यमरः । **सदानेति** ॥ दानं त्यागः, भोगः अनुभवः, ताभ्यां सहितः । पक्षे, सदा सर्वदा नभोगः आकाशगामी । केचित्तु "भार्गवः परशुरामः । सदानः सखण्डनः भोगः राज्यं यस्य स तथा । क्षत्रियान्तकारीत्यर्थः । "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु ।" इति विश्वः । "भोगस्तु भोजने वित्ते निर्वेशे पालने सुखे । वनितादिभृतौ राज्ये सर्पस्य फणकाययोः । " इति नानार्थरत्नमाला ।" इत्याहुः । **सुमित्रेति** । सुमित्राणि शोभनाः सुहृदः, पक्षे सुमित्रा नाम दशरथस्य पत्नी । **सुमन्त्रेति** ॥ सुमन्त्रः शोभनः मन्त्रः राज्ञां गुप्तविचारः । पक्षे सुमन्त्रः तन्नामा दशरथसारथिः ॥ **सुदक्षिणेति** । सुदक्षिणाः शोभनाः दक्षिणाः कुशलाः पण्डिता वा । यद्वा सुदक्षिणा शोभना दक्षिणा दानम् । पक्षे सुदक्षिणा दिलीपस्य पत्नी । **रक्षितेति** । रक्षिता परिपालिता गौः भूमिः, अन्यत्र नन्दिनी नाम सौरभेयी येन स तथा । गोस्त्रियोरिति ह्रस्वः । **राम इवेति** । रामः दाशरथिः । **जनितेति** ।

**तस्य च राज्ञः पारिजात इव आश्रितनन्दनः, हिमालय इव जनितशिवः, मन्दर इव भोगिभोगाङ्कितः, कैलास**

---

जनितः कुशलस्य क्षेमस्य वयसः यौवनस्य रूपस्य सौन्दर्यस्य च उच्छ्रायः महत्त्वं येन स तथा। "कुशलेन शोभनेन वयसा रूपस्य उच्छ्रायः जनितो येन" इति कश्चित्। "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्।" इति मेदिनी। पक्षे कुशः लवश्च रामस्य पुत्रौ। कुशलवौ यातीति कुशलवयः। 'आतोऽनुपसर्गे कः' इति कः। जनितः उत्पादितः कुशलवयः कुशलवसंबन्धी उरुः अधिकः उपोच्छ्रायः महिमा येन स तथा। उपोद्बलनमित्यादाविव उपोदोरुपसर्गयोर्विशिष्टार्थपरत्वम्। जनितकुशलवयोः, रूपं उच्छ्राययति वर्द्धयतीति रूपोच्छ्राय इति वा। शिवरामस्तु "पक्षे रामे यथा रूपोच्छ्रायस्तथा जनितकुशलवयोः। नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरेरितिवत् विभक्त्यन्तश्लेषोऽयम्।" इति व्याचष्टे। पक्षे रामे इवेति छेद इति तस्याभिसन्धिः। अत्र स्वरसं सांगत्यं च विद्वांसो विमृशन्तु।

एतावता प्रबन्धेन चिन्तामणिनृपतिं वर्णयित्वा संप्रति कथामनुबध्नाति — **तस्य चेति**। तस्य चिन्तामणेः। कन्दर्पकेतुर्नाम तनयः पुत्रः अभूदिति संबन्धः। तमेव विशिनष्टि — **पारिजात इवेत्यादिना**। पारिजातः देवतरुः। **आश्रितेति**। आश्रितान् नन्दयतीति तथा, पक्षे आश्रितं नन्दनं इन्द्रोद्यानं येन स तथा। **जनितेति**। शिवं मङ्गलं, अन्यत्र शिवा पार्वती। **भोगीति**। भोगिभोगः राजसुखानुभवः तेन अङ्कितः सहित इति यावत्। यद्वा भोगिभोगेषु राजभोग्यवस्तुषु छत्रचामरादिषु अङ्कितः चिह्नतया लिखितः। लिखितस्वनामधेय इति वा। पक्षे भोगिभोगः सर्पशरीरम्। **महेश्वरेति**।

इव महेश्वरोपभुक्तकोटिः, मधुरिव नाना रामानन्दकरः, क्षीरोदमथनोद्यतमन्दर इव मुखरितभुवनः, रागरज्जुरिव उल्लसितरतिः, ईशानभूतिसञ्चय इव सन्ध्योच्चालितः,

---

महद्भिः ईश्वरैः अधिपतिभिः उपभुक्ता अनुभूता कोटिः प्रकर्षः यस्य स तथा । "कोटयः तत्संख्याकानि धनानि" इति शिवरामः । पक्षे महेश्वरः शिवः । कोटिः अग्रम् । "कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः ।" इति मेदिनी ॥ **मधुरिवेति** ॥ मधुः वसन्तः । **नानेति** । रामाः स्त्रियः तासां नानाप्रकारेण आनन्दकरः । पक्षे नानाविधाः आरामाः उपवनानि ॥ **क्षीरोदेति** ॥ क्षीरोदः क्षीरसमुद्रः ॥ **मुखरितेति** ॥ मुखरितं प्रशस्तिघोषेण वाचालितं भुवनं लोको येन स तथा । पक्षे भुवनं जलम् । **रागरज्जुरिति** । रागरज्जुः मन्मथः । "रागरज्जुः कलाकेलिमधुर्दीपरवीषवः ।" इति मन्मथप्रकरणे त्रिकाण्डशेषः । रागराज इति पाठान्तरम् । **उल्लसितेति** । रतिः अनुरागः क्रीडा वा, रतिः कामपत्नी च । **ईशानेति** । ईशानः शिवः तस्य भूतिसंचयः भस्मपटलम् । **सन्ध्येति** । सन्ध्या व्यवहारः सन्धानं वा तत्र उच्चलितः उद्युक्तः । "सन्ध्या तु कालभेदे स्यात् व्यवहारे नदीभिदि ।" इति केशवः । "सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु ।" इति विश्वः । "सन्ध्याकालनदीभिदोः । चिन्तायां संश्रवे सीम्नि सन्धाने कुसुमान्तरे ।" इति हैमः । "उद्युक्तस्स्यादुच्चलितः" इति वैजयन्ती । यद्वा संध्या उच्चलित इति छेदः । संध्या इति संधीशब्दस्य तृतीयैकवचने रूपम् । प्रधीशब्दवत् "एरनेकाचः" इति यण् । संध्या समीचीनया बुद्ध्या सम्यक् विमर्शकेन सहायेन वा उच्चलितः कार्येषु व्यापृतः । "आसमन्तात् उच्चलितः उद्युक्तः । सन्धौ सन्ध्याख्यगुणे ओच्चलितः सन्ध्यो-

शरन्मेघ इव अवदातहृदयः, चन्द्र इव विष्णुपदावलम्बी, पार्थ इव समरसाहसोचितः, कंस इव

च्चलितः ।" इति कश्चित् । शिवरामस्तु संध्योच्छलित इति पाठमादृत्य "सम्यक् ध्यायतीति संध्यः । सम्यक् विचारकर्ता । अत एव अच्छलितः केनापि छलितुमशक्यः । तदस्य संजातमिति छलशब्दादितच् ।" इति व्याचष्टे । पक्षे संध्यायां संध्याकाले उच्चलितः समन्तात्प्रसृतः । 'संध्या पितृप्रसूः' इत्यमरव्याख्यानावसरे "संधा इति निर्यकारोऽपि । 'संधो ज्ज्व(च्च)लितः' इति वासवदत्ता ।" इति मुकुटः । "संध्या पितृप्रसूः संधा" इति शब्दार्णवः । "संधा स्थितिप्रतिज्ञयोः" इति हैमः । **अवदातेति** । अवदातं परिशुद्धं, अन्यत्र धवलं च हृदयं मनः, अन्यत्र मध्यभागश्च यस्य स तथा । **विष्णुपदेति** । विष्णोः पदं अवलंबते आश्रयतीति तथा । हरिचरणभक्त इत्यर्थः । पक्षे विष्णुपदं आकाशः । "वियद्विष्णुपदम्" इत्यमरः । **पार्थ इवेति** । पार्थः अर्जुनः । **समरसाहसेति** । समरे युद्धे यत् साहसं अन्यदुष्करं कर्म तस्य उचितः, तत् उचितं अभ्यस्तं येनेति वा स तथोक्तः । उभयत्र समानमेतत् । यद्वा-राजपक्षे, समरसैः स्वसमानप्रीतिभिः वयस्यैः सह यः आहसः क्रीडा तत्र उचितः । "आहसो ललितं क्रीडा" इत्यजयः । समरसानां स्वसमानानां यः अहसः परिहासाभावः निन्दाभाव इत्यर्थः तत्र उचित इति वा । यद्वा समा मया लक्ष्म्या सहिता या रसा भूमिः तस्याः हसः हासः संतोष इति यावत् तत्र उचितः । "रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे । रसातु शल्लकी पाठाजिह्वाधरणिकङ्गुषु ।" इति विश्वः । "तत्र हासो हसो हास्यं घर्घरं हासिका स्त्रियाम् ।" इति शब्दार्णवः । शिवरामस्तु "रसोऽनुरागः ।

कुवलयापीडभूषणः, तार्क्ष्य इव सुमुखनन्दनः, विष्णुरिव क्रोडीकृतसुतनुः, शान्तनव इव स्ववशस्थापितकालधर्मः,

---

आहसः स्मितम् । आङीषदर्थे । समाभ्यां सर्वजन्तुल्याभ्यां रसाहसाभ्यामुचितो योग्यः । धर्मराज इव समवर्तीत्यर्थः ।" इति व्याचष्टे । **कुवलयेति** । कुवलयैः उत्पलैः कृतः आपीडः शेखरः भूषणं यस्य स तथा । यद्वा कुवलयापीडं भूमण्डलशिखरं भूषयतीति स तथा । कुवलयं भूमण्डलं । पक्षे कुवलयापीड इति कंसगजस्य नाम । शिवरामस्तु भूषित इति पाठं स्वीकृत्य, राजपक्षे "कोर्वलय इवापीड इव कुवलयापीडः पृथ्वीमण्डनायमान इति यावत् । तादृशेन भूषितः । यस्याश्चोराश्चिकुरनिकर इति वत् ।" इति व्याचष्टे । **तार्क्ष्य इवेति** । तार्क्ष्यः गरुडः । **सुमुखेति** । सुमुखान् विदुषः नन्दयतीति तथा । पक्षे सुमुखः तन्नामा नन्दनः पुत्रो यस्य स तथा । "सुमुखस्तार्क्ष्यतनये फणिभेदे च पण्डिते ।" इति विश्वः । "तार्क्ष्य इव विनतानन्दकरः सुमुखनन्दनश्च" इति शिवरामसंमतः पाठस्तु मध्ये विशेषणद्वयानिपातेन न हृद्यः । तत्पक्षे एवमर्थः । **विनतेति** । विनतानां नम्राणां आनन्दकरः । पक्षे विनता नाम गरुडस्य माता । **विष्णुरिवेति** । क्रोडीकृताः आलिङ्गिताः सुतनवः युवतयः येन स तथा । "क्रोडीकरणमाश्लेषस्तथालिङ्गनमित्यपि ।" इति वररुचिः । पक्षे क्रोडीकृता वराहीकृता शोभना तनुः शरीरं यस्य स तथा । "क्रोडः शनौ सूकरे ना न पुमानङ्करक्षसोः ।" इति मेदिनी । **शान्तनव इवेति** । शान्तनवः भीष्मः । **स्ववशेति** । स्वस्य वशे आयत्ततायां स्थापितः कालः धर्मश्च येन स तथा । "राजा कालस्य कारणम् ।" इति, "राजा धर्मस्य कारणम् ।" इति चाभियुक्तवचनम् । "कालधर्मः कालगुणः" इति कश्चित् । पक्षे कालधर्मः मरणम् । "स्यात्पञ्चता

**कौरवव्यूह इव सुशर्माधिष्ठितः, जलधरसमय इव विमलतर-वारिधारासंत्रासितराजहंसमण्डलः, सुबाहुरपि रामानन्दी,**

---

कालधर्मः" इत्यमरः । पितुरनुग्रहेण भीष्मः स्वच्छन्दमृत्युरिति महाभारते द्रष्टव्यम् । **कौरवेति** । कौरवस्य दुर्योधनस्य व्यूहः सेनाविन्यासः। "व्यूहः स्याद्बलविन्यासे निर्माणे बृन्दतर्कयोः ।" इति मेदिनी । **सुशर्मेति** । शोभनं शर्म सुखं सुशर्म, तेन अधिष्ठितः । "शर्मशातसुखानि च ।" इत्यमरः । पक्षे सुशर्मा नाम त्रिगर्तदेशीयः कश्चिन्नृपतिः । **जलधरेति** । जलधरसमयः वर्षाकालः । **विमलेति** । विमला- स्वच्छा तेजितेत्यर्थः । या तरवारेः खड्गस्य धारा अग्रं तया संत्रासितं भीषितं राजहंसानां राजश्रेष्ठानां मण्डलं समूहः येन स तथा । राजानो हंसा इव राजहंसाः । "उपमितं व्याघ्रादिभिः" इति समासः । "स्युरुत्तरपदेव्याघ्र" इत्यत्र आदिपदेन हंसादीनामपि ग्रहणादेतेषामपि श्रेष्ठार्थपरत्वम् । "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे ।" इति मेदिनी । "ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः ।" इति रभसः । "धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ । जलादिपाते संतत्याम्" इति हैमः। पक्षे विमलतराभिः अतिनिर्मलाभिः वारिधाराभिः जलसंपातैः संत्रासितं राजहंसानां "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।" इत्युक्तलक्षणानां हंसविशेषाणां मण्डलं समूहो येन स तथा । हंसानां राजानो राजहंसाः। राजदन्तादित्वात् हंसशब्दस्य परनिपातः । इतो विरोधाभासेन तं वर्णयति — **सुबाहुरपीत्यादिना** । सुबाहुः तन्नामा कश्चिद्राक्षसः, यो रामेण हतः । **रामानन्दीति** । रामं दाशरथिं आनन्दयतीति रामानन्दी । सुबाहोः रामानन्दित्वं विरुद्धम् । पक्षे शोभनौ बाहू भुजौ यस्य सः सुबाहुः । रामाः सुन्दरीः आनन्दयतीति स तथेति परिहारः । "सुन्दरी रमणी

**समदृष्टिरपि महेश्वरः, मुक्तामयोऽपि अतरलमध्यः, वंशदीपोऽपि अक्षतदशः, तनयोऽभूत् कन्दर्पकेतुर्नाम ।**

---

रामा" इत्यमरः। **समदृष्टिरपीति**। समाः समसंख्याकाः दृष्ट्यः यस्य स तथोक्तः। **महेश्वरः** शिवः। समदृष्टेः शिवत्वं विरुध्यते। शिवस्य विषमदृष्टित्वात्। पक्षे समा सर्वत्र तुल्या सलक्ष्मीका वा दृष्टिः दर्शनं यस्य स तथा। महान् ईश्वरः नृपतिः महेश्वर इति परिहारः। **मुक्तामय इति**। मुक्ताभिः प्रचुरः मुक्तामयः मुक्ताहार इत्यर्थः। प्राचुर्ये मयट्। **अतरलेति**। तरलो हारमध्यमणिः मध्ये यस्य न भवति सः अतरलमध्यः। मुक्ताहारस्य अतरलमध्यत्वं विरुद्धम्। परिहारपक्षे मुक्तः आमयः रोगः येन सः मुक्तामयः नीरोग इत्यर्थ.। "रोग-व्याधिगदामयाः।" इत्यमरः। न विद्यन्ते तरलाः चञ्चलाः, मध्याः अधमाश्च यस्य स तथा। स्थिरबुद्धय उत्तमा एवास्य सहचरा इति भावः। "न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु।" इति रभसः। "अतरलं अचञ्चलं मध्यं हृदयं यस्य स तथा।" इति कश्चित। "वस्तुतस्तु मध्यशब्दरहितः पाठः।" इति शिवरामः। **वंशदीप इति**। वंशे वेणौ उद्दीपितः दीपः वंशदीपः। "वंशदीपो यष्टिदीपः" इति वैजयन्ती। "आकाशदीपः" इति शिवरामः। **अक्षतेति**। अक्षता अदग्धा दशा वर्तिः येन यस्येति वा स तथोक्तः। दीपस्य अक्षतदशत्वं विरुद्धम्। पक्षे वंशस्य कुलस्य दीप इव औज्ज्वल्य-कारित्वात् दीपः। वंशं दीपयति प्रकाशयतीति वंशदीप इति वा। अक्षता अनष्टा शोभनेत्यर्थः दशा अवस्था यस्य स तथेति परिहारः। "दशा वर्त्यामवस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः।" इति रभसः। एतादृशः कन्दर्पकेतुर्नाम तनयः अभूदिति संबन्धः। पुनरपि कन्दर्पकेतुमेव

**येन चन्द्रेणेव सकलकलाकुलगृहेण, शर्वरीतिहारिणा, दलित-कैरवेण, प्रसाधिताशेन, विलोकिता जलधय इव समुल्लसित-**

---

वर्णयति—**येन चन्द्रेणेवेत्यादिना** । येन चन्द्रेणेव विलोकिताः सन्तः जलधय इव परां ऋद्धिं अवापुरित्यन्वयः । सकलकलाकुलगृहेणेत्यादीनि तत्तद्विशेषणानि तत्तदुपमानिर्वाहकाणि । **सकलेति** । व्याख्यातमिदम् । प्रायेण एतत्प्रकरणस्थानि उपमानानि विशेषणानि च पुनरुक्तप्रायाणि । **शर्वरीति** । शर्वस्य शिवस्य रीतिं स्वभावं हरति अनुहरतीति तेन । रीत्या हारी मनोहर इति वा । "रीतिः स्वभावे स्रवणे" इत्यजयः । पक्षे शर्वर्याः रात्रेः ईतिरिव ईतिः अन्धकाराद्युपद्रवः तां हरति नाशयतीति तन तथोक्तेन । **दलितेति** । दलिताः विनाशिताः कैरवाः शत्रवः येन तेन । पक्षे दलितानि विकासितानि कैरवाणि कुमुदानि येन तेन । "कैरवः कितवे रिपौ । नपुंसकं च कुमुदे चान्द्रिकायां तु कैरवी ।" इति केशवः । कैरवविबन्धुनेति पाठान्तरम् । विबन्धुः अप्रियः, पक्षे विशेषेण बन्धुः । **प्रसाधितेति** । प्रसाधिता प्रकर्षेण साधिता आशा अभिलाषो येन तेन तथोक्तेन । पक्षे प्रसाधिताः अलंकृताः आशाः दिशः येन तेन । राजपक्षेऽपीदं सुयोजम् । **उल्लसितेति** । उल्लसितं उद्दीपितं गोत्रं वंशः येषां यैर्वा ते तादृशाः । उल्लसिता विवृद्धा गोत्रा भूमिः गोसमूहो वा येषां ते तथोक्ता इति वा । एतत्प्रसाददृष्ट्या साधवो विख्यातवंशा एतद्दत्ताया भुवः एतद्दत्तानां गवां स्वामिनो वा भवन्तीति भावः । गवां समूह इति विग्रहे "इनित्रकट्यचश्च" इति गोशब्दात् त्रप्रत्यये गोत्रेति रूपम् । पक्षे उल्लसिताः कल्लोलैरुद्वर्तिताः गोत्राः पर्वताः यैस्ते तादृशाः ।

गोत्राः, सुदूरवर्धितजीवनाः, प्रसन्नसत्वाः, सन्तः परामृद्धि मवापुः । यस्य च जनितानिरुद्धलीलस्य, रतिप्रियस्य, कुसुमशरासनस्य, मकरकेतोरिव दर्शनेन, वनिताजनस्य हृदयमुल्ललास । यस्मै चानुगतदक्षिणसदागतये, नेत्रश्रुतिसुखप्रदाय,

---

**सुदूरेति** । जीवनं जीविका, पक्षे जलम् । **प्रसन्नेति** । सत्वं मनः, पक्षे सत्वानि जन्तूनि । समुद्रपक्षे "प्रकर्षेण सन्नजन्तवः" इति कश्चित् । "सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु ।" इति मेदिनी । **सन्तः** साधवः । **ऋद्धिम्** समृद्धिम् । वृद्धिमिति क्वचित्पाठः । ततः प्रतस्थे कौबेरीमित्यादाविव अत्राप्यनेकेनेवशब्देन उपमा । **यस्य चेति** । अस्य दर्शनेनेत्यत्रान्वयः । **जनितेति** । अनिरुद्धाः अनिवारिताः लीलाः विलासाः जनिताः येन तस्य । पक्षे अनिरुद्धः मन्मथपुत्रः । **रतिरिति** । रतिः रागः क्रीडा वा, कामपत्नी च । "रतिः स्मरस्त्रियां रागे" इति हैमः । **कुसुमेति** । कुसुमशरं मन्मथं अस्यति निरस्यति स्वकान्त्येति कुसुमशरासनः तस्य । पक्षे कुसुममयं शरासनं यस्य तस्य । राजपक्षे "कुसुमशरस्येव असनं कान्तिः यस्य" इति कस्यचिद्व्याख्यानं तु न पुष्टम् । **यस्मै चेति** । यस्मै वसन्तायेव तरुण्यः उपवनलता इव स्पृहयाञ्चक्रुरित्यन्वयः । "स्पृहेरीप्सितः" इति संप्रदानसंज्ञा । तानि तानि च विशेषणानी तत्तदुपमानिर्वाहकाणि ॥ **अनुगतेति** । अनुगतानां अनुचराणां, दक्षिणानां कुशलानां पण्डितानां वा, सतां साधूनां च आगतिः आगमनस्थानं तेषां पोषक इति यावत्, तस्मै तादृशाय । पक्षे अनुगतः प्राप्तः दक्षिणसदागतिः दक्षिणमारुतः यं तस्मै तादृशाय । **नेत्रेति** । नेत्राभ्यां श्रुतिभ्यां च रूपेण कीर्त्तिश्रावणेन च सुखप्र-

कोमलकोकिलरुताय, विकासितपल्लवाय, कृतकान्तारतरङ्गाय, सुरभिसुमनोऽभिरामाय, सर्वसुलभपद्माय, विस्तृतकनक-

---

दाय । पक्षे नेत्रमेव श्रुतिः येषां ते नेत्रश्रुतयः सर्पाः तेभ्यः सुखप्रदाय । वाताशनानां तेषां कोमलदक्षिणानिलसञ्चारणात्सुखप्रदत्वमिति भावः । "चक्षुःश्रवाः काकोदरः फणी ।" इत्यमरः । **कोमलेति** । कोकिलस्येव रुतं शब्दः, पक्षे कोकिलानां रुतम् । श्रुतिसुखदकोमलकोकिलरुतायेति शिवरामीयः पाठः । **विकासितेति** । पल्लवः शृङ्गारः विटो वा, पक्षे किसलयम् । "पल्लवः किसलेऽचले । विटपे विस्तरेऽलक्तरागे शृङ्गारषिद्गयोः ।" इति हैमः । चले इति स्थाने बले इति दृश्यमानः पाठोऽपि यदि प्रामाणिकः, तर्हि पल्लवः बलमित्यपि व्याख्यातुं शक्यते । **कृतेति** । कृतः कान्तानां रते रतिविषये रङ्गः रागः येन तस्मै । "रङ्गो ना रागे नृत्यरणक्षितौ ।" इति मेदिनी । पक्षे कृतः कान्ताराणां वनानां तरङ्गः कम्पनं येन तस्मै । "तरङ्गः उच्चावचभावः" इति कश्चित् । तरङ्गः उत्प्लुत्य गमनं उल्लङ्घनमिति यावदिति परे । "तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोः ।" इति विश्वः । **सुरभीति** । सुरभिभिः सुगन्धिभिः सुमनोभिः पुष्पैः अभिरामाय । उभयत्र सममेतत् । यद्वा राजपक्षे सुरभयः प्रसिद्धाः सुमनसः विद्वांसः तेषां अभिराम इति, सुरभिः श्रेष्ठः, सुमनाः पण्डितः, अभिरामः सुन्दरश्च इति वा व्याख्येयम् । "सुरभिः सौरभे ख्याते वसन्ते पण्डितेऽपि च ।" "श्रेष्ठेऽपि निगद्यते सुरभिः ।" इति विश्वकेशवौ । **सर्वजनेति** । पद्मा लक्ष्मीः संपत्, पक्षे पद्मं पङ्कजम् । "लक्ष्मीः पद्मालया पद्मा" "वा पुंसि पद्मं नलिनम्" इत्यमरः । **विस्तारितेति** । कनकं स्वर्णं, पक्षे कनकः धत्तूरः किंशुकः चम्पको वा । "कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे ।

सम्पदे, अतिक्रान्तदमनकाय वसन्तायेव, उपवनलता इव उत्कलिकासहस्रसंकुला:, भ्रमरसंगता:, प्रवालहारिण्य:,

---

धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च ।" इति मेदिनी । **अतिक्रान्तेति** । अतिक्रान्ता: अभिभूता: दमनका: वीरा येन तस्मै । दमयन्तीति दमनका: शत्रव इति वा । "दमनो वीरपुष्पयो:" इति हैम: । पक्षे अतिक्रान्ता: भूतले अत्यन्तं व्याप्ता: प्रभूता इत्यर्थ: । तादृशा: दमनका: सुगन्धिलताविशेषा: यस्मिन् तस्मै । "दमनौ शत्रुमूलौ च" इत्यजय: । "मूल: गन्धर्वारुद्विशेष: ।" इति तद्व्याख्या । शिवरामस्तु वसन्तपक्षे "अतिक्रान्तो दमनक: पुष्पविशेष: येन । शिशिरजत्वात् तस्यातिक्रम इति भाव: ।" इति व्याचष्टे । काव्यानुशासने तु कालौचित्यनिरूपणावसरे वसन्ततौ वर्णनीयतया "माधवीदमनकाञ्चनकुरवक" इति दमनकोऽपि परिगृहीत: । मदनकेति पाठं स्वीकृत्य "वसन्तपक्षे मदनक: लताविशेष: । राजपक्षे च मदन: शत्रु: । "मदनौ शत्रुकन्दर्पौ" इति केचित् । **उत्कलिकेति** । उत्कलिता उत्कण्ठा । पक्षे उत्कलिका: उद्गता: कलिका: कोरका: । "उत्कण्ठोत्कलिके समे ।" "कलिका कोरक: पुमान् ।" इत्यमर: । यद्वा तरुणीपक्षे रलयोरभेदेन उद्गता: करिका: नखक्षतानीति व्याख्येयम् । "करिका नखरेखिका ।" इति वैजयन्ती । **भ्रमरेति** । भ्रमरै: कामुकै: संगता: । "भ्रमर: कामुके भृङ्गे" इति मेदिनी । "भ्रमरै: कामुकै: ललाटालकैर्वा संगता: । भ्रमर: कामुके भृङ्गललाटालकयोरपि । इति विश्व: ।" इति शिवराम: । यद्वा भ्रमरसं गता इति पदच्छेद: । भ्रमरसं भ्रमानुभवं गता इति, भ्रमं भ्रान्ति रसं आदरं च गता इति वा अर्थ: । पक्षे भ्रमरा भृङ्गा: ॥ **प्रवालेति** । प्रकृष्टा: वाला: केशा: ।

विलसद्वयसः तरुण्यः स्पृहयाञ्चक्रुः । यस्य च समरभुवि भुजदण्डेन कोदण्डम्, कोदण्डेन शराः, शरैररिशिरः, अरिशिरसा भूमण्डलम्, भूमण्डलेन अननुभूतपूर्वो नायकः, नायकेन कीर्तिः, कीर्त्या सप्त सागराः, सागरैः कृतयुगादिराजचरितस्मरणम्, स्मरणेन स्थैर्यम्, स्थैर्येण प्रतिक्षण माश्चर्यमासादितम् । यस्य च प्रतापानलदग्धदयितानां रिपुसुन्दरीणां करतलताडनभीतैरिव मुक्ताहारैः

---

तैः हारिण्यः हृद्याः । यद्वा प्रवालं विद्रुमः । तत्कृतहारयुक्ताः । पक्षे प्रवालं किसलयम् । "चिकुरः कुन्तलो वालः" इत्यमरः । "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे ।" इति मेदिनी । **विलसदिति** । वयः यौवनं, पक्षे पक्षी । "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम् ।" इति मेदिनी । **यस्य चेति** । समरभुवि यस्य भुजदण्डेन कोदण्डं आसादितम् । कोदण्डेन शराः आसादिता इत्येवं आसादितपदस्य तत्तद्विशेष्यानुसारेण लिङ्गवचनविपरिणामः कार्यः । **अननुभूतेति** । पूर्वमनुभूतो न भवतीत्यननुभूतपूर्वः । अत्र मालादीपकमलंकारः । "सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । (दीपकम्) मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।" इति तल्लक्षणम् । "संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम् । कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ।" इति मालादीपकोदाहरणपद्यम् । **यस्य चेति** । यस्येत्यस्य प्रतापानलेऽन्वयः । **दयितः** पतिः, दयितानि इष्टानि वस्तूनि च । **करतलेति** । करतलेन यत् ताडनं वैधव्यदुःखेन वक्षस्ताडनं

**पयोधरपरिसरो मुक्तः । यस्य च निशितनाराचजर्जरितमत्तमातङ्गकुम्भस्थलविगलितनिस्तलमुक्ताफलदन्तुरित-**

---

तस्मात् भीतैरिवेत्युत्प्रेक्षा । "संभावनास्यादुत्प्रेक्षा" इति तल्लक्षणम् । **पयोधरः** कुचः, मेघश्च । "पयोधरः कुचे मेघे" इति हैमः । अयं भावः । कन्दर्पकेतोः प्रतापानलेन रिपुस्त्रीणां दयितदाहात्, तद्दयिता मांसं नाम वयमपि दग्धा भूमेति मन्यमाना मुक्ताहाराः, अनलतप्तानां च तदपनोदनाय मेघोपसरणमेव शरणमिति पयोधरपरिसरपरिग्रहणे कृतमतयः, "अहो बत विपर्यस्तभागधेयानां क्व नु खलु भविष्यति निर्वृतिः । यतो वयमितःपरमेताभिरेव करतलेन ताडयिष्यामहे" इति भीताः पयोधरपरिसरं मुमुचुरिति । रिपुस्त्रीभिः वक्षसि मुक्ताहारो न कलितः । तदधारणं च वैधव्यचिह्नमिति परमार्थः । "मुक्ताहाराः त्यक्तभोजनाश्च" इति कश्चित् । अस्य कुत्र कथं संबन्ध इति स एव वेद । अत्र शिवरामः अन्ये च केवलं यथाश्रुतग्राहिणः सन्तः, पयोधरपदप्रयोगस्वारस्यं वाक्याभिप्रायं वा न समालोचयन्ति । **यस्य चेति** । सागरे इव समरशिरसि यस्य खड्गो रराजेत्यन्वयः । समरशिरसः सागरस्य चोपमासाधकानि निशितेत्यादिविशेषणानि । **निशितेति** । निशिततरैः अतितीक्ष्णैः नाराचैः लोहमयबाणैः जर्जरितेभ्यः शिथिलितेभ्यः विदारितेभ्य इत्यर्थः । मत्तमातङ्गकुम्भस्थलेभ्यः मत्तगजमस्तकप्रदेशेभ्यः विगलितैः च्युतैः निस्तलैः वृत्तैः मुक्ताफलैः मुक्ताभिः दन्तुरितः विषमितः व्याप्त इत्यर्थः । परिसरः समीपप्रदेशः यस्य तस्मिन् तादृशे । सागरस्तु स्वत एव मुक्ताफलदन्तुरितपरिसर इति बोध्यम् । "नाराचाः सिंहनखाश्च" इति कश्चित् । तदा विशिष्टमप्युभयान्वयि । "नाराचो लोहबाणे स्यात् नाराचो जलहस्तिनि ।" इति, "मातङ्गः

परिसरे, पतत्पत्ररथे, रक्तवारिसमुह्यमानद्विरदपदकच्छपे, विलसदुत्पलपुण्डरीके, वाहिनीशतसमाकुले, नृत्य-

---

श्वपचे गजे" इति च विश्वः। "कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे। कामुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ।" इति मेदिनी। "वर्तुलं निस्तलं वृत्तम्" इत्यमरः। **पतदिति**। पतन्ति पत्राणि वाहनानि रथाः स्यन्दनाश्च यस्मिन् तादृशे। समुद्रपक्षे पतन्तः सलिलपानार्थमापतन्तः पत्ररथाः पक्षिणः यस्मिन् तथोक्ते। "पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः।" इति मेदिनी। "पतत्पत्ररथाण्डजाः।" इत्यमरः। "पत्ररथः बाणः। पत्ररथो बाणपक्ष इति धरणिः।" इति शिवरामः। **रक्तेति**। रक्तं रुधिरं वारि जलमिव तत्र समुह्यमानानि उत्प्लवमानानि द्विरदपदानि गजपादाः कच्छपाः कूर्मा इव यस्मिन् तादृशे। अत्र सर्वत्र उपमितसमासः कार्यः। सागर इवेत्युपमानुरोधात्। एवमलंकारसंभेदस्येष्टत्वे तु रूपकसमासोऽपि। पक्षे रक्तमिव वारि द्विरदपदानीव कच्छपा इति विग्रहो बोध्यः। **विलसदिति**। विलसन्ति उत्प्लवमानानि च पलानि मांसानि पुण्डरीकाणि श्वेतच्छत्राणि मृतानां हृत्पद्मानि वा यस्मिन् तादृशे। यद्वा उत्पलानि उद्गतं पलं मांसं येभ्यस्तानि मांसशून्यानि कृत्तमांसानि केवलमस्थिमात्रशेषाणि शरीराणीति व्याख्येयम्। पक्षे उत्पलानि कुवलयानि पुण्डरीकाणि सिताम्भोजानि। "उत्पलं कुष्ठभूरुहे। इन्दीवरे मांसशून्ये" इति हैमः। पुण्डरीकं सिताम्भोजे सितच्छत्रेऽपि भेषजे। कोशकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे।" इति विश्वः। **वाहिनीति**। वाहिनी सेना, नदी च। **नृत्यदिति**। नृत्यद्भिः कबन्धैः अपमूर्द्धकलेबरैः अन्यत्र जलैः बन्धुरे उन्नतानते अन्यत्र

त्कबन्धबन्धुरे, सुरसुन्दरीसमागमोत्सुकभटाहङ्कारभाषणरव-भीषणे, सागर इव समरशिरसि, भिन्नपदातिकरितुरगरुधिरार्द्रो जयलक्ष्मीपादालक्तकरागरञ्जित इव खड्गो रराज ।

अथ स कदाचिदवसन्नायां यामवत्यां दधिधवलकाल-

---

रम्ये । "कबन्धं सलिलं रुण्डे" इति शाश्वतः । "बन्धूरबन्धुरौ रम्ये नम्रे, हंसे तु बन्धुरः ।" इति विश्वः । **सुरसुन्दरीति** । सुरसुन्दरीणां अप्सरसां समागमे उत्सुकाः उत्कण्ठिताः ये भटाः योधाः तेषां अहंकारेण गर्वेण यः भाषणरवः वीरवादकलकलः तेन भीषणे भयंकरे । पक्षे तादृशभाषणमिव यः रवः कल्लोलकोलाहलः तेन भीषणे । 'सुरसुन्दरी मत्स्यभेदः' इति परं शिवरामो विलिखति । न तत्र कोशं प्रदर्शयति । यदि च तत्प्रामाणिकं, तर्हि समुद्रपक्षे सुरसुन्दरीणां मत्स्यभेदानां समागमे प्राप्तौ उत्सुकानां भटानां पामरविशेषाणां कैवर्तादीनां अहङ्कारभाषणरवेण भीषणे इत्यपि व्याख्यातुं शक्यते । "भटः पामरभेदे च वीरे च" इति विश्वः । **समरेति** । शिरः सेनाग्रभागः । "शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च ।" इति मेदिनी । **भिन्नेति** । भिन्नानां पदातीनां पत्तीनां करिणां गजानां तुरगाणां अश्वानां च रुधिरेण रक्तेन आर्द्रः क्लिन्नः रूषित इत्यर्थः । अत एवोत्प्रेक्षते— **जयलक्ष्मीति** । अलक्तकरागः लाक्षारक्तिमा ।

इयता प्रबन्धेन कन्दर्पकेतुं वर्णयित्वा कन्दर्पकेतुः प्रभातसमये स्वप्ने अष्टादशवर्षदेशीयां कांचित् कन्यकां ददर्शेति कथामनुभन्त्स्यन् प्रथमतः प्रभातं वर्णयति— **अथेत्यादिना** । अथ सः कन्दर्पकेतुः कदाचित् स्वप्ने कन्यां अपश्यदिति संबन्धः । **यामवत्यां** रात्रौ । **अवस-**

**क्षपणकपिण्ड इव, निशायमुनाफेनपुञ्ज इव, मेनकानखमार्जनधवलशिलाशकल इव, मधुच्छत्रच्छायमण्डलोदरे, पश्चिमाचलोपधानसुखनिषण्णशिरसो राजतताटङ्कचक्र इव**

---

**ञायां** क्षीणायां प्रभातप्रायायामित्यर्थः । अनेन स्वप्नस्य शीघ्रफलप्रदत्वं सूचितम् । तथा चोच्यते । "अरुणोदयवेलायां दशाहेन फलं भवेत् ।" इति । **कुमुदिनीनायके** चन्द्रे । **अपरजलनिधिपयसि** पश्चिमसमुद्रजले । **मज्जति** अन्तर्गते सति । कीदृशः कुमुदिनीनायकस्तत्रोत्प्रेक्षते— **दधीत्यादिना** । काल एव क्षपणकः बौद्धो जैनो वा । दधिधवलः यः कालक्षपणकस्य ग्रासपिण्डः तस्मिन्निव स्थिते । क्षपणकाय शुभाशुभं कथयते जनैः दधिमिश्रितः पिण्डो दीयत इत्याचारः । **निशेति** । निशा रात्रिरेव यमुना नैल्यात् तस्याः फेनपुञ्जः डिण्डीरपिण्डः । यथा ग्रासार्थं दीयमानः पिण्डः क्षपणकेण ग्रस्यते । तथा अयमपि कालेन ग्रस्यते । यथा च फेनाः कदाचिदन्योन्यसंश्लेषेण पिण्डीभूय कियच्चिरादेव विश्लिष्यन्तो नश्यन्ति । तथैवायमपीत्युत्प्रेक्षाभावार्थः । एवमेवोत्तरत्रापि तत्र तत्र भावार्थ ऊहितव्यः । **मेनकेति** । मेनकायाः नखशोधनस्फटिकोपलखण्ड इत्यर्थः । "मेनका हिमवत्पत्नी" इति कश्चित् । **मधुच्छत्रेति** । मधुच्छत्रं मधुकोशः क्षौद्रपटलं तस्येव छाया कान्तिः यस्य तत् मधुच्छत्रच्छायम् । तादृशं मण्डलोदरं बिम्बमध्यं यस्य तस्मिन् तादृशे । "मधुकोशो (मधुगोलो) मधुच्छत्रम्" इति वैजयन्ती । **पश्चिमेति** । पश्चिमाचलः अस्तगिरिरेव उपधानं उपबर्हः तत्र सुखेन निषण्णं विन्यस्तं शिरः यस्यास्तस्याः । **श्यामाश्यामायाः** रात्रियुवत्याः । **राजतताटङ्कचक्रे** रजतमयवर्तुलाकारकर्णभूषणविशेष इव स्थिते । "रात्रिस्तु वासतेयी

श्यामाश्यामायाः, शेषमधुभाजि चषक इव विभावरीवध्वाः, अपरजलनिधिपयसि शङ्खकान्तिकामुक इव मज्जति कुमुदिनीनायके, शिशिरहिमशीकरकर्दमितकुमुदपरागमध्यबद्धचरणेषु षट्चरणेषु, कलप्रलापबोधितचकिताभिसारिकासु शारिकासु, प्रबुद्धाध्ययनकर्मठेषु मठेषु, विभासराग-

---

वसतिः श्यामानिशानिशीथिन्यः ।" इति बाणः । "श्यामा यौवनमध्यस्था" इत्युत्पलः । "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ।" इति तु भरतसेनः । **विभावरीवध्वाः** रात्रेरेव स्त्रियः । शेषं पीतशेषं यन्मधु मद्यं तत् भजतीति तस्मिन् । इदं च विशेषणं कलङ्कानुरोधेन । **चषके** पानपात्रे । "चषकोऽस्त्री पानपात्रमित्यमरः । **शङ्खेति** । शङ्खकान्तिमभिलष्यन् तत्संपादनाय अन्तर्मज्जतीवेति भावः । **षट्चरणेषु** भृङ्गेषु । **शिशिरेति** । शिशिराः शीतलाः ये हिमशीकराः हिमजलबिन्दवः तैः कर्दमितस्य पङ्कीकृतस्य कुमुदपरागस्य कैरवरजसः मध्ये बद्धाः संलग्नाः चरणाः पादाः येषां तेषु । **कलेति** । शारिकासु , कलप्रलापेन अव्यक्तमधुरध्वनिना बोधिताः स्वापादुद्बोधिताः प्रभातसमयं ज्ञापिता वा अत एव चकिताः अन्यदर्शनशङ्कया प्रियतमविरहोपनिपातेन वा त्रस्ताः अभिसारिकाः "अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ।" इत्युक्तलक्षणाः स्त्रियः याभिः तादृशीषु सतीषु । **मठेषु** विद्यागृहेषु । प्रबुद्धाः स्वापादुत्थिताः अध्ययनकर्मठाः अध्ययनकर्मकुशलाः येषु तेषु । कर्मणि घठन्ते कर्मठाः । "कर्मणि घटोऽठच् ।" "कर्मशूरस्तु कर्मठः ।" इत्यमरः । **रथ्यासु** प्रतोलीषु । **विभासेति** । "विभासेन रागविशे-

मुखरकार्पटिकोपगीयमानकाव्यकथ्यासु रथ्यासु, सकल-

---

षेण मुखरैः कार्पटिकजनैः वस्त्रयाचकभिक्षुभिः कपटिया इति भाषाप्रसिद्धैः उपगीयमाना काव्यकथा यासु तादृशीषु " इति शिवरामः । " त्रिभासरागमुखरकार्पटिकजनोपगीयमानकाव्यकथासु रथ्यासु " इति तत्संमतः पाठः। "हासरागमुखरकार्पटिकोपगीयमानकाव्यकथ्यासु रथ्यासु" इति पाठान्तरम् । तच्चेत्थं व्याख्यायते । हासः शीघ्रगमनं तत्र रागेण अभिनिवेशेन मुखराः स्वजनाह्वानादिना वाचालाः ये कार्पटिकाः नित्ययात्राशीलाः तैः उपगीयमानः काव्यस्य शुक्रस्य कथ्या उदयः यासु-तासु तादृशीषु । "हासो हास्यरसे शीघ्रगमनानन्दयोरपि ।" इत्यजयः। नित्ययात्रः कार्पटिकः" इति भागुरिः । "शुक्रो दैत्यगुरुः काव्यः" इत्यमरः । "कथ्योद्गमकथार्हयोः ।" इत्युत्पलः । परे तु 'काल्यकथ्यासु' इति पाठमभ्युपगम्य, हासरागेण रागविशेषेण, हासेन सन्तोषेण रागेण कथनीये अभिनिवेशेन वा मुखराः ये कार्पटिकाः जीर्णवस्त्रधारिणो निस्पृहाः पुरुषाः तैः उपगीयमानानि काल्यानि कल्यसंबन्धीनि प्रभातकालोचितानीत्यर्थः कथ्यानि कथनीयानि भगवन्नामादीनि यासु तासु तथोक्तासु । यद्वा कार्पटिकाः कर्पटार्थिनो भिक्षुकाः कुडुकुडुप्पाण्डि कम्बलत्तानिति द्रामिडभाषया व्यपदिश्यमानाः तैः उपगीयमानानि गानरूपेण उच्यमानानि काल्यानि प्राप्तकानि आसन्नप्रायाणीति यावत् कथ्यानि जनानां शुभाशुभरूपाणि कथनार्हाणि यासु तासु तादृशीषु । एते कापालिकाचाराः प्रभातप्राये समये उडुकमुद्भनयन्तः किमपि शुभमशुभं वा वीथीषु कथयन्तीति सुप्रसिद्धम् ।" इति व्याचक्षते । इतः परं सकलेत्यारभ्य प्रदीपेष्वित्यन्तं प्राभातिकप्रदीपवर्णनप्रकरणम् । प्रदीपेषु एवंविधेषु सत्स्विति संबन्धः ।
**सकलेति** । सकलं निरवशेषं यथा तथा निपीतानि यानि नैशानि रात्रि-

निपतितनैशतिमिरसंघातमतनीयस्तया सोढुमसमर्थेष्विव कज्जलव्याजादुद्वमत्सु, कामिमिथुननिधुवनलीलादर्शनार्थमिवोद्ग्रीविकाशतदानखिन्नेषु, विविधविभ्रमसुरतक्रीडासाक्षिषु, शरणागतमिवाधो निलीनं तिमिरसङ्घमवत्सु, दुर्जनवचनेष्विव दग्धस्नेहतया मन्दिमानमुपगतेषु, अतिवृद्धेष्विव दशान्तमुप-

---

संबन्धीनि तिमिराणि तमांसि तेषां संघातं समूहम् । **अतनीयस्तया** पीतानां तमसां अतिप्रभूतत्वेन । **सोढुं असमर्थेषु** अशक्तेष्विव। **कज्जलव्याजात्** मषीव्यपदेशेन। **उद्वमत्सु** उद्गिरत्सु । अतितनीयस्तयेति पाठे दीपानां अतिकृशत्वेनेत्यर्थः । उत्प्रेक्षालंकारः । नैशेत्यत्र "निशाप्रदोषाभ्यां च" इति भवार्थे पाक्षिकोऽण् । कृशार्थकात् तनुशब्दादीयसुनि निष्पन्नात् तनीयश्शब्दात् भावे तलि तनीयस्ता इति रूपम् । **कामिमिथुनेति** । कामि यत् मिथुनं कामिनोर्मिथुनं वा कामिमिथुनम् । निधुवनलीला सुरतक्रीडा । **उद्ग्रीविकाशतदानं** ग्रीवोन्नमनस्य बहुशः करणम् । "ग्रीवोन्नम (य) नमुद्ग्रीवो ग्रीविका च निगद्यते ।" इति हरिः । ज्वालाया ऊर्ध्वप्रसरणं उद्ग्रीविकात्वेन संभाव्यते । **विविधेति** । विविधाः विभ्रमाः विलासा यासु तासां सुरतक्रीडानां साक्षिषु साक्षाद्द्रष्टृषु । विविधबन्धेति पाठे विविधाः बन्धाः वात्स्यायनोक्ता मयूरादिबन्धाः यास्विति व्याख्येयम् । **शरणागतमिवेति** । दीपानामधो भागे तमस्तिष्ठतीति प्रात्यक्षिकम् । तच्चेत्थमुत्प्रेक्ष्यते इति बोध्यम् । **अवत्सु** रक्षत्सु । **दग्धेति** । स्नेहः तैलं, पक्षे प्रेम । "अविशेषगुणे स्नेहः तैलसौहार्दयोरपि ।" इति रत्नमाला । **मन्दिमानं** अल्पतेजस्कत्वं, पक्षे सुहृत्कार्ये शिथिलताम् । **दशेति** ।

गतेषु, विपन्नसदीश्वरेष्विव पात्रमात्रावशेषेषु, दानवेष्विव निशान्तमध्यचारिषु, अस्तगिरिशिखरेष्विव पतत्पतङ्गेषु प्रदीपेषु, अनवरतानिपतन्मकरन्दबिन्दुसन्दोहास्वादमदमुग्धमधुकरनिकुरुम्बझङ्काररवमुखरितेषु म्लानिमानमुपगच्छत्सु वासागार-

---

दशा वर्तिः, पक्षे वयः। "दशा वर्तिर्दशा वयः।" इति हारावली। **विपन्नेति**। विपन्नाः आपद्गताः क्षीणा इत्यर्थः। तादृशाः ये सन्तः साधवः ईश्वराः प्रभवः तेष्विव। **पात्रमात्रेति**। पात्रं तैलाधारभाजनं, पक्षे योग्यपुरुषः। यद्वा पात्रं भाजनमित्युभयत्र तुल्यम्। सदीश्वराणां सर्वस्वदानेन क्षीणदशायां पात्रमात्रशेषत्वस्यैव न्याय्यत्वात्। तथा च रघुः। "स मृण्मये वीतहिरण्मयत्वात्" इति। शिवरामस्तु "पात्रमात्रावशेषेषु देहमात्रावशेषेषु। तथा च कालिदासः। शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि पात्रप्रतिपादितर्द्धिः। इति। पात्रं तु भाजने योग्ये देहे तीरद्वयान्तरे। इति महीपः।" इत्याह। पात्रपदस्य देहार्थकत्वं तु नान्येषु कोशेषूपलभ्यते। सांप्रदायिकास्तु "विपन्नाः मृताः सदीश्वराः सत्स्वामिनो येषां ते वियुक्तस्वामिन इत्यर्थः। पात्रं पूर्वसंचितधनं भाजनं च। पात्रं क्ली भाजने योग्ये विभवे पूर्वसंचिते। इति गोपालः।" इत्याहुः। **निशान्तेति**। निशान्तं गृहं तन्मध्यचारिषु। पक्षे निशायाः रात्रेः अन्तः मध्यं च। तत्र संचरणशीलेषु। "निशान्तवस्त्यसदनम्" इत्यमरः। **पतदिति**। पतङ्गाः शलभाः, पक्षे पतङ्गः सूर्यः। "पतङ्गः शलभे शालीप्रभेदे पक्षिसूर्ययोः।" इति मेदिनी। **अनवरतेति**। संदोहः समूहः। मुग्धाः मूढाः मत्ता इत्यर्थः। रम्या वा। निकुरुम्बं बृन्दम्। **म्लानिमानं** म्लानभावम्। **वासागारेति**। वासागारं गर्भगृहम्।

**कुसुमोपहारेषु, विगलत्कुन्दैरलकैः प्रियतमविरहशोकात् बाष्पबिन्दूनिव विसृजद्भिः प्रियतमगमननिरोधमिव कुर्वद्भिर्वाचालिततुलाकोटिभिश्चरणपल्लवैः विलसितासु, रजनिशेषसुरत-**

---

"गर्भागारं वासगृहम्" इत्यमरः। "वासागारं निवासगृहम्। रत्यर्थं विविक्तं गृहं वा।" इति केचित्। तत्र विकीर्णाः ये कुसुमोपहाराः उपहारकुसुमानि तेषु। "भवति विरलभक्तिम्लानपुष्पोपहारः" इति प्रभातवर्णने रघुः। **विगलदित्यादि**। एवंविधैः अलकैः चरणपल्लवैश्च विलसितासु रजनीशेषेत्यादिविशेषणविशिष्टासु च कामिनीषु प्रियैः आलिङ्ग्यमानासु सतीषु इति संबन्धः। विगलन्ति च्यवमानानि कुन्दानि माघ्यपुष्पाणि येभ्यस्तैः तादृशैः। अत एव, प्रियतमविरहशोकात् बाष्पबिन्दून् विसृजद्भिरिव स्थितैरित्युत्प्रेक्षा। **अलकैः** चूर्णकुन्तलैः। **वाचालेति**। वाचालाः शब्दायमानाः तुलाकोटयः नूपुराः येषु तैः तादृशैः। "पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्।" इत्यमरः। अत एव उत्प्रेक्षते—**प्रियतमेति**। न गम्यतामिति निषेधवचनमुच्चारयद्भिरिवेत्यर्थः। शिवरामस्तु "बाष्पबिन्दूनिवोत्सृजतीषु प्रियगमननिषेधमिव कुर्वतीषु वाचालतुलाकोटिभिश्चरणपल्लवै रजनिशेष" इति पाठमभ्युपगम्य, अलकैरिति करणे तृतीया। अनेन वृष्टिर्ध्वनिता। अत एव प्रियगमननिषेधं कुर्वतीष्विव। तदाह नारदः। अकालजेषु नृपतिर्विद्युद्गर्जितवृष्टिषु। उत्पातेषु त्रिविधेषु सप्तरात्रं तु न व्रजेत्। इति। चरणपल्लवैरिति उपलक्षणे तृतीया। चरणपल्लवैरुपलक्षितास्वित्यर्थः। अनेन स्तनितं ध्वनितम्।" इति व्याचष्टे। तदेतन्मूलं व्याख्यानं चोभयमपि न स्वरसम्। **रजनिशेषेति**। रजनिशेषे तुर्ययामे यत्सुरतं तत्र परिश्रमेण विगलिते विश्लथे केशपाशे केशसमूहे विद्यमाना या दर-

**परिश्रमविगलितकेशपाशदरदलितमाधवीमालापरिमललुब्ध - मधुकरनिकुरम्बपक्षानिलपीतनिदाघजलकणिकासु, उद्वेल्लद्भुजवल्लीकङ्कणझणात्कारसुभगासु, नखपदसंसक्तकेशपाशविनिर्मोकवेदनाकृतसीत्कारविनिर्गतदुग्धमुग्धदशनकिरणधवलितभोगावासासु, पुनर्दर्शनप्रश्नविधुरसखीजनानुक्षणवीक्ष्य-**

---

दलिता ईषद्विकसिता माधवीमाला अतिमुक्तपुष्पमाल्यं तस्याः परिमले सुगन्धे लुब्धानां अभिलाषुकाणां मधुकराणां भृङ्गाणां पक्षानिलेन निपीताः शोषिताः निदाघजलकणिकाः स्वेदजललवाः यासां तासु तथोक्तासु । रजनिशेषेत्यनेन कामिनीनां पद्मिनीत्वमुक्तं भवति । तासामेव तुर्ययामे सुरतविधानात् । तदुक्तं रहस्यकारेण । "व्रजति रतिसुखार्थे चित्रिणीमग्रयामे व्रजति दिनरजन्या हस्तिनीं च द्वितीये । गमयति च तृतीये शङ्खिनीमार्द्रभावं रमयति रमणीयां पद्मिनीं तुर्ययामे ।" इति । "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।" इत्यमरः । दरोऽस्त्री शङ्खभीगर्तेष्वल्पार्थे दरमव्ययम् ।" इति वैजयन्ती । "घर्मो निदाघः स्वेदः स्यात्" इत्यमरः । **उद्वेल्लदिति** । उद्वेल्लन्त्यः विवर्तमानाः याः भुजवल्ल्यः बाहुलताः तासां कङ्कणानां वलयानां झणात्कारेण सुभगाः रम्याः तासु । "विवर्तनोद्वेल्लनं च" इति वैजयन्ती । **नखपदेति** । नखपदानि नखक्षतस्थानानि । विनिर्मोकः मोचना । दुग्धमुग्धं क्षीरवत् रम्यम् । "मुग्धो मूढे रम्ये" इति हैमः । दशनानि दन्ताः । भोगावासः रतिगृहम् । **पुनर्दर्शनेति** । पुनर्दर्शनप्रश्ने पुनः कदा दर्शनं भविष्यतीत्येवं प्रश्नविषये विधुराः अधीराः गद्गदवाच इति यावत् तादृशाः ये सखीजनाः तैः अनुक्षणं वीक्ष्यमाणः प्रियतमः यासां

**माणप्रियतमासु, क्षणदागतसुरतवैयात्यवचनसंस्मारकगृह-शुकचाटुव्याहृतिक्षणजनितमन्दाक्षासु, शरद्वासरलक्ष्मीष्विव नखालंकृतपयोधरासु, आसन्नमरणास्विव जीवितेशपुराभि-**

---

तासु । "विधुराः त्वरिताः" इति कस्यचिद्व्याख्यानं तु न पुष्टम् । "विधुरा स्त्वरिताधीरकष्टविश्लेषिता अपि ।" इत्यजयः । **क्षणदेति** । क्षणं उत्सवं निर्व्यापारस्थितिं वा ददातीति क्षणदा रात्रिः । वैयात्यवचनं "मा मा मानद" इत्यादि धार्ष्ट्यवचनम् । चाटुव्याहृतिः प्रियवचनोक्तिः । मन्दाक्षं लज्जा । सुरतेषु वैयात्यं च कामिनीनां भूषणमेव । तथा च माघः । "अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥" इति । "धृष्टे धृष्णुर्वियातश्च" इत्यमरः । "चटु चाटु प्रियं वाक्यम्" इति हरिः । "मन्दाक्षं ह्रीस्त्रपा व्रीडा" इत्यमरः । **शरदिति** । शरदः शरत्कालस्य वासरलक्ष्म्यः दिनश्रियः तास्विव । **नखेति** । नखैः नखक्षतैः अलंकृतौ भूषितौ पयोधरौ स्तनौ यासां तासु तथोक्तासु । पक्षे खे आकाशे अलं पर्याप्ततया कृताः विस्तारिताः पयोधरा मेघा यासु ताः खालंकृतपयोधराः । तादृश्यो न भवन्तीति तासु । शरदि च मेघा नात्यन्तमाकाशे सन्तीति स्थितिः । शिवरामस्तु उपमानपक्षे "न खेनाकाशेन अलंकृताः । मण्डनं मण्डनामितिवत् आकाशभूषणानामाकाशस्यैव भूषणत्ववर्णनम् । यद्वा न खे अलंकृताः भूषिताः सजलाः अतिनीला इति यावत् ।" इति व्याचष्टे । **आसन्नेति** । आसन्नं सन्निहितं मरणं यासां तास्विव । **जीवितेशेति** । जीवितेशपुरं प्रियतमशरीरं, पक्षे यमनगरी । "जीवितेशो यमे पत्यौ" इति वैजयन्ती । "पुरं नगरदेहयोः ।" इत्यजयः । **अहो स नाम कोऽपि समयः, यत्रैव मश्लीलप्रायमपि सादृश्यं केवलं श्लेषलोभेन महाकविभिरपि समादृतम् ।**

मुखीषु, वसन्तवनराजिष्विव उत्कलिकाबहुलासु, प्रियैरालिङ्ग्यमानासु कामिनीषु, आन्दोलितकुसुमकेसरे, केसरेणुमुषि रणितनूपुरमणीनां रमणीनाम्, विकचकुमुदाकरे मुदा-

---

**वसन्तेति** । वसन्तकाले याः वनराजयः अरण्यपङ्क्तयः तास्विव । **उत्कलिकेति** । उत्कलिकाः उत्कण्ठाः, पक्षे उद्गताः कोरकाः । इतः परं प्राभातिकमारुतवर्णनम् । एतादृशे मारुते वायौ वहति वाति सतीति संबन्धः । **आन्दोलितेति** । आन्दोलिताः कम्पिताः कुसुमानां केसराः किञ्जल्काः येन तस्मिन् तादृशे । अनेन मान्द्यमुक्तं भवति । अन्यथा हि पुष्पाणामेव भङ्गापत्त्या केसरान्दोलनासंभवः । **केसेति** । शसयोरभेदः । यमकानुरोधेनैवमुक्तम् । केशेषु विद्यमानाः ये रेणवः सिन्दूरादिपरागाः तान् मुष्णातीति तस्मिन् । "परागः पटवासधूलिः" इति कश्चित् । कासां केशरेणुमुषि, तत्राह— **रणितेत्यादि** । रणिताः शब्दायमानाः नूपुरमणयः मञ्जीररत्नानि यासां तासु तथोक्तासु । **विकचेति** । अस्य सङ्गभाजीति मारुतविशेषणेऽन्वयः । विकचः विकसितः यः कुमुदाकरः कैरवसरः तस्मिन् । विकचानां कुमुदानां आकरः तस्मिन्निति वा । **सङ्गेति** ॥ सङ्गं संसर्गं भजतीति तस्मिन् । विकसितकैरवखण्डसंस्पर्शसुभग इति विशिष्टार्थः । एतेन शैत्यं सौरभ्यं च लभ्यते । **मुदाकर इति** । मुदः संतोषस्य आकरः निधिः संतोषजनक इत्यर्थः तस्मिन् । शिवरामस्तु "दिशानिशादिशब्दवत् भागुरिमतेन टापि मुदाशब्दः आकारान्तः । मुदां मोदं करोतीति तस्मिन्" इति व्याचष्टे । "मुदं आसमन्तात्करोतीति मुदाकरः" इति कश्चित् । मुदाकर इति कुमुदाकरविशेषणं वा । कुमुदाकरसङ्गभाजि इति विशेषणेन मारुतस्य परागवाहित्वमप्यभि-

**करे सङ्गभाजि, प्रियविरहितासु रहितासु सुखेन मुर्मुरचूर्णमिव समन्तादर्पके दर्पकेषुदहनस्य, दूरप्रसारितकोकप्रियतमारुते मारुते वहति, जघनमदननगरतोरण-**

---

मतम् । तदुत्प्रेक्षते– **प्रियविरहितास्वित्यादिना** । सुखेन । रहितासु शून्यासु । प्रियविरहितासु वियोगिनीषु । दर्पकस्य कामस्य यः इषुदहनः बाणाग्निः तस्य । मुर्मुरचूर्णं तुषाग्निचूर्णम् । समन्तात् सर्वावयवावच्छेदेन । अर्पके अर्पयिष्यतीव । अस्य विकचकुमुदाकर इत्यादिना पूर्वेण, वहतीति परेण वा संबन्धः । प्राभातिकेन वायुना विरहिणीषु विकीर्यमाणः कैरवपरागः मदनाग्निमुर्मुरचूर्णवत् दुस्सह इति भावः । अर्पक इत्यत्र "तुमुण्ण्वुलौ क्रियायाम्" इति भविष्यति ण्वुल् । अत एव "अकेनोर्भविष्यदाधमर्ण्ययोः" इति षष्ठीप्रतिषेधात् मुर्मुरचूर्णमित्यत्र कर्मणि द्वितीया । "मुर्मुरस्तु तुषानलः ।" इति हरिः । "कन्दर्पो दर्पकोऽनङ्गः ।" इत्यमरः । शिवरामस्तु मुर्मुरमिव वर्षति समन्तादर्पके दर्पकेषुदहनस्येति पाठं स्वीकृत्य "प्रियविरहितासु अत एव सुखेन रहितासु । समन्तात् परितो दर्पकेषुदहनस्य कामबाणाग्नेरर्पके समर्पके । अतएव मुर्मुरमिव तुषाग्निमिव वर्षति" इति व्याचष्टे । अत्र कतरः पाठो रमणीयस्संलग्नश्चेति विद्वांस एव विवेचयन्तु । **दूरप्रसारितेति** । दूरप्रसारितं अतिदूरं नीतं कोकप्रियतमानां चक्रवाकीनां रुतं करुणकूजितं येन तस्मिन् । वायौ वाति सति ध्वनिस्तावद्दूरं श्रूयते इति स्थितिः । इतः परं स्वप्ने दृष्टायाः कन्यकाया वर्णनप्रकरणम् । एतादृशेन मेखलादाम्ना काञ्चीगुणेन परिकलितजघनस्थलां परिवृतजघनप्रदेशामिति संबन्धः । मेखलादामैव विशिनष्टि– **जघनेत्यादिना** । जघनं कटिपुरोभाग एव मदननगरं मन्मथपुरं तस्य तोरणस्रजा बहिर्द्वारमालया, यस्याः वन्दनमालेति प्रसिद्धिः ।

स्रजा, मन्मथमहानिधिजघनकोशमन्दिरकनकप्राकारेण, रोमराजिलतालवालवलयेन, जघनचन्द्रमण्डलपरिवेषेण, मदनत्रिभुवनविजयप्रशस्तिवर्णावलीकनकपत्रेण, सकलहृदयबन्दीजननिवासगृहपरिखावलयेन, सकलजगल्लोचनविहङ्ग-

---

"पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।" "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः । अत्र सर्वत्र इवकारसत्वे उत्प्रेक्षा । अन्यत्र रूपकमलंकार इत्येके । गम्यवाच्यभेदेन सर्वत्रोत्प्रेक्षैवेति परे । **मन्मथेति** । मन्मथ एव महानिधिः यस्य तादृशं यत् जघनकोशमन्दिरं जघनमेव कोशागारं तस्य कनकप्राकारेण स्वर्णमयसालेन । **रोमराजीति** । रोमराजिः रोमावलिरेव लता वल्लिः तस्याः आलवालवलयेन जलाधारपरिमण्डलेन । "स्यादालवालमावालमावापः" इत्यमरः । **जघनेति** । जघनमेव चन्द्रमण्डलं तस्य परिवेषेण परिधिना । **मदनेति** । मदनस्य त्रिभुवनविजयेन जाता या प्रशस्तिः तत्सूचिकायाः वर्णावल्याः अक्षरपङ्क्तेः लेखनार्थं स्थितेन कनकपत्रेण हिरण्मयपट्टेन । "पत्रं क्ली वाहने पक्षे न स्त्री तिलकपट्टयोः ।" इति भागुरिः । **सकलेति** । सकलानां हृदयान्येव बन्दीजनाः कारास्ववस्थापितजनाः तेषां यत् निवासगृहं जघनरूपं वासवेश्म तस्य परिखावलयेन खातचक्रेण । सर्वेषामपि हृदयानि तत्रैव वसन्तीति भावः । **सकलजगदिति** । सकलजगल्लोचनान्येव विहंगमाः पक्षिणः तेषां आवासार्थं यः लासकः पञ्जरः तस्य कनकशालाकागुणेन स्वर्णमयशलाका बन्धनसूत्रेण । यद्वा शलाकायाः गुण इव गुणो यस्येति विग्रहेण हिरण्मय तादृशशलाकात्मनेत्यर्थः । "लासकः पञ्जरस्समौ ।" इत्यजयः । लासकस्थाने पञ्जरेति पाठान्तरम् । विहङ्गममालालासकशलाकागुणेनेव इति पाठं

मावासलासककनकशलाकागुणेन, मेखलादाम्ना परिकलितजघनस्थलाम्, उन्नतपयोधरभारान्तरितमुखचन्द्रदर्शनाप्राप्तिखेदेनेव, गुरुतरनितम्बबिम्बकुचकुम्भनिरुद्धोभयपार्श्वजनितायासेनेव, मम मूर्ध्नि स्थितयोरनयोरियत्प्रमाणयोः

---

स्वीकृत्य "लासकशलाकागुणः कांपा इति भाषायाम्।" इति शिवरामः। सकलजगल्लोचनलासकविहंगमावासकनकशलाकागुणेनेति पाठान्तरे तु सकलजगल्लोचनान्येव लासकविहङ्गमाः मयूरपक्षिणः तेषामावासभूतस्वर्णमययष्टिरूपेणेत्यर्थो बोध्यः। मयूराणां च आवासार्थं यष्टिः स्थाप्यते इति प्रसिद्धम्। तथा च कालिदासः। "उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणः" इति। "लासकौ केकिनर्तकौ।" इति रत्नमाला। अयमेव च पाठः साधीयानिति भाति। "विहंगमजघनवासलासक" इति पाठेन "विहंगमाः तेषां जघनमेव वासलासकः पक्षिग्रहणम्" इति कश्चित्। **क्षीणतां** कृशताम्। उपगतेन। मध्यभागेन अवलग्नेन। अलंकृतामित्युपरिष्टाद्वक्ष्यति। तत्र मध्यभागस्य क्षीणतायां हेतूनुत्प्रेक्षते — **उन्नतपयोधरेत्यादिना**। उन्नतः उत्तुङ्गः, ऊर्ध्वस्थितश्च। पयोधरः कुचः, मेघश्च। **गुरुतरेति**। एकत्र गुरुतरे अतिघने ये नितम्बबिम्बे नितम्बमण्डले, अपरत्र गुरुतरौ यौ कुचकुम्भौ घटसदृशौ स्तनौ तैः निरुद्धाभ्यां आक्रान्ताभ्यां उभाभ्यां पार्श्वाभ्यां जनितः उत्पादितः यः आयासः परिश्रमः तेनेव। **ममेति**। मूर्ध्नि उपरिभागे, शिरसि च। पयोधरकलशयोः स्तनकुम्भयोः। जलविशिष्टघटयोरित्यपि गम्यते। एकस्य घटस्य पात एव दुस्सहः। तत्रापि घटौ द्वौ। तौ च जलपूर्णौ। तत्रापि विशेषान्तरं यत्तयोर्मूर्ध्नि स्थितिरिति पर्याप्तमस्ति चिन्तायाः कारणमिति

**पयोधरकलशयोः कथं मय्येव पातो भविष्यतीति चिन्तयेव, गृहीतगुरुकलत्रानुशयेनेव, विधातुरतिपीडयतो हस्तपरामर्शजनितपरिक्लेशेनेव, क्षीणतामुपगतेन मध्यभागेन अलंकृताम्, अनुरागरत्नपूरितकनकमयपरुवकाभ्याम्, चूचुक-**

---

मूर्धपयोधरपदाभ्यां प्रतीयत इति बोध्यम् । **गृहीतेति**। गृहीतं स्वीकृतं यत् गुरुकलत्रं गुरुदाराः गुरुदारग्रहणमिति यावत्। तेन जातः यः अनुशयः पश्चात्तापः तेनेव। वस्तुतस्तु गुरु बृहत् कलत्रं श्रोणिभागः । "कलत्रं श्रोणिभार्ययोः ।" इत्यमरः। मध्यभागक्षीणतायां अस्य श्लेषेण हेतुत्वोत्प्रेक्षणात् न किमप्यवद्यम्। प्रत्युत चमत्कारातिशय एवेति बोध्यम्। शिवरामस्तु बृहत्कलत्रेति पाठं स्वीकृत्य "गृहीतो बृहत्कलत्रस्य पृथुश्रोणिमण्डलस्यानुशयो दीर्घद्वेषो येन । बृहत्कलत्रपदेन युवतीपतेः पौगण्डे वयसि वर्तमानस्य वृत्तान्तोऽपि प्रतीयते । गुरुकलत्रानुशयेनेति पाठस्त्वयुक्तत्वादुपेक्षितः ।" इति हन्त विलिखति। **विधातुरिति**। अतिपीडयतः अत्यन्तं क्लेशयतः। अतिमृदुत्वात्करसंस्पर्शोऽपि तस्य महती पीडेति भावः। हस्तपरामर्शः करसंस्पर्शः। "न हि करतलस्पर्शक्लेशितानामवयवानामीदृशी भवति कान्तिः।" इति कादम्बरी। हस्तपाशेति पाठाङ्गीकारेण "हस्त एव पाशः। अथवा हस्तपाशो हस्तपीडनम्।" इति कश्चित्। उपरिष्टात् पयोधराभ्यां समुद्गासमानामिति वर्णयिष्यन् संप्रति स्तनौ विशिनष्टि– **अनुरागेत्यादिना**। अनुरागा एव रत्नानि तत्पूरितौ यौ कनकमयौ परुवकौ समुद्गकौ ताभ्याम्। क्वचित् कनकमयसमुद्गकाभ्यामित्येव पाठः। "संपुटस्स्यात्परुवकः समुद्गकः" इति हरिः। कनकरुचकाभ्यामिति पाठं स्वीकृत्य "रुचकौ गुलिकामणी रत्नमये गुलिके" इति शिवरामः। **चूचुकेति**। रत्नपूर्णसंपुटत्वात् तद्रक्षार्थं, चूचुकं स्तनाग्रमेव

मुद्रासनाथाभ्याम्, अतिगुरुपरिणाहतया पतनभयात् चूचुकच्छलेन विधिना गिरिसारेणेव कीलिताभ्याम्, सकलावयवनिर्मितिशेषलावण्यपुञ्जाभ्यामिव, हृदयतटाककमलमुकुलाभ्याम्, हृच्छयविलासचातुरकविभ्रमाभ्याम्, रोमावली-

मुद्रा अङ्गुलीयाद्यङ्कितो लाक्षादिकृतश्चिह्नविशेषः तेन सनाथाभ्यां सहिताभ्याम् । महार्घवस्तुपूर्णानां घटादीनां भाजनानामुपरि रक्षार्थं मुद्रा क्रियत इत्याचारः । **अतिगुर्विति** । अतिगुरुः अत्यन्तघनः परिणाहः आभोगः ययोस्तयोर्भावेन । पतनभयात् । विधिना । चूचुकच्छलेन चूचुकव्याजेन । गिरिसारेण कालायसेन लोहकीलेनेत्यर्थः । कीलिताभ्यां लोहकीलमन्तः प्रवेश्य सम्यक् घटिताभ्यामिवेत्यर्थः । "गिरिसारं चाश्मसारं लोहं कालायसं तथा ।" इति हरिः । **सकलावयवेति** । सकलावयवनिर्माणोपयुक्ताल्लावण्याच्छेषभूतौ यौ लावण्यपुञ्जौ लावण्यपिण्डौ ताभ्यामिव स्थिताभ्यामित्यर्थः । सर्वेऽप्यवयवाः केवलं लावण्यमयाः, विशेषतस्तु पयोधराविति भावः । लावण्यपुञ्जिताभ्यामिति पाठान्तरम् । "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ।" इति सुधाकरः । **हृदयेति** । हृदयमेव तटाकः तस्य कमलमुकुलाभ्यां पद्मकोशाभ्याम् । **हृच्छयेति** । हृच्छयस्य कामस्य विलासार्थौ यौ चातुरकौ वर्तुलाकारौ उपधानविशेषौ तयोरिव विभ्रमो विलासो ययोस्ताभ्याम् । केचित्तु विलेपनचातुरीकेति पाठं स्वीकृत्य "हृच्छयस्य कामस्य विलेपनं अङ्गरागः तदभ्यासार्थं यः चातुरीकः करण्डकः तस्येव विभ्रमो विलासो ययोस्ताभ्याम् । "चातुरीकः कलहंसे करण्डे च" इति वैजयन्ती । विलेपनकलभकाभ्यामिति पाठेऽपि कलभकः करण्डक इति बोध्यम् ।" इति व्याचक्षते । "चातुरिकं नारिकेलफलकृतं भाजनम् । अथवा द्वीपान्तरमृदा कृतं

लताफलभूताभ्याम् , कन्दर्पदर्पवर्धनचूर्णपूर्णकनककलशाभ्यामिव, अशेषजनहृदयपतनादिव सञ्जातगौरवाभ्याम् , संसारतरुमहाफलाभ्याम् , हारलतामृणाललोभनिलीनचक्रवाकाभ्याम् , हारलतारोमराजिव्याजगङ्गायमुनासंगमप्रयागतटाभ्याम् , त्रिभुवनविजयपरिश्रमखिन्नस्य मकरकेतोर्विश्रम-

---

गन्धभाजनम् ।" इति कश्चित् । हृच्छयकपोलचातुरिकाविभ्रमाभ्यामिति पाठाभ्युपगमेन "कपोलचातुरिका गलमसूरिका इति भाषायाम् ।" इति शिवरामः । **रोमावलीति** । रोमावली रोमराजिरेव लता तस्याः फलभूताभ्याम् । **कन्दर्पेति** । कन्दर्पदर्पं मदनमदं वर्द्धयतीति तादृशं यच्चूर्णं तेन पूर्णौ यौ कनककलशौ ताभ्यामिव स्थिताभ्याम् । **अशेषेति** । अशेषाणां सकलजनानां हृदयस्य मनसः पतनात् तत्र लगनादिव । संजातं गौरवं गुरुत्वं ययोस्ताभ्याम् । यथा एकस्मिन्नाधारे बहूनां वस्तूनां मेलने तस्य गुरुत्वं भवति तथैवात्रापीति भावः । शिवरामस्तु "यथा कठिनद्रव्यान्तराभिघाताच्छरीरे ग्रन्थिसंभवस्तथैतद्वक्षसि युवमनसां पातात्पयोधरसंभवः । एतेनैतच्छरीरमार्दवं कुचयोः काठिन्यं च वर्णितम् ।" इति भावार्थं विलिखति । **संसारेति** । संसार एव तरुः तस्य महाफलाभ्यां बृहत्फलाभ्याम् । संसारे इमावेव सारवस्तुनी इति भावः । **हारेति** । हारलतैव मृणालं तत्र लोभेन निलीनौ गूढं स्थितौ यौ चक्रवाकौ ताभ्याम् । **हारलतेति** । हारलता रोमराजिरिति व्याजो ययोस्ते तादृशे ये गङ्गायमुने तयोः संगमस्थानभूतः यः प्रयागः तीर्थविशेषः तस्य तटाभ्यां कूलाभ्याम् । **त्रिभुवनेति** । त्रिभुवनविजयेन जातः यः परिश्रमः तेन खिन्नस्य श्रान्तस्य । मकरकेतोः मन्मथस्य । विश्रमाय श्रमपरिहाराय कल्पिते विजयप्रदे

विजयविजनावासगृहाभ्यां पयोधराभ्यां समुद्भासमानाम्, मुखचन्द्रमण्डलसततसन्निहितसन्ध्यारागेण, द्विजमणिरक्षासिन्दूरमुद्रानुकारिणा, निस्सरता हृदयानुरागेणेव रञ्जितेन, रागसागरविद्रुमशकलेनेव अधरपल्लवेन उपशोभमानाम्, तरुणकैतकदलद्राघीयसा पक्ष्मलचटुलालसेन हृदयावास-

---

विजने ये वासगृहे निवासवेश्मनी गर्भगृहे वा ताभ्याम्। "त्रिभुवनविजयपरिश्रान्तस्येत्यनेन सौधनिवासो ध्वनितः । अत एव विजनवासगृहाभ्यां पटमण्डपाभ्यामित्यर्थः । तदाकारानुकारित्वादिति भावः । जनराहित्यवर्णनात् स्पन्दरहितत्वं ध्वनितम् ।" इति शिवरामः । एतादृशेन अधरपल्लवेन उपशोभमानामिति संबन्धः । **मुखचन्द्रेति** । मुखमेव चन्द्रमण्डलं तस्य सततं सन्निहिता समीपवर्तिनी या संध्या तस्या रागेण आरुण्येन । **द्विजमणीति** । द्विजाः दन्ता एव मणयः रत्नानि तेषां रक्षार्थं सिन्दूरेण कृता या मुद्रा तदनुकारिणा तद्वत्स्थितेनेत्यर्थः । राक्षितव्यस्य द्रव्यस्योपरि मुद्रा क्रियत इति स्थितिः। शिवरामस्तु दन्तमणीति पाठमभ्युपगम्य "दन्तमणीनां रक्षा कान्तिविशेषसंरक्षणम् ।" इति व्याचष्टे । अन्येतु "द्विजमणयः ब्राह्मणश्रेष्ठाश्च । रक्षासिन्दूरमुद्रा रक्षार्थां सिन्दूरेण ललाटे क्रियमाणा रेखा । दुर्गाया मूर्तिविशेषं पूजयद्भिर्ब्राह्मणोत्तमैरात्मरक्षायै दुर्गार्चनोपयुक्तसिन्दूरेण ललाटिका रेखा क्रियत इत्याचारः ।" इत्यभिप्रयन्ति । **निस्सरतेति** । अन्तरामितत्वेन बहिर्निर्गच्छतेत्यर्थः । रञ्जितेन रक्ततामापादितेन । अनुरागो रक्तवर्ण इति कविसमयः । **रागेति** । राग एव सागरः समुद्रः तस्य विद्रुमशकलेन प्रवालखण्डेन । इतो नयनयुगलवर्णनम् । **तरुणेति** । तरुणं पूर्णं

गृहावस्थितस्य हृच्छयविलासिनो गवाक्षशङ्कामुपजनयता, सरागेणापि निर्वाणं जनयता, गतिप्रसरनिरोधकश्रवणकृतकोपेनेवोपान्तलोहितेन, धवलयतेव जगदखिलम्, उत्फुल्लकमलकाननसनाथमिव गगनतलं कुर्वता, दुग्धाम्भोधिसहस्राणीवोद्वमता, सकुन्दकुसुमनीलोत्पलमालामुपहसता नयनयुग-

---

यत् कैतकदलं केतकीपत्रं तद्वत् द्राघीयसा अतिदीर्घेण। दीर्घशब्दादीयसुनि द्राघादेशः। **पक्ष्मलेति**। पक्ष्मलं पक्ष्मशोभासहितं चटुलं चञ्चलं अलसं मन्दं च तादृशेन। **हृदयेति**। हृदयमेव आवासगृहं तत्र अवस्थितस्य। हृच्छय एव विलासी तस्य। गवाक्षशङ्कां वातायनसंशयम्। उपजनयता। यथा गृहावस्थितेन गृहस्य प्रकाशवत्तादिसंपत्तये वातायनं क्रियते। तथा हृदयगृहनिवासिना मदनेन कृतं किमिदं वातायनमिति शङ्क्यमानेनेत्यर्थः। **सरागेणापीति**। रागः विषयाभिलाषः। निर्वाणं मोक्षः। स्वयं रागिणो मोक्षजनकत्वं विरुद्धम्। पक्षे रागः आरुण्यम्। निर्वाणं सुखमिति परिहारः। "निर्वाणं विषयान्तरेभ्यो निवृत्तिः।" इति शिवरामः। 'निर्वाणमस्तंगमने निर्वृतौ गजमज्जने। संगमेऽप्यपवर्गे च" इति मेदिनी। **गतीति**। स्वस्य गतिप्रसरनिरोधके ये श्रवणे कर्णौ ताभ्यां कृतः कोपः तेनेव। गतिप्रसरानिरोधकः कश्चिदस्तीति श्रवणमात्रेणेत्यपि प्रतीयते। कर्णान्तविश्रान्तमस्या नयनयुगलमिति भावः। उपान्तः अपाङ्गः। **धवलयतेति**। धवलयता धवलं कुर्वता। उत्फुल्लानि विकसितानि। सनाथं सहितम्। **सकुन्देति**। कुन्दकुसुमानि धवलानि माघ्यपुष्पाणि तैः सहिता या नीलोत्पलमाला तस्याः लक्ष्मीं शोभाम्। एतादृशेन नयनयुगलेन नेत्रयुग्मेन विभूषिताम्। उपरिष्टात्

लेन विभूषिताम्, दशनरत्नतुलादण्डेनेव, नयनामृतसिन्धुसेतुबन्धेनेव, यौवनमन्मथमत्तवारणयोर्वरण्डकेनेव नासावंशेन परिष्कृताम्, विलोचनकुवलयभ्रमरपङ्क्तिभ्याम्, मुखमदनमन्दिरतोरणमालिकाभ्याम्, रागसागरवेणिकाभ्याम्,

---

नासावंशेन परिष्कृतामिति वक्ष्यति । तत्र नासावंशस्य विशेषणान्याह— **दशनरत्नेति** । दशनान्येव रत्नानि तेषां तुलादण्डेन मानदण्डेनेव । 'तुलादण्डो मानदण्डः' इति वैजयन्ती । महार्घाणां रत्नानां तुलोन्मानेनैव मूल्यनिर्णय इति प्रसिद्धम् । **नयनेति** । अमृतसिन्धुः क्षीरसमुद्रः । **यौवनेति** । यौवनं तारुण्यम्, तच्च मन्मथश्चेति यौ द्वौ मत्तवारणौ मत्तगजौ तयोः वरण्डकेन मध्यवेद्येव स्थितेन । "वरण्डस्त्वन्तरावेदौ युध्यतोर्गजयोर्द्वयोः ।" इत्यजयः । "भित्तेरुभयपार्श्वे द्वौ स्थापयित्वा मतङ्गजौ । योधयन्तीति प्रसिद्धं भित्तिः सा तु वरण्डकम् । अगड इति भाषायां प्रसिद्धम् ।" इति शिवरामः । **नासावंशेन** नासिकादण्डेन । "नासावंशः नासोर्ध्वास्थि । "वंशः पृष्ठास्थि नासोर्ध्वास्थ्नीक्षुभेदे कुले गणे । वेणौ वेश्मोर्ध्वकाष्ठे स्यात्" इति हरिः ।" इति केचित् । **परिष्कृतां** अलंकृताम् । **विलोचनेति** । विलोचने नेत्रे एव कुवलये उत्पले तत्र लोभेन आगते ये भ्रमरपङ्क्ती भृङ्गमाले ताभ्याम् । **मुखेति** । मुखमेव मदनमन्दिरं मन्मथनिवासगृहं तस्य तोरणमालिकाभ्यां वन्दनमालेति प्रसिद्धबहिर्द्वारमालाभ्याम् । तोरणाभ्यामिति पाठान्तरे तु तोरणाभ्यां बहिर्द्वाराभ्यामिति व्याख्येयम् । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः । **रागेति** । राग एव सागरः तस्य वेणिकाभ्यां प्रवाहाभ्यां

यौवननर्तकलासिकाभ्याम्, भ्रूलताभ्यां विराजिताम्, घनसमयाकाशलक्ष्मीमिव उल्लसद्धारपयोधराम्, जयघोषणापन्नजनमूर्तिमिव तुलाकोटिप्रतिष्ठिताम्, सुयोधनधृतिमिव कर्णविश्रा-

---

सेतुभ्यां वा । "वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे" इति हैमः । रागसागरवेलाभ्यामिति पाठान्तरम् । वेला तटभूमिः । **यौवनेति** । यौवनमेव नर्तकः नटः तस्य लासिकाभ्यां नर्तकीभ्याम् । सविलासं चलन्तीभ्यामित्यर्थः। एतादृशीभ्यां भ्रूलताभ्यां विराजिताम् । **घनसमयेति**। घनसमयः मेघसमयः वर्षाकाल इत्यर्थः । तदा आकाशलक्ष्मीः आकाशशोभा । **उल्लसदिति** । उल्लसन् हारः ययोस्तौ उल्लसद्धारौ । तादृशौ पयोधरौ कुचौ यस्यास्तां तादृशीम् । पक्षे उल्लसन्ती धारा येषान्ते तादृशाः पयोधराः मेघाः यस्यास्तां तथोक्ताम् । **जयघोषणेति** । जयघोषणा जयवादकलकलः तां आपन्नः प्राप्तः यः जनः परीक्षितो नरः तस्य मूर्तिं शरीरमिव । **तुलाकोटीति** । तुलाकोट्योः नूपुरयोः प्रतिष्ठा स्थितिः अस्यास्संजातेति ताम् । तुलाकोट्योः प्रतिष्ठितं स्थितिर्यस्यास्तामिति वा । यद्वा तुलायाः उपमानस्य कोटिः प्रकर्षः तत्र प्रतिष्ठितां स्थिताम् । सर्वोपमानमूर्द्धन्यामित्यर्थः । पक्षे तुलाकोटौ धटाग्रे तुलापरिभागे प्रतिष्ठितां स्थिताम् । तुलापरीक्षायां परीक्षितस्य शुद्धौ जय जयेति जनैरुच्चैरुद्घोष्यत इति स्थितिः। **सुयोधनेति** । सुयोधनो दुर्योधनः तस्य धृतिः धैर्यं संतोषो वा। **कर्णेति** । कर्णयोः श्रवणयोः विश्रान्ते कर्णान्तायते इत्यर्थः । तादृशे लोचने यस्यास्तां तादृशीम् । पक्षे कर्णे राधेये विश्रान्तं लोचनं निरूपणं यस्यास्तां तथोक्ताम् । "लोचनं दृशि निरूपणयत्ने चूषणे मुकुलिते सुखिते च।" इति केशवः।

न्तलोचनाम्, वामनलीलामिव दर्शितवलिविभङ्गाम्, वृश्चिकराशिरविस्थितिमिव अतिक्रान्तकन्यातुलाम्, उषामिव अनिरुद्धदर्शनसुखाम्, शचीमिव नन्दनेक्षणरुचिम्, पशुपतिताण्डवलीलामिव उल्लसच्चक्षुःश्रवसम्, विन्ध्याटवीमिव उत्तुङ्गश्यामलकु-

---

"यावत्कर्णं पश्यति तावत्तस्य धृतिरिति भावः।" इति शिवरामः। **वामनेति**। वामनः वामनावतारो विष्णुः। **दर्शितेति**। वलिविभङ्गः त्रिवलीविभागः, पक्षे बल्याख्यदानवभङ्गः। वबयोरभेदः। **वृश्चिकेति**। वृश्चिकाख्ये राशौ या रविस्थितिः सूर्यसंक्रमः तामिव। **अतिक्रान्तेति**। अतिक्रान्ता कन्यातुला कन्यासादृश्यं यया तां तादृशीम्। अतिक्रान्तकन्याभावां युवतिमित्यर्थः। निस्तुलामित्यर्थो वा। पक्षे कन्या तुला चेति वृश्चिकराशेः पूर्वस्थितौ राशी। **उषामिवेति**। उषा-बाणासुरस्य पुत्री। **अनिरुद्धेति**। अनिरुद्धं अनिवारितं दर्शनसुखं यस्यास्तां तादृशीम्। पक्षे अनिरुद्धः उषापतिः। तस्य दर्शनेन सुखं यस्यास्तां तथोक्ताम्। **शचीं** इन्द्राणीमिव। **नन्दनेति**। नन्दयतीति नन्दना। तादृशी ईक्षणरुचिः नेत्रकान्तिः यस्यास्तां तादृशीम्। पक्षे नन्दनस्य उद्यानस्य ईक्षणे दर्शने रुचिः अभिलाषः यस्यास्तां तथोक्ताम्। **पशुपतीति**। पशुपतिः शिवः। ताण्डवं नटनम्। "ताण्डवं नटनं नाट्यम्।" इत्यमरः। **उल्लसदिति**। उल्लसत् शोभमानं चक्षुःश्रवः नेत्रे कर्णौ च यस्यास्तां तथोक्ताम्। पक्षे चक्षुःश्रवसः सर्पाः। **उत्तुङ्गेति**। उत्तुङ्गौ पीनौ श्यामलौ चूचुके श्यामौ कुचौ यस्यास्तां तादृशीम्। पक्षे उत्तुङ्गाः उन्नताः श्यामाः तमालाः लकुचाः लिकुचवृक्षाः यस्याः तां तथोक्ताम्। उन्नताः तुङ्गाः पुन्नागा इति वा। 'पुन्नागे पुरुषस्तुङ्गः' 'लकुचो लिकुचो डहुः।'

चाम्, वानरसेनामिव सुग्रीवाङ्गदशोभिताम्, भास्वतालङ्कारेण, श्वेतरोचिषा स्मितेन, लोहितेनाधरेण, सौम्येन दर्शनेन, गुरुणा नितम्बबिम्बेन, सितेन हारेण, शनैश्चरेण पादेन, तमसा केशपाशेन, विकचेन लोचनोत्पलेन ग्रहमयीमिव, संसारभि-

---

इत्यमरः । 'तमालः श्यामलः कालः' इत्यजयः । **सुग्रीवेति** । शोभनया ग्रीवया कंधरया शोभनाभ्यां अङ्गदाभ्यां केयूराभ्यां च शोभिताम् । पक्षे सुग्रीवाङ्गदौ वानराणां महाराजयुवराजौ । 'अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् ।' इति मेदिनी । ग्रहमयीमिवेति वक्ष्यति तच्छलेषेण समर्थयते— **भास्वतेत्यादिना** । भासः अस्य सन्तीति भास्वान् प्रकाशमानः, सूर्यश्च । **श्वेतेति** । श्वेतं धवलं रोचिः कन्तिः यस्य तेन तथोक्तेन । श्वेतरोचिः चन्द्रश्च । 'विधुः सुधांशुः शुभ्रांशुः' इत्यमरः । चन्द्रेण वदनमण्डलेनेति पाठान्तरम् । स्पष्टोऽ-र्थः । **लोहितेनेति** । लोहितः रक्तवर्णः, अङ्गारकश्च । 'लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति ।' इति मेदिनी । **सौम्येनेति** । सौम्यं रम्यम् । सौम्यः बुधश्च । 'सौम्यः सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते ।' इति हैमः । सौम्येन जङ्घायुगेनेति पाठान्तरम् । **गुरुणेति** । गुरु बृहत् । गुरुः बृहस्पतिश्च । **सितेनेति** । सितः धवलः बद्धो वा । सितः शुक्रश्च ।'सितस्त्ववसिते बद्धे शुक्रे वर्णे च तद्वति ।' इत्यजयः । **शनैश्चरेणेति** । शनैः चरतीति शनैश्चरः सविलासमन्दगमनः। पक्षे शनैश्चरः शनिः । "समौ सौरिशनैश्चरौ ।" इत्यमरः। **तमसेति** । तमसा अन्धकारेण तद्वन्नीलेनेत्यर्थः । तमः राहुश्च । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । **विकचेनेति** । विकचं विकसितं

त्तिचित्रलेखामिव त्रैलोक्यचित्तरङ्गस्य, रसायनसमृद्धिमिव यौवनमहायोगिनः, संकल्पसिद्धिमिव शृङ्गारस्य, निधानमिव कौतुकस्य, विजयपताकामिव मकरध्वजस्य, आजिभूमिमिव

---

विशालमिति यावत्। विकचः केतुश्च । "विकचः क्षपणे केतुग्रहे ना स्फुटितेऽन्यवत् ।" इति विश्वः । अतो ग्रहमयीं सूर्यादिग्रहमयीमिवस्थिताम् । सितेन हारेणेत्यस्य स्थाने "विकचेन नेत्रकमलेन" इति पाठं स्वीकृत्य "पक्षे विगतः कचो बृहस्पतिपुत्रो यस्मात् विकचः शुक्रः । शुक्रे केतौ च विकच उत्फुल्ले च निगद्यते। इति विश्वः।" इति शिवरामः। संप्रति विश्वकोशे तु तथा न दृश्यते । तमसा केशपाशेनेति प्राचीनं पाठं विहाय "विकचो राहुः, विकसितश्च । स्वर्भानुर्विकचो राहु रित्युत्पलः ।" इति के चित् । एवं च शिवरामपाठे केषां चित्पाठेऽपि अष्टावेव ग्रहा उक्ता भवन्ति । शिवरामस्तु "राहुकेत्वोरेकत्वात् शुक्रे केतौ च विकच इति विश्वकोशाद्विकचशब्देन वा केतोरपि संग्रहः ।" इत्याह । अत्र रत्नावली अलंकारः । "क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।" इति तल्लक्षणम् । **संसारेति** । त्रयो लोकाः त्रैलोक्यं तस्य चित्तमेव रङ्गः नाट्यशाला तस्य । संसार एव भित्तिः तस्याः चित्रलेखां आलेख्यलेखामिव स्थिताम् । त्रैलोक्यसारसर्वस्वभूतामित्यर्थः । **रसायनेति** । रसाः रसरक्तादय ईयन्ते प्राप्यन्ते अनेनेति रसायनं जराव्याधिनिवारक औषधविशेषः । तथा च वैद्यशास्त्रम् । "यज्जराव्याधिविध्वंसि वयसः स्तम्भकं तथा । चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ।" इति । **संकल्पेति** । संकल्पः मानसं कर्म अध्यवसाय इत्यर्थः । **निधानमिवेति** । निधानं निधिः । **विजयेति** । पताका वैजयन्ती । **आजीति**। आजिभूमिः युद्धस्थानम् । **संकेतेति** ।

मदनस्य, संकेतभूमिमिव लावण्यस्य, विहारस्थलीमिव सौन्दर्यस्य, एकायतनशालामिव सौभाग्यस्य, उत्पत्तिस्थानमिव कान्तेः, स्तम्भनचूर्णमिव इन्द्रियाणाम्, आकर्षणमन्त्रसिद्धिमिव मनसः, चक्षुर्बन्धनमहौषधिमिव मन्मथेन्द्रजालिनः, त्रिभुवनविलोभनसृष्टिमिव प्रजापतेः, अष्टादशवर्षदेशीयां कन्यामपश्यत्स्वप्ने ।

---

संकेतभूमिः संकेतस्थानम् । **विहारेति** । सौन्दर्यस्य "अङ्गप्रत्यङ्गकानां यो सन्निवेशो यथोचितम् । सुस्निग्धसान्धिबन्धस्स्यात्तत्सौन्दर्यमितीर्यते ।" इति लक्षितस्य सौन्दर्यस्य विहारस्थानमिव स्थितामित्यर्थः । **एकेति** । सौभाग्यस्य सुभगतायाः । एका आयतनशाला निवासशाला तामिव स्थितामित्यर्थः । अत्र आयतनशब्दो निवासस्थानपरः । "एका प्रधाना आयतनशाला चैत्यशाला तामिव । एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । चैत्यमायतनं तुल्ये इत्यमरः ।" इति शिवरामः । **उत्पत्तीति** । "सा शोभा रूपभूषाद्यैर्यत्स्यादङ्गविभूषणम् । शोभैव कान्तिराख्याता मन्मथाप्यायनोज्वला ।" इति कान्तिलक्षणम् । **स्तम्भनेति** । इन्द्रियाणां व्यापारवैकल्यापादकचूर्णमिव स्थितामित्यर्थः । **आकर्षणेति** । आकर्षणं आकर्षणोच्चाटनादिषु षट्सु कर्मस्वेकं बलादानयनरूपम् । विस्तरस्तु षट्कर्मदीपिकायां तन्त्रसारे च द्रष्टव्यः । **चक्षुरिति** । मन्मथ एव इन्द्रजाली इन्द्रजालोपजीवी तस्य, पश्यतां चक्षुर्बन्धनार्थां या महौषधिः, तामिव स्थिताम् । **त्रिभुवनेति** । त्रिभुवनविलोभनार्थां या सृष्टिः तामिव । **अष्टादशेति** । अष्टादश वर्षा यस्यास्सा अष्टादशवर्षा । ईषदूना अष्टादशवर्षा अष्टादशवर्षदेशीया ।

अथ तां प्रीतिविस्तारितेन चक्षुषा पिबन् जनितेर्ष्ययेव निद्रया चिरसेवितया स मुमुचे । अथ प्रबुद्धस्तु विषसरसीव दुर्जनवचसीव निमग्नमात्मानमवधारयितुं न शशाक । तथा हि । निर्लक्षमाकाशतले आलिङ्गनार्थं प्रसारितबाहुयुगलः एह्येहि प्रियतमे मा गच्छ मा गच्छेति दिक्षु विदिक्षु च विलिखितामिव, उत्कीर्णामिव चक्षुषि, निखातामिव हृदये प्रियतमामाजुहाव । ततस्तत्रैव शय्यातले निलीनो निषिद्धाशेषपरिजनो दत्तकवाटः परिहृतताम्बूलादिसकलोपभोगस्तं

---

"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति देशीयप्रत्ययः ।

**अथेत्यादि** । चक्षुषा पिबन् सम्यक् पश्यन् । **मुमुचे** मुक्तः । **दुर्जनेति** । दुर्जनवचनविमोहितस्येव नात्मावधारणा तस्यासीदिति भावः । आत्मानमपि धारयितुमिति क्वचित्पाठो दृश्यते । आत्मानवधारणमेव उपपादयति—**तथाहीत्यादिना** । आलिङ्गनार्थं आकाशतले निर्लक्षं प्रसारितबाहुयुगलः सन् , एह्येहीत्यादिना प्रियतमामाजुहावेति संबन्धः । **निर्लक्षमिति** । लक्ष्यरहितं शून्यमित्यर्थः । क्षणमाकाशे तदालिङ्गनार्थमिति पाठान्तरम् । दिक्षु, विदिक्षु दिशोर्मध्येषु च, विलिखितामिव । चक्षुषि, **उत्कीर्णामिव** टङ्कादिना परितक्ष्य आकारमापादितामिव । "उत्कीर्णामिव विक्षिप्तामिव । कॄ विक्षेपे ।" इति शिवरामः । "उत्कीर्णां विन्यस्ताम् । विन्यस्तमुत्कीर्णम् । इति वैजयन्ती" इति केचित् । **निखातां** स्थापिताम् । "स्थापनं निखननं च समे द्वे ।" इत्यजयः । **निलीनः** संलग्नः । निमीलितलोचन इति पाठान्तरम् ।

दिवसमनयत्। तथैव निशामपि स्वप्नसमागमेच्छया कथमप्यनैषीत् । अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवेशदर्शनः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमुवाच ।

'सखे, किमिदमसाम्प्रतमसाधुजनोचितमध्वानमाश्रितोऽसि। तवैतच्चरितमालोक्य वितर्कडोलासु निवसन्ति सन्तः। खलाः

---

**दत्तेति** । कवाटं अररम् । **कथमपि** महता प्रयासेन । **लब्धेति** । लब्धे प्रवेशः दर्शनं च येन स तथा ।

मकरन्दोक्तमाह—**सखे इत्यादिना** । असाम्प्रतं अयुक्तम् । साम्प्रतमिति युक्तार्थकमव्ययम् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । **असाधुजनेति** । असाधुजनानां असज्जनानां उचितं योग्यम् । तैः उचितं अभ्यस्तमिति वा । "अभ्यस्तेऽप्युचितं त्रिषु ।" इत्यमरः । **तवैतदित्यादि** । वितर्कडोलासु संदेहप्रेङ्खोलिकासु । अतिधीरस्य महाप्रज्ञस्य कन्दर्पकेतोः कथमिवेदृशी समवस्था समुपजाता । किं नु नाम कारणं स्यादस्या दशायाः। यदृत्तार्गलमवस्थितः परिहरति परैः संभाषणमपीति सन्दिहाना न किमपि वाचा प्रकाशयन्तो वर्तन्ते इति विशिष्टवाक्यतात्पर्यम् । **खला इति** । खलाः दुर्जनाः । त्वदनुचितं त्वदीययोग्यताया अननुरूपम् । अनिष्टं अस्माकमनभिमतं अनर्थकारि वा । आचारं निन्दारूपं व्यवहारम् । आचरन्ति कुर्वन्ति । पण्डितमानी मिथ्याप्रगल्भः कन्दर्पकेतुर्हन्त हन्त पतितः पामरवत्परमसंकटे इति त्वदीयपूर्वावस्थाननुरूपमेव श्रवणपरुषमुद्वमन्तो वचनगरलं सर्वथा त्वां निन्दन्तीत्यर्थः । ननु न मया किंचिदपराद्धं नाम खलान् प्रति । येनैवं

पुनस्त्वदनुचितमनिष्टमाचारमाचरन्ति। अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम्। को नामास्य तत्वनिरूपणे समर्थः। तथाहि। भीमोऽपि नबकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अति-

---

निन्देयुरित्याशङ्कायां स्वभावएवायं तेषामित्याह—**अनिष्टेति** । अनिष्टस्य उद्भावने उत्पादने, अनिष्टस्य अपख्यातिरूपस्य उद्भावने आरोप्य सर्वतः प्रचारणे वा यः रसः तृप्तिः तस्मिन् उत्तरं प्रवणम्। सः उत्तरः प्रधानभूतो यस्येति वा । "उत्तरं प्रवणोर्द्ध्वयोः।" इति हैमः । **को नामेति**। अस्य खलस्य । **तत्वनिरूपणे** याथार्थ्यविमर्शे । को नाम समर्थः। न कोऽपीति भावः । "को नाम ब्रह्मैव । ब्रह्माणं विना न कोऽपि समर्थ इति भावः।" इति कश्चित् । **भीमोऽपीति**। भीमः भीमसेनः। बकः भीमसेनेन हतः कश्चिद्राक्षसः । भीमसेनस्य सतः बकद्वेषित्वं नास्तीति विरुद्धम् । पक्षे भीमः भयंकरः । नवकद्वेषीत्येकं पदम्। वबयोरभेदः । नवः सौम्यः कः मनः आत्मा वा येषां ते नवकाः सौम्यमनसः सज्जनाः । तान् द्वेष्टीति नवकद्वेषीति परिहारः। "नवकान् स्तुत्यान् द्वेष्टि तादृक्।" इति शिवरामः । एवमेवोत्तरत्रापि प्रथमतो विरोधः पश्चात्परिहारश्चेति बोध्यम् । "भीमो घोरे वृकोदरे।" इति हैमः । नवस्तु नूतने सौम्ये" इति वैजयन्ती। "को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिषु।" इति नानार्थरत्नमाला । **आश्रयाशोऽपीति**। आश्रयाशः अग्निः । मातरि आकाशे श्वयति गच्छतीति मातरिश्वा वायुः। पक्षे आश्रयाशः आश्रयनाशकः । मातरि श्वा इति पदच्छेदः। मातरि जनन्याम्। मातरीति पोषकाणामुपलक्षणम्। श्वा कुक्कुरः । तद्वत् क्रूरः अनुचिताचरणो वेतिभावः। **अतिकटुक**

कटुकोऽपि महारसः। सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि न काटवं जहाति। तालफलरस इवापातमधुरः परि-

---

**इति** । अतिकटुकः अत्यन्तं कटुरसविशिष्टः, नितरां तिक्तो वा । महान् उत्तमः रसः यस्य स महारसः मधुर इत्यर्थः । पक्षे अतिकटुकः अकार्यबहुलः, अत्यन्तमत्सरी, दूषणजटिलो वा । "कटुवकार्ये मत्सरे च दूषणे च कटू रसे । तिक्ते" इति हैमः । महारसः महान् अरसः । यद्वा रलयोरभेदात् महान् अलसः । **सर्षपस्नेह इवेति** । सर्षपस्नेहः तन्दुभतैलम् । **करयुगेति** । करयुगेन अञ्जलिना लालितः पूजितः । पक्षे करयुगेन लालितः स्पृष्टः । **शिरसेति** । शिरसा धृतः पादप्रणामेन मूर्ध्ना धृतः । पक्षे स्पष्टम् । **कटुतां** क्रौर्यं काटवं च । न जहाति न त्यजति । "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुल्लिङ्गे रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च ।" इति मेदिनी । "काटवं अप्रियत्वं च । कटुस्तिक्ताप्रियाकार्यसुरभ्यूषणमत्सरे । इति कोशः ।" इति कश्चित् । **आपातेति** । आपातः उपक्रमः । तदा मधुरः । परिणामे अवसाने विरसः नीरसः । उभयत्र तुल्यमेतत् । तिक्तः तिक्तरस इव वर्जनीयः अप्रिय इत्यर्थः । पक्षे तिक्तरसविशिष्टः । "आपातः स्यादुपक्रमः ।" इत्यजयः । आपातमधुरः परिणामामधुर इति पाठान्तरम् । तदा आपाते तत्काले पक्षे आस्वादकाले मधुरः । परिणामे अवसाने अमधुरः माधुर्यरहितः । पक्षे परिणामे जीर्णतायां आमस्य आमव्याधेः धूः भारो येन यस्येति वा व्याख्येयम् । "आपातः पाते तत्काले" "आमोऽपक्वे रुग्भेदरोगयोः ।" इति हैमः । शिवरामस्तु दुर्जनपक्षे "पातो दोषस्तमभिव्याप्य आपातं मधुरः । हिताभासाचरणेन मधुरः । परिणामे दोषज्ञानोत्तरं विरसः उदासीनः । तिक्तः प्रतिजनं मर्मप्रकाशकः ।" इति व्याचष्टे । **पादेति** ।

णामे विरसस्तिक्तश्च । पादपराग इवावधूतोऽपि मूर्द्धानं कषाययति । विषतरुप्रसूनमिव यथायथानुभूयते, तथा तथा मोहमेव द्रढयति । नीचदेशस्येव न वारिविरहोऽस्य जायते । निदाघदिवस इव बहुमत्सरस्सुमनसां सन्तापं वहति । अन्धकार इव दोषानुबन्धचतुरः विश्वकर्मावलोपनोद्यतश्च । रुद्र इव

पादपरागः चरणधूलिः । **अवधूतः** उपेक्षितः, तिरस्कृतो वा । पक्षे अवधूतः विक्षिप्तः, मृदितो वा । **कषाययति** कलुषयति । "पादाहतं यदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ।" इति माघः । **विषेति** । प्रसूनं कुसुमम् । **मोहं** अज्ञानं मूर्च्छां च । द्रढयति दृढं करोति । **नीचेति** । नीचदेशः निम्नप्रदेशः । **नवेति** । खलपक्षे न वा अरिविरह इति, नीचदेशपक्षे च न वारिविरह इति पदच्छेदः । **अस्य** खलस्य अरिविरहः शत्रुविरहः । न जायते । सर्वेषामप्ययं शत्रुः, सर्वेऽप्यस्य शत्रव इति वा भावः । पक्षे वारिविरहः जलाभावः । न । निम्नप्रदेश एव जलस्थितेरिति भावः । यद्वा उभयत्रापि वारिविरह इत्येव छेदः । वारिः वाक् तस्याः विरहः विरामः । न । अनवरतं वाचाटः परदूषणलम्पट इति भावः । "वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि बालुके ।" इति मेदिनी । **निदाघेति** । निदाघदिवसः ग्रीष्मदिवसः । "ग्रीष्म ऊष्मकः । निदाघ उष्णोपगमः" इत्यमरः । मत्सरः मात्सर्यम् , पक्षे मत्सराः मक्षिकाः । "मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयवत् ।" इति मेदिनी । सुमनसां सज्जनानां पण्डितानां वा । पक्षे सुमनसः पुष्पाणि, मालतीकुसुमानि वा । **अन्धकार इवेति** । अन्धकारः तमः । **दोषेति** ।

**विरूपाक्षः, विष्णुरिव चक्रधरः, शक्राश्व इव उच्चैश्श्रवाः नदेश-**

दोषाणां अनुबन्धे आरोप्य कथने चतुरः समर्थः । पक्षे दोषा रात्रिः । तस्यां अनुबन्धे संमेलने तस्याः अनुबन्धे अनुवृत्तौ वा चतुरः । दोषा इति रात्र्यर्थकमाकारान्तमव्ययम् । "अनुबन्धोऽनुवृत्तौ चामुख्योत्पादनयोरपि ।" इति भागुरिः । **विश्वेति** । विश्वानि यानि कर्माणि सन्ध्यावन्दनादीनि तदवलोपने उद्यतः उद्युक्तः । यद्वा विश्वेषामपि जनानां यानि कर्माणि तेषां अवलोपने नाशने उद्यतः । सर्ववृत्तिविघातुक इत्यर्थः । पक्षे विश्वकर्मा सूर्यः । "विश्वकर्मा दिनकरे तथा गीर्वाणशिल्पिनि ।" इति केशवः । **विरूपेति** । विरूपः विपरीतः अक्षः ज्ञानं व्यवहारो वा यस्य सः विरूपाक्षः । "अक्षोरथस्यावयवे व्यवहारे विभीतके । सायके शकटे कर्षे ज्ञाने चात्मनि रावणौ ।" इति हैमः । पक्षे "विविधानि रविचन्द्राग्निरूपाणि अक्षीणि नेत्राणि यस्य सः विरूपाक्षः । विरूपेष्वपि अक्षि कृपादृष्टिः यस्येति वा । विविधरूपाणि विविधरूपेषु वा अक्षाणि इन्द्रियाणि अस्येति वा ।" **चक्रेति** । चक्रं दम्भविशेषः । पक्षे चक्रायुधम् । "चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि" इति मेदिनी । **शक्राश्व इवेति** । शक्रः इन्द्रः । **उच्चैरिति** । उच्चैः अधिकं श्रवः श्रवणं यस्य स तथा । अन्ये किं वा सल्पन्तीति तच्छ्रवणे कृतमतिरित्यर्थः । "परकीयकार्यश्रवणे उच्चैःश्रवाः बधिरः" इति शिवरामः । पक्षे उच्चैः श्रवाः तन्नामकः । **नदेशजेति** । देशे स्वावासदेशे जाताः देशजाः तान् प्रशंसितुं शीलमस्येति देशजप्रशंसी । स न भवतीति नदेशजप्रशंसी । देशजानां प्रशंसा यस्य नास्ति, स इति वा । पक्षे नदानां ईशः नदेशः समुद्रः । तत्रजातः नदेशजः । प्रशंसी प्रशंसावान् प्रशस्यमान इत्यर्थः । ततः नदेशजश्चासो प्रशंसी

जप्रशंसीच । शरस्येव विभिन्नस्यापि सतः स्नेहं दर्शयतः तक्राट इव हृदयं विलोडयति । यक्षबलिरिव आत्मघोषमुखरो मण्डलभ्रमणकश्च । मातङ्ग इव स्ववशालोलमुखोऽधरीकृत-

चेति विशेषणयोः कर्मधारयः। **शरस्येवेति**। विभिन्नस्यापि स्नेहं दर्शयतः सतः शरस्येव हृदयं खलः तक्राट इव विलोडयतीत्यन्वयः । विभिन्नस्य पृथक्कृतस्य, भेदितस्य च । स्नेहं प्रेमाणं, आज्यं च । सतः सज्जनस्य । शरस्य दध्यग्रभागस्य दध्नो वा। हृदयं मनः,मध्यंच। **तक्राटः** मन्थान-दण्डः। विलोडयति मथ्नाति। "शरस्तु तेजने बाणे दध्यग्रे ना शरं जले।" इति विश्वः । "शरं दध्नि शरो बाणे" इत्यजयः । "स्नेहः प्रेम्णि घृतादिके । " इति हैमः । "समस्तक्राटवैशाखमन्थमन्थानमन्थगाः । " इति वैजयन्ती । "विभिन्नस्यापि संगतस्यापि । भिन्नौ दारितसंगतावि त्यमरः ।" इति शिवरामस्य, "भिन्नं मिश्रं विरहितं च । मिश्रे पृथक्कृते भिन्नमिति वैजयन्ती ।" इति कस्यचिच्च व्याख्यानं विभिन्नस्येऽपि स्नेहं दर्शयत इत्यर्थं अपिकारेण विवक्षतः कवेरननुगुणम् । **यक्षेति**। यक्षार्थं निहितो बलिः यक्षबलिः । **आत्मघोषेति** । आत्मघोषः आत्मप्रशंसाकोलाहलः । पक्षे आत्मघोषः काकः । "ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ।" इत्यमरः । **मण्डलेति** । मण्डलं देशं भ्रमयति उच्चावचं करोतीति मण्डलभ्रमणः। स एव मण्डलभ्रमणकः । यद्वा मण्डलं प्रति भ्रमतीति स तथा। मण्डलभ्रमणे कं चित्तं यस्येति केचित्। पक्षे मण्डलाः श्वानः। तान् भ्रमयतीति मण्डलभ्रमणकः । श्वानः पिण्डलोभेन तत्र परिभ्रमन्तीति स्थितिः। "स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यके च भुजंगभेदे शुनि मण्डलः स्यात्।" इति विश्वः । **मातङ्ग इवेति**। मातङ्गः गजः । **स्ववशेति** । स्ववशं स्वाधीनं आलोलं

दानश्च । वृषभ इव सुरभियानविकलः, कामीव गोत्रस्खलन विधुरो वामाध्वानुरक्तश्च । जीर्णरोग इव कलेवरे वचसि

---

चपलं मुखं यस्य स तथा । स्वमुखं स्वस्य वशमिति कृत्वा चापलेन अन्यान्प्राति यत्किंचिद्दूषणवचः प्रयुङ्क्ते इति भावः । सुष्ठु अवशं स्ववशम् । सदसि यत्किंचिद्वादितुमभिलषतोऽप्यसंस्कृतत्वात्तस्य मुखमवशतममेव भवतीत्यर्थो वा । यद्वा स्वस्य वशे प्रभुत्वे आलोलं आसक्तं स्वप्राभवकथनाकुलमित्यर्थः । तादृशं मुखं यस्य स तथा । वशः वेश्यागृहमिति कश्चिन्नैघण्टुकः । पक्षे स्वस्य वशा करिणी । "वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः । वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ।" इति हैमः। **अधरीकृतेति।** अधरीकृतं न्यक्कृतं वर्जितमित्यर्थः। तादृशं दानं त्यागो येन स तथा । दानमिति सत्कृत्यमात्रस्योपलक्षकम् । पक्षे अधरीकृतं अधस्तात्कृतं गलितमित्यर्थः । तादृशं दानं मदजलं येन यस्येति वा स तथोक्तः । "अधरोऽनूर्ध्वहीनोष्ठेषु" इति हैमः । **सुरभीति** । सुरभीणां पण्डितानां यानेन आगमनेन सुरभीन् प्रति यानेन गमनेन वा विकलः शून्यः । पाण्डितसेवापराङ्मुख इत्यर्थः। "सुरभिर्ना विपश्चिति ।" इति हरिः। यद्वा सुरभिया नविकल इति च्छेदः । सुरभिया देवभयेन। न विकलः विह्वलो न । एवमकृत्याचरणे देवा दण्डयिष्यन्तीति भयविह्वलता तस्य नास्तीत्यर्थः। पक्षे सुरभिः गौः तां प्रति यानेन अनुधावनेन विकलः विह्वलः परिश्रान्त इत्यर्थः । "सुरभेर्यानेन प्राप्त्या विकलः विशेषेण दर्पितः । कलस्त्रिषु रवेऽव्यक्तमधुरे दर्पिते तु ना । इति वैजयन्ती ।" इति केचित् । **गोत्रेति** । गोत्रात् वंशात् यत् स्खलनं च्युतिः स्ववंशाचारपरित्याग इत्यर्थः । तेन विधुरः कष्टः । पक्षे गोत्रस्खलनं नाम्नो व्यत्यासेनोच्चारणं तेन विधुरः व्याकुलः । **वामेति** । वामे विरुद्धे

**मन्दिमानं वहति। वञ्चक इव रक्तः कटपले विभावरीरक्तश्च।**

अध्वनि मार्गे अनुरक्तः । लोकप्रतिकूलाचारनिरत इत्यर्थः । पक्षे वामाः स्त्रियः तासां अध्वनि अनुरक्तः स्त्रीजित इत्यर्थः । "वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम्" इति मेदिनी । **जीर्णेति** । जीर्णः चिरात्प्ररूढः यः रोगः स इव । **कलेवरे इति।** वरे उत्कृष्टे । कले मधुरे । वचसि अन्यदीयसुभाषिते । मन्दिमानं स्तुतिवैमुख्यं असूयाप्रयुक्तमौदासीन्यमित्यर्थः । यद्वा मन्दिमानं मूढताम् । वहति । तादृशं वचो वक्तुं स्वयमसमर्थ इत्यर्थः । पक्षे कलेवरे इत्येकं पदम् । कलेवरे शरीरे, वचसि च मन्दिमानं अपाटवं वहति उत्पादयति । जीर्णरोग इत्यस्य बहुव्रीहित्वेन पुरुषपरत्वे तु वहतीत्यस्य धारयतीत्यर्थ उभयत्र तुल्यः । "अथ कलेवरम् । गात्रं वपुः संहननम्" इत्यमरः । **वञ्चक इवेति** । वञ्चकः जम्बुकः । "वञ्चको जम्बुके गेहनकुले खलधूर्तयोः ।" इति हैमः । **रक्त इति** । कटपले उत्कोचे रक्तः । "उत्कोचोऽस्त्री कटपलम्" इति वैजयन्ती । पक्षे कटपलम् शवमांसम् । "शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे कटः ।" इति शाश्वतः । "पललोऽस्त्री पलं मांसम्" इति भागुरिः । शिवरामस्तु खलपक्षे "कटे समयबन्धे पलः प्रतारणं तस्मिन् रक्तः । शपथपूर्वकप्रतारक इति भावः । कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च । इति विश्वः । पलः प्रतारणे काले शय्यामांसे पलं मतम् । इति धरणिः ।" इति व्याचष्टे। विश्वपुस्तके तु "कटः श्रोणौ क्रियाकारे किलिञ्जेऽतिशये शवे । समये गजगण्डे च पिप्पल्यां च कटी मता ।" इत्येव संप्रति समुपलभ्यते । तत्र समये इत्यस्य काल इत्यर्थो वा, उत समयबन्ध इत्यर्थो वेत्यत्र बहुश्रुता एव प्रमाणम् । **विभावरीति** । विभावरी विवादः तत्र रक्तः । यद्वा

**परेत इव बन्धुतापदर्शनः। परशुरिव भद्रश्रियमपि खण्डयति कुद्दाल इव दलितगोत्रः क्षमाभाजः प्राणिनश्च निकृन्तति ।**

विभावरी कुट्टनी कुटिला स्त्री वा । तस्यां रक्तः । "विभावरी निशारात्र्योः कुट्टन्यां वक्रयोषिति । विवादे वस्त्रकुट्यां च" इति मेदिनी । यद्वा विभौ अरिः रक्त इति छेदः । विभौ प्रभौ । अरिः शत्रुः स्वामिद्रोहीत्यर्थः । रक्तः विषयैकसक्तः । स्वार्थसंपादने रक्त इति वा । यद्वा विभौ प्रभौ वस्तुतः अरिस्सन्नपि धनादिसंपादनाय रक्त इव रक्तः । रक्तवदभिनयतीत्यर्थः । "रक्तः मात्सर्ययुक्तः । रक्तौ तु स्निग्धमत्सरौ । इत्यजयः ।" इति सांप्रदायिकाः । "विभा बुद्धिः । तदवरीः अवक्षेपणम् । री गतिक्षेपणयोरिति धातोरवपूर्वात् भावे क्विप् । तत्रानुरक्तः । परबुद्धेराक्षेपक इत्यर्थः ।" इति कश्चित् । अरिः रक्त इत्यत्र सन्धौ रोरीति रेफलोपे ढ्रलोप इति दीर्घे अरीरक्त इति रूपम् । पक्षे विभावर्यां रात्रौ रक्तः । रात्रौ तस्य संचारसौकर्यादिति भावः । **परेतः** मृतः । **बन्धुतापेति** । बन्धूनां तापं पश्यतीति, बन्धूनामपि तापकरं दर्शनं यस्येति वा बन्धुतापदर्शनः । पक्षे अपगतं दर्शनं यस्य सः अपदर्शनः । बन्धूनां समूहः बन्धुता । बन्धुताया अपदर्शन इति स तथा । बन्धुभिरदृश्यमान इत्यर्थः । बन्धुतेत्यत्र समूहार्थे ग्रामजनेति तल् । **परशुः** कुठारः । **भद्रेति** । भद्राणां साधूनां श्रीः संपत्तिः । भद्रश्रीः मङ्गलसमृद्धिर्वा । पक्षे भद्रश्रीः चन्दनवृक्षः । "सश्रीके चन्दनेऽपि स्यात् भद्रश्रीः साधुसंपदि ।" इति धरणिः । **कुद्दालः** भूदारणोपकरणविशेषः । "कुद्दालः स्यात्पुमान् भूमिदारणे युगपत्रके ।" इति मेदिनी । **दलितेति** । गोत्रं वंशः । पक्षे गोत्रा भूमिः । **क्षमेति** । क्षमाभाजः क्षान्तिजुषः । पक्षे भूमौ स्थितान् । प्राणिनः मनुष्यान् साधूनित्यर्थः । पक्षे कीटाद्यान्

रतिकील इव जघन्यकर्मलग्नो ह्रेपयति साधून् । दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि यवसं सततं नानुमोदते ।

---

जन्तून् । **निकृन्तति** छिनत्ति पीडयतीत्यर्थः । शिवरामस्तु "क्षमाभाजः प्राणिनः वृक्षादीन् । वृक्षादीनां प्राणित्वं भक्षेरहिंसेति वार्तिके आकरे स्पष्टम् ।" इति लिखति । **रतिकीलः** श्वा । "मण्डलः कुक्कुरश्वानौ रतिकीलमृगद्विषौ ।" इत्यजयः । **जघन्येति** । जघन्यं नीचं यत्कर्म तत्र लग्नः आसक्तः । पक्षे जघने भवं जघन्यं यत्कर्म सुरतं तत्र लग्नः । **ह्रेपयति** लज्जयति । ह्री लज्जायामित्यस्माण्णिचि रूपम् । "जघन्यं मेहने क्लीबं चरमे गर्हितेऽन्यवत् ।" "जघन्यं क्लीं तु सुरते नीचकर्मणि चान्यवत् ।" इति मेदिन्यजयौ । **दुष्टेति** । शूर्पवत् श्रुतिः श्रवणं यस्य सः शूर्पश्रुतिः गजः । "शूर्पश्रुतिर्गजो दन्ती" इत्यजयः । **काननेति** । ईषत् आननरुचिः मुखकान्तिः यस्य सः काननरुचिः । पापाचरणेन तेज एव क्षीयते इति भावः । ईषदर्थस्य कुशब्दस्य ईषदर्थे इति सूत्रेण कादेशः । "कः आत्मा तस्य अनने प्राणने रुचिः प्रीतिर्यस्य स तथा । कुक्षिंभर इत्यर्थः ।" इति काश्चित् । पक्षे कानने वने रुचिः प्रीतिर्यस्य स तथा । **अनुगतमपीति** । अनुगतं पश्चात् गतं प्रातिलोम्येन पठितमित्यर्थः । सततं सेन सकारेण ततं व्याप्तं युक्तमित्यर्थः । अन्ते सकारस्य योजनेति भावः । **यवसं** प्रतिलोमपठितः सकारयुक्तश्च यः यवसशब्दः सवयसमित्याकारको जातः तद्वाच्यं सुहृदमपीत्यर्थः । न अनुमोदते । "दिवसेश यः खलु **शयः**" इत्यादौ वर्णानां प्रातिलोम्येन पठने **यशः** इत्यादिसिद्ध्ये अनुस्वारविसर्गादीनामादितः स्थितानामप्यन्त एव घटनमिति कविसंप्रदायः । संततमिति पाठे तु "सं" इत्यनुस्वारविशिष्टेन सकारेण ततमिति व्याख्येयम् ।

अबीजादेव जायन्ते, अकाण्डादेव प्ररोहन्ति, खलव्यसनाङ्कु-

तदा प्राथमिकस्यानुस्वारस्य परित्यागः प्रातिलोम्यपाठ इति बोध्यम्। "अनुगतिरन्ववसाने स्थाने प्रतिलोमतश्च संदिष्टा।" इति भागुरिः। "स्निग्धो वयस्यः सवयाः" इत्यमरः। पक्षे सततं सदा। अनुगतमपि समीपस्थितमपि। यवसं तृणम्। नानुमोदते। "अन्वन्तसाम्यपृष्ठेषु" इति केशवः। "यवसं तृणमर्जुनम्।" इति भागुरिः। अयं चोक्तार्थः सांप्रदायिकः। के चित्तु इं कामं अवस्यति स्वरूपसंपदा निराकरोतीति यवसः कामाधिकरूप इत्यर्थः। अनुगतः अनुवृत्तः। तादृशमपि सततं नानुमोदते। असूयया न प्रशंसतीत्यर्थः। संततमिति पाठे तु संततमित्यख समन्तात् ख्यातमित्यर्थः। गजपक्षे च अनुगतं अभिमतं समीचीनमपीत्यर्थः। सततं ततेन वीणादिवाद्येन सहितम्। यवसं घासम्। नानुमोदते दौष्ट्यान्न भक्षयतीत्यर्थः। सततं नानुमोदते इत्यन्वयो वा। संततमिति पाठे तु सम्यक् विकीर्णमित्यर्थः। महागजानां च समीपे अशनकाले समयान्तरे च समुत्साहसंवर्धनाय मृदङ्गवीणादिकं वाद्यत इत्याचारः। तथा च कादम्बरी। "अनवरतसंगीतमृदङ्गध्वनिं.........आकर्णयता" इति। शिवरामस्तु खलपक्षे "अनुगतमपि यवसं दक्षम्। ततं वीणादिवाद्यं च। नानुमोदते। यवसो दक्षघासयोः। ततं वीणादिवाद्येऽपि विस्तारेऽपि ततं मतम्। इत्युभयत्र विश्वः।" इत्याह। **अबीजादित्यादि**। खलव्यसनाङ्कुराः दुर्जनोत्पादितदुःखाङ्कुराः, खलानां सुजनदूषणाभिनिवेशाङ्कुरा वा। "व्यसनं त्वशुभे सक्तौ" इति विश्वः। अबीजादेव कारणं विनैव, बीजेन विनैव च। जायन्ते। अकाण्डादेव अवसरं विनैव, स्कन्धं विनैव च। प्ररोहन्ति वर्द्धन्ते। प्रसिद्धास्त्वङ्कुरा बीजादेव जायन्ते।

राः। दुरुच्छेदाश्च भवन्ति। असतां हृदि प्रविष्टो दोषलवः करालायते। सतां तु हृदयं न प्रविशत्येव। यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति। मृगा इव विनोदविन्दो-

---

काण्डादेव प्ररोहन्ति। एते तु न तथेति ततो व्यतिरेकः। अत एव, दुरुच्छेदाः उन्मूलयितुमशक्याः। भवन्ति। "बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे।" इति हैमः। "काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्।" इति मेदिनी। विभावनालङ्कारः। "विभावना विनापि स्यात्कारणं कार्यजन्म चेत्।" इति तल्लक्षणम्। **असतामित्यादि**। दोषलवः दोषलेशः। करालायते बहुलीभवति। भयावहो भवतीति वा। "करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्।" इति मेदिनी। **पारदः** रसः। "चपलो रसः सूतश्च पारदः।" इत्यमरः। न च त्वया पृथग्जनेनेव केवलं विनोदलेशवशेन भाव्यमित्यमुमर्थं सामान्यमुखेनोपदिशति— **मृगा इवेत्यादिना**। विनोदविन्दोः कौतुकलेशस्य। वशं आयत्ततां गच्छन्तीति वशगाः वश्याः। न भवन्ति साधवः। सर्वोऽप्ययं विनोदो लेशमात्रत एव। अतो न तत्र सज्जनानां पामराणामिव मनः प्रवर्तत इति भावः। पक्षे वीनां पक्षिणां नोदः प्रेरणं विनोदः तत्र विन्दुः ज्ञाता विनोदविन्दुः पक्ष्याखेटशीलः तस्य विनोदविन्दोः। मृगाः वशगाः न भवन्ति। पक्ष्याखेटशीलस्य मृगाखेटमार्गज्ञानाभावेन यथा मृगास्तस्य वश्या न भवन्ति, तथा साधवोऽपि न विनोदलेशस्य वश्या भवन्तीति विशिष्टवाक्यतात्पर्यम्। विनोदबिन्दुपदस्य सामान्यतो व्याधपरत्वमभ्युपेत्य व्यतिरेकतो दृष्टान्तो-

**र्वशगा न भवन्ति साधवः । सुखं जना हि भवादृशाश्शरत्स-मया इव हरन्ति मित्रमण्डलस्य । न च सचेतना विसदृश**

---

ऽयमिति वा व्याख्येयम् । "विप्रुट् ज्ञाता च विन्दुः स्यात्" इति त्रिकाण्डशेषः । "विन्दुरिच्छुः" इति निपातः । अयं च पाठः प्राचीनतालपत्रपुस्तके अस्मत्संपादितेष्वेकतमास्मिन् दृश्यते । सुसंगत इति स एव पाठोऽस्माभिरादृतः । अत्र शिवरामस्य अन्येषां च पाठो व्याख्यानं च नातीव प्रकृतसंगतमिति तत एव द्रष्टव्यम् । अवश्यं च त्वया मित्रवचसि स्थातव्यमित्यभिप्रायेणाह— **सुखमित्यादिना** । भवादृशाः जना हि शरत्समया इव मित्रमण्डलस्य सुखं हरन्तीत्यन्वयः । भवानिव पश्यन्ति ज्ञानविषयीभवन्तीति भवादृशाः भवत्सदृशाः । मित्रमण्डलस्य सुहृत्समूहस्य । सुखं हरन्ति प्रापयन्ति । तथा च भवतोऽपि सुहृत्सुखकरत्वमेव युक्तमिति न सांप्रतं मद्वचासि विमाननां कर्तुमिति भावः । भारं हरतीत्यादाविव प्रकृते हरतेः प्रापणार्थकत्वम् । "हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं च ।" इति वैयाकरणाः । पक्षे मित्रमण्डलं सूर्यमण्डलम् । तदा मेघाद्युपद्रवाभावेन सूर्यस्य तेजस्वितया तावता तत्सुखकरत्वं शरत्समयानामिति बोध्यम् । यद्वा सुखञ्जना इति पदच्छेदः । शोभनाः खञ्जनाः खञ्जरीटाख्याः पक्षिणः येषु ते सुखञ्जना इति शरत्समयविशेषणमिदम् । एतत्पक्षे च मित्रमण्डलस्येत्यत्र भजे शंभोश्चरणयोरित्यादाविव कर्मणः शेषत्वविवक्षया षष्ठी । हरन्तीत्यस्य च स्वीकुर्वन्तीत्यर्थः । अनन्तरातीते वर्षासमये मेघैश्छन्नस्य सूर्यस्य शरत्काले प्रकाशमानत्वात् तत्स्वीकरणमेतेषामिति बोध्यम् । हृदयं हरन्तीति पाठान्तरम् । तत्पक्षे च हृदयं हरन्तीत्यस्य मनोहराः अनुकूला भवन्तीत्युभयत्र समानोऽर्थः । ननु त्वया नोचित-

मुपदिशन्ति । अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता । तथा हि । माधुर्यशैत्यशुचित्वसन्तापशान्तिभिः पयइति शब्द-साम्याच्च मित्रतामुपगतस्य मत्संगमादभिवर्द्धितस्य क्षीरस्य काथे पुरतो ममैव क्षयो युक्त इति विचिन्त्येव वारिणा क्षीयते । तदिदमसांप्रतमाचरितम् । गृहाण साधुजनोचितम-ध्वानम् । साधवो हि दिङ्मोहादुत्पथप्रवृत्ता अपि पुन-

---

मुच्यते । अतस्त्वदीयं वचनं न शृणोमीत्याशङ्कायां तथा नेत्याह— **न चेति** । सचेतनाः ज्ञानवन्तः । विसदृशं अननुगुणम् । न च उपदि-शन्ति । मित्रमण्डलस्येति पूर्ववाक्यस्थमत्रापि संबध्यते । अस्तु नाम सचेतनानां मैत्र्यनुरोधः । अचेतनैरपि हि सा परिपाल्यते इत्याह— **अचेतनानामपीत्यादिना** । मैत्री स्नेहः । समुचितपक्षे योग्यकोटौ । तदुपपादयति—**तथाहीत्यादिना** । शुचित्वं निर्मलत्वम् । "समा-नशीलगुणानां परस्परं सौहार्दम् ।" इत्येतदनुरोधेनैवमुक्तिः । **पयः** क्षीरं, जलं च । क्वाथे पाके । क्षयः नाशः । वारिणा जलेन । क्षीयते क्षीणेन भूयते । क्षि क्षये इत्यस्माद्भावे लट् । "क्षीरे-णात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ।" इति भर्तृहरिः । एवं सविस्तरमभिधाय संप्रति निगमयति—**तदिदमिति** । तत् तस्मात् । तदिति आचरितविशेषणं वा । युक्तं च तव स्खालित्यान्निव-र्तनमित्याह— **साधवो हीति** । दिङ्मोहः गन्तव्यदिशः अज्ञानं कर्त-व्यकार्याविवेक इत्यर्थः । उत्पथः विमार्गः । सत्पथः साधुमार्गः ।

गृहीतसत्पथा भवन्ति।" इत्यादि वदति तस्मिन्मकरन्दे प्रियसखे, कथमपि स्मरशरप्रहारपरवशः कन्दर्पकेतुः परिमिताक्षरमुवाच।

"वयस्य दितिरिव शतमन्युसमाकुला भवत्यस्मादृशजनचित्तवृत्तिः। नायमुपदेशकालः। पच्यन्त इव मेऽङ्गानि। क्वथ्यन्त इवेन्द्रियाणि। भिद्यन्त इव मर्माणि। निःसरन्तीव प्राणाः। उन्मूल्यन्त इव विवेकाः। नष्टेव स्मृतिः।

---

उभयत्रापि ऋक्पूरिति समासान्तः। **कथमपि** महता प्रयासेन। अस्य उवाचेत्यत्रान्वयः। "ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम्। कथमादि तथाप्यन्तं यत्नगौरवबाढयोः।" इत्युज्ज्वलः। **परिमितेति**। परिमितानि अक्षराणि यस्मिन्निति क्रियाविशेषणमेतत्। संक्षेपेणेति तदर्थः।

**वयस्येति**। वयसा तुल्यः वयस्यः सुहृत्। नौवयोधर्मेत्यादिना यत्। **दितिः** दैत्यानां माता। **शतेति**। शतं ये मन्यवः शोकाः तैः समाकुला। पक्षे शतं मन्यवः यागाः यस्य सः शतमन्युः इन्द्रः। तेन समाकुला। "मन्युः पुमान्क्रुधि। दैन्ये शोके च यज्ञे च" इति मेदिनी। पुरा किल शतक्रतुः स्वविमातरं दितिं कपटेन शुश्रूषमाणः कदाचिद्दुःस्वपत्यास्तस्या उदरं प्रविश्य गर्भं सप्तधा चिच्छेदेति श्रीमति रामायणे व्यक्तम्। **पच्यन्त इवेति**। पच्यन्ते स्वयमेव पक्वा भवन्ति। कर्मकर्तरि लकारः। एवमेवोत्तरत्रापि। क्वथ्यन्ते स्वयं तपन्ति। भिद्यन्ते स्वयं भेदं प्राप्नुवन्ति। मर्माणि जीवस्थानानि। "जीवस्थानं भवेन्मर्म" इति हलायुधः। विवेकाः साध्वसाधुत्वविमर्शाः। "विवेकः साध्वसाधुत्वविमर्शः परिगीयते।"

अधुना तदलमनया कथया । यदि त्वं सहपांसुक्रीडासमदुःखसुखोऽसि, तन्मया सममागम्यतामित्युक्त्वा परिजनालक्षित एव तेन सहैव पुरान्निर्जगाम ।

ततोऽनेकनल्वशतमध्वानं गत्वा तेनागस्त्यवचनसंहृतब्रह्माण्डखण्डगतशिखरसहस्रः, कन्दरान्तरलतागृहसुप्तप्रबु-

---

इति भागुरिः । **सहपांस्विति** । पांसुक्रीडेत्युपलक्षणं बालकेलीनाम् । "राजकुमाराणां पांसुक्रीडाऽसंभवेऽपि लोकप्रवादानुकरणमिदम् । तेन लोकोक्तिरलङ्कारोऽत्र । लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते । इति लक्षणात् ।" इति शिवरामः । **अलक्षितः** अदृष्टः ।

**तत इति** । ततः तेन विन्ध्यो नाम गिरिः अदृश्यतेति संबन्धः । **अनेकेति** । अनेकनल्वशतं परिमाणं यस्य तं तथोक्तम् । प्रमाणे द्वयसजित्यादिना मात्रच्प्रत्यये तस्य प्रमाणे लः इति लुक् । "नल्वः किष्कुचतुःशतम् ।" "किष्कुर्हस्ते वितस्तौ च" इत्यमरः । इतः परं विन्ध्यगिरिं विशिनष्टि—**अगस्त्येत्यादिना** । अगस्त्यवचनेन संहृतं संकोचितं ब्रह्माण्डखण्डगतं शिखरसहस्रं येन स तथोक्तः । ब्रह्माण्डखण्डं आकाशः । "द्विधाकृत्य चतुर्वक्त्रो हैममण्डं नखैस्तदा । ताभ्यां वै शकलाभ्यां च दिवं भूमिं च निर्ममे ।" इति कात्यायनस्मरणात् । पुरा महामेरुस्पर्धया स्वयमपि विवर्द्धमानेन विन्ध्यगिरिणा स्थगिते रविमार्गे सर्वैरपि प्रार्थितोऽगस्त्यमहर्षिर्विन्ध्यं स्वयमधश्चकारेति पौराणिकी कथात्रानुसन्धेया । इयं च कथा पुराणेषु अल्पाल्पभेदेन समुपलक्ष्यते । **कन्दरेति** । कन्दराः दर्यः । अन्तरं मध्यप्रदेशः । मिथुनं स्त्रीपुंसौ । उत्सुकं साभिलाषम् । शबरकुलं व्याधसमूहः । संबाधः संकटः । कच्छ-

द्धविद्याधरमिथुनगीताकर्णनसुखितचमरीगणमारणोत्सुकशबरकुलसंबाधकच्छतटः, कटकतटगतकरिकराकृष्टभग्नस्यन्दमानहरिचन्दनरसामोदहरगन्धवाहशिशिरितशिलातलः, सुदूरपतनभग्नतालफलरसार्द्रकरतलास्वादनोत्सुकशाखामृगकदम्बकः, प्रलम्बमाननिर्झरोपान्तोपविष्टजीवंजीवकमिथुनलेलि-

---

तटः जलप्रायप्रदेशः । "दरी तु कन्दरो वा स्त्री" "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः ।" इत्यमरः । "अन्तरं रन्ध्रावकाशयोः । मध्ये विनार्थे तादर्थ्ये" इति हैमः । "शबरो मृगयुर्व्याधः पुलिन्दो लुब्धकस्समाः ।" इत्युत्पलः । "संबाधः संकटे भगे ।" इति विश्वः । "कच्छतटः अन्तिकसानुः । कच्छस्तु पार्श्वेऽनूपे च । प्रस्थे तीरे तटं त्रिषु । इति वैजयन्ती ।" इति केचित् । **कटकेति** । कटकः अद्रिनितम्बः । करिणः गजाः । करः शुण्डा । स्यन्दमानः स्रवन् । आमोदहरः गन्धवाही । गन्धवाहः पवनः । "करः प्रत्ययशुण्डयोः । रश्मौ वर्षोपले पाणौ" इति हैमः । **सुदूरेति** । सुदूरात् अतिदूरात् पतनेन भग्नानां विदलितानां तालफलानां रसेन आर्द्रे ये करतले तयोः आस्वादने लेहने उत्सुकं आसक्तं शाखामृगकदम्बकं वानरसमूहः यस्मिन् स तथोक्तः । "कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।" "स्त्रियां तु संहतिर्बृन्दं निकुरुम्बं कदम्बकम् ।" इत्यमरः । **प्रलम्बमानेति** । प्रलम्बमानानां गिरेः प्रस्रवतां निर्झराणां प्रस्रवणानां उपान्तेषु समीपतटेषु उपविष्टानां स्थितानां जीवञ्जीवकानां चकोराणां पक्षिविशेषाणां वा मिथुनैः द्वन्द्वैः लेलिह्यमानानां भृशं पुनःपुनर्वा आस्वाद्यमानानां विविधफलरसानां आमोदेन सुगन्धेन सुरभितः वासितः परिसरः पर्यन्तदेशः

ह्यमानविविधफलरसामोदसुरभितपरिसरः, सरभसकेसरिसिंहनखरनखरधाराविदारितमत्तमातङ्गकुम्भस्थलविगलितस्थूलमुक्ताफलशबलशिखरतया शिखरावलग्नं तारागणमिवोद्वहन्, सुग्रीव इव ऋक्षगवयशरभकेसरिकुमुदपनससेव्यमान-

---

यस्य स तथा । "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ।" इत्यमरः । लेलिह्यमानेति, लिहधातोर्यङ्लुगन्तात्कर्मणि शानचि रूपम् । **सरभसेति** । सरभसं सवेगमिति विदारणक्रियाविशेषणम् । केसरिणः सिंहाः । खराः तीक्ष्णाः । धाराः अग्राणि । शबलः विचित्रवर्णः । "रभसो वेगहर्षयोः ।" इति विश्वः । "हर्यक्षः केसरी हरिः ।" इत्यमरः । "खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च ।" "धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ ।" इति हैमः । अत एवोत्प्रेक्षते— **शिखरेति** । अवलग्नं संबद्धम् । तारागणं नक्षत्रसमूहम् । "नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इत्यपि ।" इति व्याडिः । **ऋक्षेति** । ऋक्षाः भल्लूकाः । गवयाः गोसदृशाः मृगविशेषाः । शरभाः गजशत्रवोऽष्टपादा मृगभेदाः । केसरिणः सिंहाः । कुमुदानि कैरवाणि । कुमुदः दिग्गजो वा । पनसाः कण्टकिफलाः । एतैः सेव्यमाना आश्रीयमाणा पादानां प्रत्यन्तपर्वतानां छाया कान्तिः अनातपो वा यस्य स तथोक्तः । पक्षे ऋक्षः जाम्बवान् । गवयादयश्च तत्तत्संज्ञका वानराः । तैः सेव्यमाना पादच्छाया चरणकान्तिः, लक्षणया पादोपसर्पणं वा यस्य स तथा । "ऋक्षाच्छभल्लभल्लूकाः" "पादाः प्रत्यन्तपर्वताः ।" इत्यमरः । "शरभस्तु गजारातिरुत्पादश्चाष्टपादपि ।" इति भागुरिः । "कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गम्भार्यां पुंसि दिङ्नागे नागशाखामृ-

पादच्छायः, पशुपतिरिव नागनिश्वाससमुत्क्षिप्तभूतिः, जनार्दन इव विचित्रवनमालः, सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतः, विरूपाक्ष इव सन्निहितगुहः शिवानुगतश्च, कामीव

---

गान्तरे ।" इति मेदिनी । "गजो गवाक्षो गवयः शरभो गन्धमादनः ।" इत्यादि रामायणे द्रष्टव्यम् । **पशुपतिः** शिवः । "शंभुरीशः पशुपतिः" इत्यमरः । **नागेति** । नागानां गजानां निःश्वासेन समुत्क्षिप्ता परितो विकीर्णा विस्तारिता वा भूतिः गैरिकादिरजः संपत्तिर्वा यस्य स तथोक्तः । पक्षे नागानां आभरणभूतसर्पाणां निश्वासेन समुत्क्षिप्ता समन्ततो विकीर्णा भूतिः भस्म यस्य स तथा । विन्ध्यपक्षेऽपि "नागानां निधिस्थानस्थितानां सर्पाणां निश्वासेन समुत्क्षिप्तभूतिः ।" इत्यपि शिवरामः । "नागो मतंगजे सर्पे" इति हैमः । "भूति भस्मनि संपदि ।" इत्यमरः । **जनार्दन इवेति** । जनान् दुष्टजनान् असुरजनान्वा अर्दयति पीडयतीति जनार्दनो विष्णुः । **विचित्रेति** । विचित्रा वनमाला काननपरंपरा यस्य स तथा । पक्षे वनमाला वैजयन्त्यपरपर्याया विष्णुना धार्यमाणा माला । "आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिता ।" इति शब्दमाला । "पत्रपुष्पमयी माला वनमाला प्रकीर्तिता ।" इत्यन्ये । **सहस्रकिरणः** सूर्यः । **सप्तपत्रेति** । सप्तपत्राः सप्तच्छदाख्याः वृक्षाः, स्यन्दनाः तिनिशवृक्षाः, तैः उपेतः । पक्षे सप्त पत्राणि वाहनानि अश्वाः यस्य सः सप्तपत्रः । तादृशेन स्यन्दनेन रथेन उपेतः । "पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः ।" इति विश्वः । "स्यन्दनस्तिनिशे रथे ।" इति हैमः । **विरूपाक्षः** शिवः । **संनिहितेति** । संनिहिताः

कान्तारोषरसानुगतः समदनश्च, श्रीपर्वत इव सन्निहित-मल्लिकार्जुनः, नरवाहनदत्त इव प्रियङ्गुश्यामासनाथः, शिशु-रिव कृतधात्रीधृतिः, वासरारम्भ इवारुणप्रभापाटलितपत्र-

---

समीपस्थाः गुहाः यस्य स तथा । पक्षे गुहः सुब्रह्मण्यः । "गुहः स्कन्दे गुहा पुनः । गह्वरे सिंहपुच्छ्यां च" इति हैमः । **शिवेति** । शिवाः जम्बुकाः । पक्षे शिवा पार्वती । "शिवा गौरीफेरवयोः" इत्यमरः । **कान्तारेति** । कान्तारं दुर्गममार्गे ऊषरं क्षारमृत्तिकामयप्रदेशं सानु प्रस्थं शृङ्गं वनं वा च गतः प्राप्तः । पक्षे कान्तानां स्त्रीणां रोषरसा-भ्यां कोपप्रीतिभ्यां अनुगतः । "कान्तारं वर्त्म दुर्गमम्" "स्नुः प्रस्थः सानुरस्त्रियाम् ।" "स्यादूषः क्षारमृत्तिका । ऊषवानूषरो द्वावप्यन्यलिङ्गौ" इत्यमरः । "सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने ।" इति विश्वः । **समदनश्चेति** । मदनः कपित्थवृक्षः धत्तूरो वा, पक्षे कामः । "कपित्थो मदनो ग्राही" इति वैजयन्ती । "मदनः सिक्थके स्मरे । राढे वसन्ते धत्तूरे" इति हैमः । **श्रीपर्वत इति** । श्रीपर्वतो नाम कश्चित्प्रसिद्धः पर्वतविशेषः, यो मालत्यादिषु वर्ण्यते । **सन्निहितेति** । मल्लिकाः मल्लीलताः । अर्जुनाः ककुभाख्या वृक्षाः । पक्षे मल्लिकार्जुनः श्रीपर्वते प्रतिष्ठापितः शिवलिङ्गविशेषः । "इन्द्रद्रुः ककुभोऽर्जुनः ।" इत्यमरः । **नरवाहनदत्तः** कश्चिच्चक्रवर्ती । **प्रियङ्ग्विति** । प्रियङ्गुः राजसर्षपः फलिनी वा । श्यामा सोमलता । पक्षे प्रियङ्गुश्यामेति नरवाहनदत्त-महिष्या नामान्तरम् । तया सनाथः सहितः । "प्रियङ्गू राज-सर्षपे । पिप्पल्यां फलिनीकङ्ग्वोः" "श्यामा सोमलतानिशोः ।" इति हैमः । "सनाथं प्रभुमित्याहुः सहिते चित्ततापिनि ।" इति शब्दार्णवः । **कृतेति** । कृता धात्र्याः भूमेः धृतिः धारणं येन स तथोक्तः ।

वनराजिः, कृष्णपक्ष इव बहुलतागहनः, कर्ण इवानुभूत-

भूधर इति हि संज्ञा। धात्री आमलकी वा। पक्षे कृता धात्र्याः मातुः उपमातुर्वा धृतिः संतोषः येन स तथोक्तः। यद्वा कृता धात्र्याः धृतिः धात्रीकर्तृकं धारणं यस्य स तथोक्तः। "धात्री जनन्यामलकीवसुमत्युपमातृषु ।" इति मेदिनी। "धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु।" इति विश्वः। **वासरेति**। वासरस्य दिवसस्य आरम्भः प्रातःकाल इत्यर्थः। **अरुणेति**। अरुणया रक्तया प्रभया गैरिकादिकान्त्या पाटलितानि अरुणीकृतानि पत्राणि पर्णानि यस्यास्सा। तादृशी वनराजिः वनलेखा यस्य स तथोक्तः। पक्षे अरुणः सूर्यः सूर्यसारथिर्वा। अन्यत्सर्वं पूर्ववत्। यद्वा अरुणप्रभया पाटलिता पत्राणां पर्णानां वनानां जलानां प्रस्रवणानां वा राजिः संहतिर्यस्मिन्निति तथोक्तः। राजीव इति पाठमभ्युपगम्य "तादृशीं वनराजीं वाति गच्छतीति तथोक्तः। वा गतिबन्धनयोः। पक्षे अरुणप्रभया सूर्यकान्त्या पाटलितानि पत्रवनानि दलसमूहाः येषां तानि। तादृशानि राजीवानि पद्मानि यस्मिन् स तथा।" इति केचित्। तथा पाठेऽपि अरुणप्रभया गैरिकादिरक्तकान्त्या पाटलितानि पत्रवनानि पर्णसमूहाः राजीवाः हरिणविशेषाश्च यस्मिन्निति गिरिपक्षे व्याख्येयमिति परे। "अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निश्शब्दे कपिले कुष्ठे भव्ये वाच्यवदिष्यते।" इति विश्वः। पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्।" इत्यमरः। "वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने।" इति हैमः। "लेखास्तु राजयः" इत्यमरः। "राजीवं नलिने, ना तु भेदे हरिणमीनयोः।" इति मेदिनी। **कृष्णपक्षः** अपरपक्षः। **बहुलतेति**। बह्वीभिः लताभिः गहनः निबिडः दुर्गमो वा। पक्षे बहुलता कृष्णत्वं तया गहनः। "बहुलाः कृत्तिका गावो बहुलोऽग्नौ

**शतकोटिदानः, भीष्म इव शिखण्डिमुक्तैरर्धचन्द्रैराचिततनुः, कामसूत्रविन्यास इव मल्लनागघटितकान्तारसामोदः, हि-**

---

शितौ त्रिषु।" इत्यमरः। "बहुलता कृष्णपक्षत्वम्" इति कश्चित्। **कर्णः** राधेयः। **अनुभूतेति**। अनुभूतं शतकोटिना वज्रेण दानं विदारणं येन स तथा। अनुभूतं कृतं शतकोटिभिः अनेकाश्रिभिः दानं आकाशखण्डनं येनेति केचित्। पक्षे अनुभूतं आचरितं शतकोटीनां अनेककोटिसंख्यानां धनानां दानं वितरणं येन स तथा। "शतकोटिः स्वरुः शम्बः" इत्यमरः। "कोटिः प्रकर्षचापाग्रसंख्यापक्षान्तराश्रिषु।" इति रत्नमाला। **भीष्मः** शन्तनुपुत्रः। **शिखण्डीति**। शिखण्डिभिः मयूरैः मुक्तैः स्रंसितैः। अर्द्धचन्द्रैः तदाकृतिमेचकसहितैः बर्हैः। आचिता व्याप्ता तनुः शरीरं प्रदेशः यस्य स आचिततनुः। पक्षे शिखण्डी तन्नामा द्रुपदपुत्रः। मुक्ताः प्रयुक्ताः। अर्द्धचन्द्राः अर्द्धचन्द्राकृतयो बाणविशेषाः। एषा च कथा महाभारते द्रष्टव्या। "शिखण्डी मयूरे द्रुपदात्मजे।" इति केशवः। "अर्द्धचन्द्रस्तु गलहस्तेन्दुखण्डयोः। चन्द्रके बाणभेदे च" इति हैमः। "अर्द्धचन्द्रस्तदाकारे बाणे बर्हे शिखण्डिनः।" इत्युत्पलः। **कामेति**। कामसूत्रं सूत्ररूपेण निबद्धं कामशास्त्रं तस्य विन्यासः रचना। विन्यासः अधिकरणमिति केचित्। **मल्लनागेति**। मल्लैः बलवद्भिः नागैः गजैः मल्लनागेन सुरगजेन वा घटितः संकुलः, अत एव कान्तारे दुर्गमे मार्गे वने वा सामोदः मदजलगन्धसहितः। घटितेति कान्तारविशेषणं वा। पक्षे मल्लनागो नाम कामशास्त्रप्रणेता वात्स्यायनमुनिः। तेन घटितः संकलितः कान्तानां स्त्रीणां रसस्य शृङ्गाररसस्य आमोदः परिमलः उत्कर्षः यस्मिन्निति तथोक्तः। रसः प्रीतिः आमोदः संतोष इति वा। "मल्लः पात्रे कपाले च मत्स्यभेदे बलीयसि।"

रण्यकशिपुरिव शम्बरकुलाश्रयः, गैरिकव्याजादुपरिरविरथमार्गमार्गणार्थमिवारुणेनोपास्यमानः, शिखरगतसूर्याचन्द्रमस्तया विस्तारितलोचनोऽगस्त्यमार्गमिवोद्वीक्षमाणः, कुलिशक्ष-

---

इति मेदिनी । "मल्लनागो वात्स्यायनसुरेभयोः ।" इति हैमः । **हिरण्यकशिपुः** कश्चिदसुरः । **शम्बरेति** । शम्बराः मृगविशेषाः, तेषां कुलस्य समूहस्य आश्रयभूतः । शम्बरं जलं वा । पक्षे शम्बरो नाम कश्चिदसुरः, यस्य वंशे हिरण्यकशिपुरुत्पन्नः । तस्य कुलं वंशः आश्रयो यस्येति, कुलं आश्रयतीति वा तथोक्तः । "शम्बरं सलिले, पुंसि मृगदैत्यविशेषयोः ।" इति विश्वः । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च ।" इति मेदिनी । **गैरिकेत्यादि** । गिरौ भवं गैरिकं धातुविशेषः । मार्गणं याचनम् । अन्वेषणमिति शिवरामः । "मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि ।" इति हैमः । अरुणः सूर्यसारथिः । **शिखरेति** । सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ । देवताद्वन्द्वे चेत्यानङ् । शिखरं मूर्द्धस्थानीयं गतौ सूर्याचन्द्रमसौ यस्य तस्य भावेन । **अगस्त्यमार्गमिवेति** । विस्तारितलोचनः सन् अगस्त्यमार्गं उद्वीक्षमाण इवेत्यन्वयः । यावदहं परावर्त्स्यामि तावत्त्वया खर्वेणैव स्थीयतामित्युक्त्वा अगस्त्यो दक्षिणां दिशमगादिति पुराणेषु व्यक्तम् । **कुलिशेति** । जरतां जीर्णानां अजगराणां वाहसानां महासर्पाणां भोगैः शरीरैः । कुलिशक्षतेन वज्रप्रहारेण जातं यत् रन्ध्रं विवरं तस्मात् स्रस्तानि गलितानि अन्त्रजालानि पुरीततसमूहाः यस्य स तथोक्तः । "कुलिशं वज्रमस्त्रियाम् ।" "अजगरे शयुर्वाहस इत्युभौ ।" "अन्त्रं पुरीतत्" "जालं समूह आनायो गवाक्षक्षारकावपि ।" इत्यमरः । "महानागस्त्वजगरः" इति वैजयन्ती । 'अन्त्रनालः' इति पाठान्तरम् ।

तरन्ध्रस्रस्तान्त्रजालइव जरदजगरभोगैः, कुम्भकर्णइव दन्तान्तरालगतैर्वानरव्यूहैः, पिण्डालक्तकरागपल्लवितपदपङ्क्तिसूचितसञ्चारशचीपतिपुरवारविलासिनीसङ्केतकेतकीमण्डपः, अकुलीनोऽपि सद्वंशभूषितः, दर्शिताभयोऽपि मृत्युफलदायी,

---

**कुम्भकर्णः** रावणानुजो राक्षसः। **दन्तेति** । दन्तानां सानूनां अन्तरालं मध्यप्रदेशं गतैः प्राप्तैः। पक्षे दन्तानां दशनानां अन्तरालं गतैः। युद्धे वानराः कुम्भकर्णेन स्ववदने पातितास्तस्य दन्तान्तरप्रदेशं विविशुरिति रामायणे स्पष्टम् । "दन्तो दशनसानुनोः ।" इति हैमः । "दन्तः कटकः सानुतिर्यग्विनिर्गतः शिलाविशेषो वा । दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निःसृता गिरेः। इति हैमः ।" इति शिवरामः । "दन्ता नितम्बभुवि पादतलेऽलकाप्तिः" इति श्रीकण्ठचरितपद्यव्याख्यानावसरे "दन्ताः विषमपाषाणाः" इति जोनराजः । "कुम्भकर्ण इव दन्तान्तरालगतवानरव्यूहः" इति पाठान्तरम् । **पिण्डेति** । पिण्डीभूतो योऽलक्तकः यावकः तस्य रागेण पल्लविताभिः शोभमानाभिः पदपङ्क्तिभिः सूचितः संचारः यासां तासां शचीपतिपुरवारविलासिनीनां स्ववेंश्यानामूर्वश्यादीनां संकेताः संकेतस्थानभूताः केतकीमण्डपाः यस्मिन् स तथोक्तः । "योऽलक्तकश्चिरारूढः स पिण्डालक्तकः स्मृतः ।" इति वैजयन्ती । इतो विरोधाभासेन वर्णयति— **अकुलीन इत्यादिना** । कुलस्यापत्यं कुलीनः सद्वंशप्रसूत इत्यर्थः । न कुलीनः अकुलीनः । तादृशोऽपि, सता श्रेष्ठेन वंशेन गोत्रेण भूषित इति विरोधः । कुलीन इत्यत्र कुलात्ख इति खः । पक्षे कौ भूमौ लीनः मग्नः कुलीनः खर्वः । अकुलीनः उन्नतः । सद्भिः श्रेष्ठैः महद्भिः वंशैः वेणुभिः भूषितः इति परिहारः । "गोत्रा कुः

सप्रस्थोऽप्यपरिमाणः, सनदोऽपि निश्शब्दः, भीमोऽपि कीचकसुहृत्, पिहिताम्बरोऽपि विलसदंशुकः, विन्ध्यो नाम गिरि-

---

पृथिवी पृथ्वी" इत्यमरः। "वंशो वेणौ कुले वर्णे पृष्ठाद्यवयवेपि च।" इति विश्वः। **दर्शितेति**। दर्शितं अभयं भयाभावः अभयप्रदानं वा येन तादृशोऽपि, मृत्युफलं मरणरूपं फलं मरणप्रदं फलं वा ददातीति विरोधः। पक्षे अभया हरीतकी। मृत्युफलं किंपाकफलमिति परिहारः। "अभया त्वव्यथा पथ्या" इत्यमरः। "मृत्युः किंपाकलक्षणः" इत्यजयः। "मृत्युफलं महाकालफलं कदलीफलं वा। मृत्युफलं महाकाले कदल्यां मृत्युफल्यपि। इति विश्वः।" इति शिवरामः। **सप्रस्थ इति**। प्रस्थः परिमाणविशेषः तेन सहितः। अपरिमाणः परिमाणरहितः। पक्षे प्रस्थः सानुः। अपरिमाणः मानातीतः महानित्यर्थः। "प्रस्थः सानौ मानभेदे" इति हैमः। **सनद इति**। नदेन शब्देन सहितः। निश्शब्दः शब्दरहितः। वस्तुतस्तु नदाः प्रत्यक्स्रोतसो नद्यः, ह्रदा वा। निश्शब्दः क्वचिद्विजनतया शब्दरहितः। "नदः शोणाख्यो नदः" इति शिवरामः। "नदो ह्रदेऽब्धौ निनदे" इति हैमः। "नदः समुद्रे निनदे सरिद्भेदे" इति रत्नमाला। "प्रत्यक्स्रोता नदी नदः।" इति केशवः। "सनादः" इति पाठाभ्युपगमेन "नदानां समूहो नादम्" इति केचित्। **भीमोऽपीति**। भीमः भीमसेनः। कीचकस्य विराटस्यालस्य सूतस्य, यो भीमेनैव हतः, सुहृत् मित्रम्। पक्षे भीमः भीषणः। कीचकानां वेणुविशेषाणां सुहृत्। "भीमो घोरे वृकोदरे।" इति हैमः। "कीचको दैत्यभिद्वाताहतसस्वनवंशयोः।" इति मेदिनी। **पिहितेति**। पिहितं आच्छादितं अम्बरं आकाशं येन स तथोक्तः, दिगम्बरो वस्त्रशून्य इत्यर्थः। एवंविधोऽपि, विलसदंशुकः विलसत् विराजमानं

रदृश्यत । यश्च प्रवृद्धगुल्मतया रोगीव दृश्यमानबहुधातुविकारः, साधुरिव सानुग्रहप्रचारप्रकटितमहिमा, मीमांसा-

---

अंशुकं वस्त्रं यस्य स इति विरोधः । पिहितं संछन्नं अम्बरं वस्त्रं येन स तादृशः । एवंविधोऽपि, विलिसदंशुक इति विरोधो वा । पक्षे पिहितं स्थगितं अम्बरं आकाशः येन स तथोक्तः आकाशव्यापीत्यर्थः । विलसन्तः विसर्पन्तः अंशवः किरणाः यस्य स इति परिहारः । "अम्बरं व्योमवस्त्रयोः ।" इति हैमः । "वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ।" "किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः ।" इत्यमरः । पिहितमिति अपिपूर्वाद्धधातेः क्ते रूपम् । "दधातेर्हिः"। वष्टि वागुरीति अपेरकारलोपः । **अदृश्यत** दृष्टः ।

**य इति** । यः विन्ध्यगिरिः । **प्रवृद्धेति** । गुल्मः स्तम्बः, रोगविशेषश्च । "गुल्मः सैन्योपरक्षणे । रुक्सैन्यघट्टभेदेषु स्तम्बे गुल्मी पटौकसि ।" इति हैमः । **दृश्यमानेति** । दृश्यमानाः बहवः धातुविकाराः गैरिकादिधातुरजांसि यस्मिन् स तथोक्तः । पक्षे धातवः वातपित्तादयः रसरक्तादयो वा । विकारः असात्म्यस्थितिः । "धातुः स्यादश्मविकृतौ विषयेष्विन्द्रियेषु च । भूवादिरसरक्तादिश्लेष्मादिवसुधादिषु । वर्तते धातुशब्दोऽयं विशेषास्थनि गैरिके ।" इति विश्वः । **साधुः** सज्जनः । **सानुग्रहेति** । सानुषु प्रस्थेषु ग्रहाणां सूर्यादिग्रहाणां प्रचारेण संचारेण प्रकटितः प्रदर्शितः महिमा औन्नत्यं यस्य स तथोक्तः । पक्षे सानुग्रहः अनुग्रहसहितः यः प्रचारः प्रकृष्ट आचारः वर्तनं वा, तेन प्रकटितः महिमा माहात्म्यं यस्य स तथा । **मीमांसान्यायः** वेदार्थनिर्णायकन्यायप्रतिपादकं जैमिनीयं तन्त्रम् । **पिहितेति** । पिहितं आच्छादितं दिशां अम्बरस्य आकाशस्य च दर्शनं दृष्टिः येन स

न्याय इव पिहितदिगम्बरदर्शनः । यश्च हरिवंशैरिव पुष्कराक्षप्रादुर्भावरमणीयैः, राशिभिरिव मीनमकरकुलीरमिथुन-

---

तथोक्तः । आभोगेन औन्नत्येन च दिशं आकाशं च व्याप्नोतीति भावः । "उत्सारयन्निव विभाति नभोऽवकाशं शृङ्गैर्विहारभवनैरिव तुङ्गतायाः । आभोगवद्भिरमृतांशुकरावदातैराक्रामतीव कटकैर्हरिदन्तराणि ।" इति पार्वतीपरिणये हिमवद्वर्णनम् । पक्षे पिहितं तिरस्कृतं दिगम्बराणां दिगम्बरजैनानां दर्शनं शास्त्रं येन तादृशः । जैनैरनभ्युपेतस्य भगवतो वेदस्य प्रामाण्यं मीमांसायां जैमिनिना न्यायतः समुपपादितमिति मीमांसान्यायस्य दिगम्बरसिद्धान्ततिरस्कर्तृत्वमवगन्तव्यम् । "दिगम्बरस्तु शंकरे । अन्धकारे क्षपणके स्याद्वस्त्ररहितेऽपि च ।" "दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः । स्वप्नलोचनयोश्चापि" इति हैमः । **यश्चेति** । यः देवखातैः अपौरुषेयैर्जलाशयैः । उपशोभितोपान्तः विराजितसमीपप्रदेशः । "अखातं देवखातकम् ।" इत्यमरः । जलाशयानां विशेषणान्याह—**हरिवंशैरिवेत्यादिना** । हरिवंशो नाम श्रीव्यासप्रोक्तो महाभारतानुबन्धः कथाभागः, यत्र श्रीकृष्णीयाश्चरितविशेषाः प्रतिपादिताः । **पुष्करेति** । पुष्कराक्षाः पद्माक्षाः पद्मबीजानि । यद्वा पुष्करं पद्मम् । अक्षं सौवर्चलाख्यं मधुरलवणम् । प्रादुर्भावः उत्पत्तिः । पुष्करं जलम् । अक्षाः सर्पाः विभीतका वा । प्रादुर्भावः स्थितिरिति वा । पक्षे पुष्कराक्षः पुण्डरीकाक्षः श्रीकृष्णः । प्रादुर्भावः अवतारः । "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेऽपि च । व्योम्नि खङ्गफले पद्म तीर्थौषधिविशेषयोः ।" इत्यमरः । "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि । चक्रे कर्णे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये ।" इति मेदिनी । **मीनेति** । मीनानां

संगतैः, करणैरिव शकुनिनागभद्रबालवकुलोपेतैः देवखातै-रुपशोभितोपान्तः । यश्च छन्दोविचितिरिव कुसुमविचित्राभिः, वंशपत्रपतिताभिः, सुकुमारललिताभिः, पुष्पिताग्राभिः,

---

मत्स्यानां मकराणां ग्राहाणां कुलीराणां कर्कटानां मिथुनैः द्वन्द्वैः संगतैः सहितैः । पक्षे मीनमकरादयो राशिविशेषाः । **करणैरिवेति** । करणं नाम तिथ्यर्द्धपरिमितो ववाद्येकादशसंज्ञकः कालविशेषः । "तिथिर्द्विघ्ना करोनागशिष्टा करणमादिमे । परे दले तु सैकं तत्करणं ववपूर्वकम् ।" इति तदानयनप्रकारो ज्योतिश्शास्त्रे निरूपितः । **शकुनीति** । शकुनयः पक्षिणः । नागाः गजाः सर्पा वा । नागं स्वर्णं वा । भद्रः मुस्ता । बालः ह्रीवेरम् । वकुलः केसरवृक्षः । यद्वा बालवकुलः केसरकः । पक्षे शकुनिः नागं भद्रं बालव इति करणविशेषाः, तेषां कुलं समूहः । "शकुनिः पुंसि विहगे सौबले करणान्तरे ।" इति मेदिनी । "नागो मतङ्गजे सर्पे पुंनागे नागकेसरे । नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे ।" "भद्रं तु मङ्गले । मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे।" इति हैमः । "बालो ना कुन्तलेऽश्वस्य करिणश्चापि वालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुंनपुंसकम् ।" इति मेदिनी । **यश्चेति** । यश्च एतादृशीभिः लताभिः छन्दोविचितिरिव दर्शितानेकवृत्तविलास इति संबन्धः । **छन्दोविचितिरिति** । छन्दसां उक्थादीनां षड्विंशतेश्छन्दसां विचितिः विस्तरो यत्रेति छन्दोविचितिः छन्दःप्रतिपादको ग्रन्थविशेषः । "श्रुतिछन्दसां प्रत्यायकं शास्त्रम्" इत्यमरटीकायां भरतः । तथा च बृहत्संहितायाम् । "विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्यमेतावत् । श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ।" इति । **कुसुमेति** । कुसुमानि पुष्पाणि । **वंशेति** । वंशपत्रेषु वेणुदलेषु पतिताभिः प्रसृताभिः ।

प्रहर्षिणीभिः, शिखरिणीभिर्लताभिर्दर्शितानेकवृत्तविलासः । यश्च समदकलहंससारसरसितोद्भ्रान्तभाकूटविकटकुञ्जकूर्च-

---

**सुकुमारेति** । सुकुमाराः मृदवः, ललिताः मनोहराः । पक्षे कुमारललितेति वृत्तनाम । **पुष्पितेति** । पुष्पितं पुष्पयुक्तं अग्रं यासां ताभिः । **प्रहर्षिणीभिरिति** । प्रहर्षयन्ति पश्यतां मनः संतोषयन्तीति प्रहर्षिण्यः ताभिः । **शिखरिणीभिरिति** । शिखरं आसामस्तीति शिखरिण्यः अभग्नाग्रभागाः ताभिः । पक्षे कुसुमविचित्रेत्यादीनि तत्तद्वृत्तनामानि । तेषां च लक्षणानि यथा । "नयसहितौ न्यौ **कुसुमविचित्रा** । दिङ्मुनि **वंशपत्रपतिता** (तं) भरनभनलगैः । **कुमारललिता** ज्स्गाः । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च **पुष्पिताग्रा** । म्नौज्रौ गस्त्रिदशयतिः **प्रहर्षिणीयम्** । रसै-रुद्रैश्छिन्ना यमनसभला गः **शिखरिणी** ।" **दर्शितेति** । दर्शितः अनेकवृत्तः बहुविधः विलासो येन स तथा । पक्षे वृत्तानि पद्यानि । तथा च गङ्गादासः । "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।" इति । **यश्चेति** । यः विन्ध्यगिरिः । एतादृश्या रेवया उपगूढ इत्यन्वयः । रेवां विशिनष्टि—**समदेत्यादिना** । समदानां कलहंसानां कादम्बानां सारसानां पुष्कराह्वाणां च रसितेन शब्देन उद्भ्रान्तानां चकितानां भाकूटानां मीनविशेषाणां विकटैः विशालैः रम्यैर्वा कुञ्जकूर्चैः हनुप्रदेशस्थश्मश्रुभिः व्याधूतेभ्यः कम्पितेभ्यः कमलषण्डेभ्यः पद्मसमूहेभ्यः गलितैः मकरन्दबिन्दुसन्दोहैः सुरभितं वासितं सलिलं जलं यस्यास्तया तथोक्तया । "भाःकूटविकटपुच्छच्छटाव्याधूत" इति शिवरामधृतः पाठः । "भाकूटः कथ्यते मीनभेदे शैलान्तरेऽपि च ।" "विकटः सुन्दरे प्रोक्तो विशालविकरालयोः ।" इति विश्वः । "कुञ्जोऽ-

व्याधूतकमलषण्डगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया, सायन्तनसमयमज्जत्पुलिन्दराजसुन्दरीनिम्ननाभिमण्डलपीतप्रतिहतरयसलिलया, मदमुखरराजहंसकुलकोलाहलमुखरितकूलपुलिनया, तटिनीतटनिकटस्थितमत्तमातङ्गगण्डस्थलविगलन्मदधाराबिन्दुप्रकरस्तबकितसलिलया, तीरप्ररूढकेत-

---

स्त्रियां निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम् ।" इति मेदिनी । "कूर्चो विकत्थने । श्मश्रुणि दम्भे भ्रूमध्ये" इति हैमः । "षण्डं पद्मादिसङ्घाते न स्त्री स्याद्गोपतौ पुमान् ।" इति मेदिनी । उत्कुटकुञ्जकच्छेति पाठं स्वीकृत्य "उत्कुटः मत्स्यविशेषः । कुञ्जः कपोलः । कुञ्जोऽस्त्री गह्वरं कटः । इत्युत्पलः । कच्छं सटा । कच्छं क्लीबे बृहन्मत्स्यस्कन्धकूर्चेऽपि कथ्यते । इति गोपालः ।" इति सांप्रदायिकाः । उत्कुटस्थाने ठात्कुटेति पाठान्तरेण "टात्कुटः पाठीनः ।" इति केचित् । **सायन्तनेति** । सायं भवः सायन्तनः । सायं चिरमित्यादिना ट्युः तुट् च । "सायंसमय" इति पाठान्तरम् । पुलिन्दाः शबराः । "पुलिन्दः पत्रशबरः" इति रत्नकोशः । निम्नं गम्भीरम् । तादृशेन नाभिमण्डलेन पीतं चूषितं अत एव प्रतिहतरयं प्रतिरुद्धवेगं सलिलं यस्यास्तया तथोक्तया । **मदेति** । मदमुखराणां राजहंसानां कुलस्य कोलाहलेन कलकलध्वनिना मुखरितं वाचालितं कूलपुलिनं तटसिकताप्रदेशः यस्यास्तया तादृश्या । "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।" इत्यमरः । "तोयोत्थितं तत्पुलिनम्" इत्यमरः । प्रकृते पुलिनशब्दः सैकतप्रदेशपरः । **तटिनीति** । तटिनी नदी । प्रकरः समूहः । स्तबकितं सञ्जातस्तबकं नानावर्णमित्यर्थः । **तीरेति** । प्ररूढं उत्पन्नम् । धूली परागः । निकुरुम्बं समूहः । सितं

कीकाननपतितधूलीनिकुरुम्बसंजातसितसैकतसुखोपविष्टतरुणसुरमिथुननिधुवनलीलापरिमलसाक्षिकूलोपवनया, तटावटस्थविघटिताम्भोजखण्डमण्डपावस्थितजलदेवतावगाह्यमानपयसा, तीरप्ररूढवेतसलताभ्यन्तरनिलीनदात्यूहव्यूहमदकलकेलीकुहकुहारावकौतुकाकृष्टसुरमिथुनसंस्तूयमानोपभोगया, उपकूलसंजातनलनिकुञ्जपुञ्जितकुलायकुक्कुटघटाघ-

---

धवलम् । सैकतं सिकतामयप्रदेशः । निधुवनलीलापरिमलः सुरतक्रीडा विमर्दः। साक्षि साक्षाद्द्रष्टृ। उपवनं आरामः। **तटेति** । तटावटस्थं तीरगर्तस्थितं विघटितं विकसितं यत् अम्भोजखण्डं पद्मवनं तदेव मण्डपः, तत्र अवस्थिताभिः जलदेवताभिः अवगाह्यमानं स्नानाय प्रविश्यमानं पयः जलं यस्यास्तया तथोक्तया । "तटाटवीनिकटनिपतितजम्बुखण्डमण्डप" इति पाठान्तरम् । **तीरप्ररूढेति** । वेतसलताभ्यन्तरनिलीनः यो दात्यूहव्यूहः कालकण्ठकाख्यपक्षिविशेषसमूहः तस्य मदकले मदेन अव्यक्तमधुरे केलीकुहकुहारावे कुहकुहेत्याकारकमणितरणिते कौतुकेन अभिलाषेण संतोषेण वा आकृष्टं यत् सुरमिथुनं तेन संस्तूयमानः परिचीयमानः आरभ्यमाण इत्यर्थः उपभोगः सुरतानुभवः यस्यास्तया तादृश्या । संस्तूयमानः प्रशस्यमान इति वा । "व्यूहो निर्माणतर्कयोः । समूहे बलविन्यासे" इति हैमः। "कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ।" इति मेदिनी । "संस्तवः स्यात्परिचयः" इत्यमरः । "दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ।" इति राजशेखरः । **उपकूलेति** । कूलस्य समीपं उपकूलम् । तत्र सञ्जातेषु नलनिकुञ्जेषु नडाख्यतृणविशेषकुञ्जेषु पद्मकुञ्जेषु वा पुञ्जिताः सङ्घशो निर्मिताः ये कुलायाः नीडानि तेषु

**टितघूत्कारभैरवतीरया, आतपसेवासमुत्सुकजलमानुषीमृदितसुकुमारतरपुलिनया, उपवनपवनान्दोलिततरलतरतरङ्गया, नलिनीनिकुञ्जपुञ्जनिविष्टदुष्टबकोटककुटुम्बिनीनिरीक्ष्यमाणवृद्धशफरया, पोताधानलुब्धकोयष्टिकस्तम्भनभीमवेतसवनलतया, तरङ्गमालासन्तरदुद्दण्डवालदर्शनधावदतिचप-**

---

विद्यमानानां कुक्कुटानां घटया समूहेन घटितः यः घूत्कारः तेन भैरवं भीषणं तीरं यस्यास्तया तादृश्या। "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे।" "कुलायो नीडमस्त्रियाम्।" इत्यमरः। "घटा घटनगोष्ठीभघटनासु च दृश्यते।" इति विश्वः। "भैरवो भीषणे रुद्रे रागभेदे" इति हैमः। **उपवनेति**। उपवनपवनेन आन्दोलिताः कम्पिताः अत एव तरलतराः अतिचञ्चलाः तरङ्गाः वीचयः यस्यास्तया तथोक्तया। **नलिनीति**। पुञ्जः समूहः। बकोटककुटुम्बिन्यः बकस्त्रियः। शफराः मत्स्यविशेषाः। "बके कह्वो बकोटवत्।" इति हेमचन्द्रः। "प्रोष्ठी तु शफरी द्वयोः।" इत्यमरः। **पोताधानेति**। पोताधानं अण्डादचिरनिर्गतमत्स्यसङ्घातः, अल्पमत्स्यसमूहो वा। "क्षुद्राण्डमत्स्यसङ्घातः पोताधानम्" इत्यमरः। कोयष्टिकाः दीर्घगलाः पक्षिविशेषाः। "कोयष्टिको दीर्घगलः" इति वैजयन्ती। स्तम्भनं स्तब्धतया स्थितिः निश्चलावस्थानमित्यर्थः। स्कम्भनमिति पाठमभ्युपगम्य "स्कम्भनं शब्दविशेषः। स्कम्भनं गद्गदं समे। इति वैजयन्ती।" इति कश्चित्। "स्कम्भिः सौत्रो धातुरनेकार्थत्वाच्छब्दार्थः।" इति शिवरामः। "स्तम्भनं कण्ठस्तम्भनम्।" इति केचित्। वेतसवनं वानीरकाननम्। **तरङ्गेति**। संतरन्तः लङ्घमानाः। उद्दण्डवालाः मत्स्यविशेषाः। राजिलाः जलसर्पाः। "निर्विषो द्विमुखः

लराजिलराजिराजितोपकूलसलिलया, खञ्जरीटमिथुननिधुवनदर्शनोपजातनिधिग्रहणकौतुककिरातशतखन्यमानस्थपुटिततीरया, क्रुद्धयेव दर्शितमुखभङ्गया, मत्तयेव स्खलद्गत्या, दिनारम्भलक्ष्म्येव वर्धमानवेलया, भारतसमरभूम्येव नृत्यत्कबन्धया, प्रावृषेव विजृम्भमाणशतपत्रपिहितविषधरया,

---

सर्पो राजिलः ।" इति सुधा । "उद्दण्डवालो विपुलो दीर्घदेहो झषो मतः ।" इति वैजयन्ती । **खञ्जरीटेति** । खञ्जरीटाः पक्षिविशेषाः । तेषां निधुवनदर्शनेन उपजातं यत् निधिग्रहणकौतुकं तेन किरातशतैः शबरगणैः खन्यमानं अवदार्यमाणं स्थपुटितं विषमोन्नतीकृतं तीरं कूलं यस्यास्तया तादृश्या । "स्थपुटं विषमोन्नतम् ।" इति हेमचन्द्रः । खञ्जना यत्र रतं कुर्वन्ति, तत्र निधिरस्तीति प्रसिद्धिः । तथा चोच्यते । "अङ्गारखण्डं किल भूमिभागे तस्मिन् भवेद्यत्र करोति विष्ठाम् । यत्रावनौ खञ्जनको विधत्ते रतं भवेत्तत्र महानिधानम् ।" इति । **दर्शितेति** । मुखं निस्सरणमार्गः । भङ्गाः ऊर्मयः । पक्षे मुखभङ्गः क्रोधचिह्नभूतो मुखविकारः । "मुखमुपाये प्रारम्भे श्रेष्ठे निस्सरणास्ययोः ।" इति हैमः । "भङ्गस्तरङ्ग ऊर्मिर्वा" इत्यमरः । **स्खलदिति** । शिलासु तत्र तत्र स्खलन्ती गतिः प्रवाहगतिः यस्यास्तया तादृश्या । पक्षे गतिः गमनम् । **दिनेति** । दिनारम्भः प्रातःकालः । **वर्धमानेति** । वेला कूलम्, समयश्च । "वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रोग ईश्वरस्य च भोजने ।" इति मेदिनी । **समरभूमिः** युद्धभूमिः । **नृत्यदिति** । कबन्धं जलम्, अपमूर्द्धकलेवरं च । **प्रावृट्** वर्षाकालः । **विजृम्भमाणेति** ।

धनकामयेव कृतभूभृत्सेवया रेवया प्रियतमयेव प्रसारित-तरङ्गहस्तयोपगूढः । यश्च,

हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैः ।
अद्यापि कुम्भसंभवमाह्वयतीवोच्चतालभुजः ॥

---

विजृम्भमाणैः विलसद्भिः शतपत्रैः मयूरैः पिहिताः आच्छादिताः आक्रान्ता इति यावत् । तादृशाः बिषधराः सर्पाः यस्यां तया तथोक्तया । पिहिताः मयूरभक्षणभयादात्मनैव संरक्षिताः विषधरा यस्यां तयेति वा। उभयत्र सममेतत् । यद्वा रेवापक्षे विजृम्भमाणैः विकसितैः शतपत्रैः पद्मैः पिहितस्य विषस्य जलस्य धरया इति, प्रावृट्पक्षे विजृम्भमाणैः उद्गच्छद्भिः शतपत्रैः दार्वाघाटैः पिहिताः विषधराः मेघाः यस्यां तया इति च व्याख्येयम् । वर्षाकाले मेघानामधस्ताद्दार्वाघाटाः संचरन्तीति स्थितिः । "शतपत्रः शिखण्डिनि । दार्वाघाटे सारसे च कमले तु नपुंसकम् ।" इति विश्वः । "विषं जले क्ष्वेडे" इति हैमः । **धनकामा** धनाकाङ्क्षिणी। **कृतेति**। भूभृत् पर्वतः, राजा च। भूभृत्स्यात्पर्वते राज्ञि" इत्यजयः। **उपगूढः** आश्लिष्टः । **यश्चेति** । इदं पदं उत्तरपद्ये संबध्यते ।

**हरीति**। हरयः सिंहाः। विकलाः विह्वलाः। वारणाः गजाः । कुम्भसंभवः अगस्त्यः । उच्चः उन्नतः ताल एव भुजः यस्य स उच्चतालभुजः। "उच्चतालभुजैः।" इति पाठान्तरम्। "हर्यक्षः केसरी हरिः।" "कुञ्जरो वारणः करी ।" "अगस्त्यः कुम्भसंभवः ।" इत्यमरः। उत्प्रेक्षा। विन्ध्यं शासित्वा दक्षिणां दिशं प्रस्थितोऽगस्त्यो नाद्यापि प्रतिन्यवृतदिति पुराणेषु श्रूयते ।

तत्रान्तरे मकरन्दस्तमुवाच ।

पश्योदञ्चदवाञ्चदञ्चितवपुःपूर्वार्द्धपश्चार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलाङ्गूलभृत् ।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन्त्सटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ॥

---

**पश्येति** । उदञ्चन् उन्नमन् अवाञ्चन् अवनमन् अञ्चितः शोभमानश्च वपुषः देहस्य यः पूर्वार्द्धः पूर्वभागः पश्चार्द्धः अपरभागः तं भजतीति तादृशः । अपरश्चासौ अर्द्धश्च पश्चार्द्धः । अपरस्यार्द्धे पश्चभावो वक्तव्य इति पश्चादेशः । स्तब्धं निश्चलं उत्तानितं ऊर्द्ध्वोत्क्षिप्तं पृष्ठनिष्ठितं पृष्ठभागस्थितं मनाग्भुग्नाग्रं किञ्चिदवनमिताग्रभागं च यत् लांगूलं पुच्छः तत् बिभर्तीति तादृशः । दंष्ट्राणां कोटिभिः युतं विशङ्कटं विशालं च आस्यकुहरं वदनरन्ध्रं यस्य स तथोक्तः । "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ।" वक्त्रास्ये वदनं तुण्डम्" "अथ कुहरं सुषिरं विवरं बिलम् ।" इत्यमरः । क्रूराकृतिः भयंकरः । केसरी सिंहः । उत्कर्णः उत्क्षिप्तश्रवणः । उत्कण्ठ इति पाठान्तरम् । सटां केसरम् । उत्कटां उन्नमितां कुर्वन् प्रबुद्धरोमेत्यर्थः । उत्कटां अधिकां सटां कुर्वन् प्राप्नुवन्निति वा । करिपतौ गजाधिपे । क्रमं पादविक्षेपं आक्रमणमित्यर्थः । कुरुते । "सटा जटाकेसरयोः" इति विश्वः । अत्र कामतः सिंहस्य यथावद्वर्णितत्वात्स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ।" इति तल्लक्षणम् ।

अपि च ।

उत्कण्ठोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः
क्रूराकारकरालवक्त्रकुहरः स्तब्धोर्ध्वलाङ्गूलभृत् ।
चित्रे चापि न शक्यते विलिखितुं सर्वाङ्गसंकोचभाक्
फीट्कुर्वद्गिरिकुञ्जकुञ्जरबृहत्कुम्भस्थलस्थो हरिः ॥

---

**उत्कण्ठ इति**। उत्कण्ठः उन्नमितकन्धरः। उत्कर्ण इति पाठान्तरम्। न काण्डः अवसरः यस्य सः अकाण्डः अवसररहितः निर्निमित्तः स्वाभाविक इति यावत्। तादृशेन चण्डिम्ना चण्डभावेन उग्रत्वेन पटुः परविदलने शक्तः। यद्वा अकाण्डेन अकुत्सितेन सफलेनेत्यर्थः चण्डिम्ना अतिकोपनतया पटुः निष्ठुरो निर्दयो वा । अकाण्डः अरहस्यः सुप्रसिद्ध इति वा । "काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीबृन्दे रहसि न स्त्रियाम् ।" इति मेदिनी। "पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च।" इति रुद्रः । चण्डिमेत्यत्र पृथ्वादित्वाद्भावे इमनिच्। स्फाराः अधिकाः, स्फारं यथा तथा वा स्फुरन्तः प्रकाशमानाः केसराः सटाः यस्य स तथा । "तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे । पुंनागवृक्षे किञ्जल्के केसरः" इति हैमः। क्रूराकारं भयंकरं करालं विशालं वक्त्रकुहरं यस्य स तादृशः । "करालो रौद्रतुङ्गोरु (त्र) ध्वणतैलेषु दन्तुरे।" इति हैमः। स्तब्धं निश्चलं ऊर्ध्वं ऊर्ध्वोत्क्षिप्तं च लांगूलं बिभर्तीति तादृशः। सर्वेषामपि अङ्गानां संकोचं आकुञ्चनं भजतीति तथोक्तः । फीट्कुर्वन् वेदनया फीट् इति शब्दं कुर्वन् यः गिरिकुञ्जे पर्वतगुहायां स्थितः गजः तस्य बृहति महति

अनन्तरं नीचदेशनद्येव न्यग्रोधोपचितया, उत्तरगो-

---

कुम्भस्थले मस्तकप्रदेशे तिष्ठतीति तादृशः। "शिरः कुम्भस्थल" इति पाठे तु गजशिरः गजपतिः । यद्वा गजस्य यत् शिरः मस्तकः तस्य यत् कुम्भस्थलं एकदेशः इति व्याख्येयम्। करिकलभन्यायेन अत्र कुम्भपदस्य केवलैकदेशपरत्वम् । शिरः शिखरमिव स्थितं कुम्भस्थलमिति वा । "शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च ।" इति मेदिनी । "कुम्भौ घटेभमूर्द्धांशौ" इत्यमरः । शिवरामस्तु "अत्र शिरःपदमाधिकम् ।" इति लिखति । अयं हरिः सिंहः। चित्रे आलेख्येऽपि । विलिखितुं न शक्यते । "चित्रेणापि" इति पाठान्तरम् । लिखतेरकुटादित्वात् "विलिखितुम्" इति चिन्त्यम्। विलेखितुमिति तु न्याय्यम्। अधिकं तु लिखधातौ भावप्रकाशे द्रष्टव्यम्। अत्रापि क्रान्तवतः सिंहस्य स्वरूपवर्णनात् स्वभावोक्तिरलङ्कारः।

**अनन्तरमिति**। अनन्तरं एतादृश्या विन्ध्याटव्या कतिपयपदमध्वानं गत्वा कस्य चिज्जम्बूतरोः अधः छायायां विशश्रामेति संबन्धः। विन्ध्याटव्या विशेषणान्याह— **नीचदेशेत्यादिना**। नीचदेशे निम्नप्रदेशे प्रवहन्ती या नदी तयेवेत्यर्थः। **न्यग्रोधेति**। न्यग्रोधैः वटवृक्षैः उपचितया समृद्धया। पक्षे न्यग्रोधेन तिर्यक्प्रवाहप्रतिरोधेन उपचितया वर्द्धितया ऊर्द्ध्वमानीतयेत्यर्थः। "न्यक् नीचं अधो गतं यत् रोधः कूलं तेन अपचिता कृशा" इति केचित्। "नीचनद्येव" इति पाठान्तरम्। तदा नीचनदी अल्पा नदी। न्यग्रोधः व्यामः, तेन तावत्पर्यन्तं उपचिता प्रवृद्धा। अत्यल्पप्रसरणेत्यर्थ इति व्याख्येयम्। 'व्यामो वटश्च न्यग्रोधौ' "कूलं रोधश्च तीरं च" "क्षयार्चयोरपचितिः" इत्यमरः। **उत्तरेति**। उत्तरः विराटपुत्रः। गोग्रहणं सुयोधनादिभिरपहृतानां गवां प्रत्यानय-

ग्रहणसमरभूम्येव विजृम्भमाणबृहन्नलया, कुरुदेशढक्कयेव

---

नम् । "उत्तरं प्रवरोर्ध्वयाः । उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे ।" इति हैमः । **विजृम्भमाणेति** । विजृम्भमाणाः प्रवर्द्धमानाः बृहन्तः नलाः वंशाः नडाख्यास्तृणविशेषा वा यस्यां तया तथोक्तया । पक्षे विजृम्भमाणः विलसन् बृहन्नलः तत्संज्ञाधारी अर्जुनः यस्यां तया तादृश्या । "बृहन्नलो गुडाकेशे नडे कौशिकनन्दने ।" इति विश्वः । "नलः पोटगलः शून्यमध्यश्च धमनस्तथा ।" इति भावप्रकाशः । **कुरुदेशेति** । "कुरुदेशे कुरुक्षेत्रे विद्यमाना ढक्का कर्पूराकरभूता कुल्या । "ढक्का सिताभ्रकुल्या च" इति कोशः । **घनसारेति** । घनसारः कर्पूरः तस्य सार्थं समूहं वहतीति तादृश्या । अटवीपक्षे घनसारः महाधनसंपन्नः सार्थः समूहः । घनसारश्चन्द्रसंज्ञः सिताभ्रं हिमवालुका । इत्यमरः ।" इति सांप्रदायिका व्याचक्षते । "ढक्का यशःपटहः । घनः दृढः सारः बलं येषां ते घनसाराः महाबलाः कौरवाः पाण्डवाश्च, तेषां सार्थं समूहं वाहयति युद्धाय गमयतीति तथा । घनसारसार्था अतिबला वाहिनी सेना यस्या इति वा । कुरुक्षेत्रे ढक्कायां वाद्यमानायां सर्वेऽपि युद्धाय सन्नद्धा आसन्नित्यर्थः । विन्ध्याटवीपक्षे च घनसारः बहुधनः यः सार्थः वणिक्संघः तं वहतीति तथा । वणिजः सर्वदापि तत्पथेन संचरन्त इत्यर्थः । यद्वा घनसारः वृक्षविशेषः । स्याद्यशः पटहो ढक्का इत्यमरः । घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽपि च ।" इति हैमः । "सारो बले स्थिरांशे च मज्ञि पुंसि जले धने । इति, सार्थो वणिक्समूहे स्यादपि संघातमात्रके । इति च मेदिनी । घनसारस्तु कर्पूरे वृक्षभेदे जलेऽपि च । इति विश्वः ।" इति परे । शिवरामस्तु "मरुदेशढक्कायालयेव" इति

घनसारसार्थवाहिन्या, विदग्धमधुगोष्ठ्येव नानाविटपीतासवया, नलकूबरचित्तवृत्त्येव सततधृतरम्भया, मत्तमातङ्गगत्येव घण्टारवावेदितमार्गया, सदीश्वरसेवयेव अदूरोद्गतबहु-

---

पाठमभ्युपगम्य "ढक्कायाः ढक्काध्वनेः यात्रा गमनम् । घनो मेघः । तत्सारः पानीयं तदर्थं सार्थः समूहः । तद्वाहिनी तत्प्रापिका । यद्वा ढक्केत्यनेन तद्ध्वनिः सा चासौ यात्रा उत्सवः उदकमुदकं कूपादित्येवंरूपः तद्वत्या । गमनोत्सवयोर्यात्रा इति विश्वः । मरुदेशे जलार्थिनो ढक्काध्वनिश्रवणाज्जलमुद्गतमन्धोरिति निकषा प्रयान्तीति प्रसिद्धम् । पक्षे घनसारः कर्पूरम् ।" इति व्याचष्टे । **विदग्धेति** । विदग्धाः नागरकाः तेषां मधुगोष्ठी मधुपानसभा । "विदग्धो नागरस्समौ ।" इति त्रिकाण्डशेषः । "समज्या परिषद्गोष्ठी सभासमितिसंसदः ।" इत्यमरः । **नानेति** । नानाविटपिषु अनेकेषु वृक्षेषु इतः संयुतः नानाविटपिभिः इतः प्राप्तो वा आसवः पुष्परसः लाक्षादिकं वा यस्यास्तया तथोक्तया । पक्षे नानाविटैः अनेकैः षिड्गैः पीतः आस्वादितः आसवः मद्यविशेषः यस्यां तया तादृश्या । "षिड्गः पल्लवको विटः ।" इत्यमरः । "शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।" इति माधवः । **नलकूबरः** कुबेरपुत्रः । "पुत्रस्तु नलकूबरः ।" इति कुबेरप्रकरणे अमरः । **सततेति** । रम्भाः कदल्यः वेणवो वा । पक्षे रम्भा नाम काचिदप्सराः, यस्याः प्रेयान्नलकूबरः । "रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे ।" इति मेदिनी । **घण्टारवेति** । घण्टारवाभिः शणपुष्पिकाभिः अवेदितं अज्ञापितं ताभिराच्छन्नमित्यर्थः । तादृशं मार्गं मृगाणां समूहः, मार्गः पन्था वा यस्यां तया तादृश्या । पक्षे घण्टानां आभरणभूतानां घण्टानां रवेन शब्देन आवेदितः सूचितः मार्गः गजगमनमार्गः

फलया, विराटलक्ष्म्येव आनन्दितकीचकशतया विन्ध्याटव्या कतिपयपदमध्वानं गत्वा, कामिन इव मदनशलाकाङ्क्षितस्य, विकर्तनस्येव स्निग्धच्छायस्य, वैकुण्ठस्येव लक्ष्मीभृतः, या-

---

यस्यास्तया तथोक्तया । "घण्टारवया शणपुष्पिकया तत्कुसुमेनेत्यर्थः । अवेदितः अज्ञापितः तिरस्कृत इत्यर्थः । तादृशः मार्गः मृगमदः यस्यां तया" इति केचित् । "घण्टारवा तु शणपुष्पिका ।" इत्यमरः "मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि ।" इति हैमः । **सदीश्वरेति** । सन् योग्यः ईश्वरः स्वामी । **अदूरेति** । अदूरोद्गतानि समीपस्थितानि करापचेयानीत्यर्थः । तादृशानि बहूनि फलानि तरुफलानि जातीफलानि वा यस्यां तया तथोक्तया । पक्षे अदूरोद्गतानि अचिरादेव संपन्नानि बहूनि फलानि प्रयोजनानि यस्यास्तया तथोक्तया । यद्वा अटवीपक्षे अदूरोद्गताः समीपोत्पन्नाः बहुफलाः वृक्षविशेषाः यस्यामिति व्याख्येयम् । "दूरोद्गत" इति पाठे तु दूरोद्गताः अत्युच्छ्रिता इति, पक्षे दूरोद्गतानि अत्यन्ताधिकानि इति च व्याख्येयम् । "फलं हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः । जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि ।" इति विश्वः । "गजोल्बणा बहुफला" इति वैजयन्ती । **आनन्दितेति** । कीचकाः वेणुविशेषाः, पक्षे विराटस्यालाः । एतादृश्या विन्ध्याटव्या विन्ध्यवनेन । **कतिपयेति** । कतिपयानि पदानि यस्य तं तादृशम् । "कतिपयदूरम्" इति पाठान्तरम् । **मदनेति** । मदनशलाका शारिका, पक्षे कामवर्द्धकौषधिविशेषः । "स्यान्मदनशलाकापि शार्यां कामोदयौषधौ । इति विश्वः । "मदनशलाका नखम्" इति केचित् । "नखाग्रम्" इति परे । "नखक्षतम्" इत्यन्ये । "शारी मदनशलाका विदग्धयोषिन्नखाग्रं च ।" इत्यजयः । **विकर्तनः** सूर्यः । "विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ।" इत्यमरः ।

त्रोद्यतनृपतेरिव घनपत्रशोभितस्य, वेदस्येव भूरिशाखालंकृतस्य, गाणिक्यस्येव अनेकपल्लवोज्ज्वलस्य जम्बूतरोरधश्छायायां विशश्राम । अत्रान्तरे भगवानपि मरीचिमाली आतपक्लान्तवनमहिषलोचनपाटलमण्डलश्चरमाचलशिखरमारुरोह ।

---

**स्निग्धेति** । स्निग्धा मसृणा छाया अनातपः यस्य तस्य । पक्षे स्निग्धा स्नेहयुक्ता छाया स्वप्रिया यस्य तस्य । 'स्निग्धस्तु वत्सलः ।' 'चिक्कणं मसृणं स्निग्धम्" इत्यमरः । **वैकुण्ठः** विष्णुः । **लक्ष्मीः** शोभा, इन्दिरा च । "लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायां वृद्धिनामौषधेऽपि च ।" इति मेदिनी । **यात्रेति** । यात्रा विजयाय गमनम् । तत्र उद्यतः उद्युक्तः । 'यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे ।' इति विश्वः । **घनेति** । घनानि निबिडानि पत्राणि पर्णानि । पक्षे पत्राणि वाहनानि । "घनः सान्द्रे दृढे दार्ढ्ये" इति हैमः । "पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः ।" इति विश्वः । **भूरीति** । भूरयः बहवः शाखाः शिखाः । पक्षे शाखाः काठकप्रभृतयो वेदभागाः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः ।' इति मेदिनी । "शाखा वेदविभागे च पादपाङ्गेऽन्तिकेऽपि च ।" इति विश्वः । **गाणिक्यस्येति** । गणिकानां वारस्त्रीणां समूहः गाणिक्यम् । गणिकाया यञिति वक्तव्यमिति वार्तिकात् यञ् । "गणिकादेस्तु गाणिक्यम्" इत्यमरः । **अनेकेति** । पल्लवाः किसलयानि, पक्षे विटाः । **विशश्राम** विश्रान्तोऽभूत् । **अन्तरे** अवसरे । **मरीचिमाली** किरणमाली सूर्यः । "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः । **पाटलं** श्वेतरक्तम् । "श्वेतरक्तस्तु

ततो मकरन्दः फलमूलान्यादाय कथमपि तमभिनन्दिताहारमकार्षीत् । स्वयमपि तदुपभुक्तशेषमकरोदशनम् । अथ तामेव प्रियतमां हृदयफलके सङ्कल्पतूलिकया लिखितामिवालोकय न्निस्पन्दकरणग्रामः कन्दर्पकेतुर्मकरन्दविरचिते पल्लवशयने सुष्वाप । अथ याममात्रावखण्डितायां यामवत्यां जम्बूतरुशिखरे मिथः कलहायमानयोः शुकशारिकयोः कलकलं श्रुत्वा कन्दर्पकेतुर्मकरन्दमुवाच — "वयस्य शृणुवस्तावदनयोरालापम्" इति । ततो जम्बूनिकुञ्जस्थिता शारिका का चिच्चिरादागतं शुकं प्रकोपतरलाक्षरमुवाच— "कितव, शारि-

---

पाटलः ।" इत्यमरः । **चरमाचलः** अस्तपर्वतः । "अस्तस्तु चरमक्ष्माभृत्" इत्यमरः । **अथेति** । हृदयमेव फलकं तस्मिन् हृदयफलके । **संकल्पेति** । संकल्पः भावनैव तूलिका चित्रलेखनी कूर्चिका । "संकल्पः कर्म मानसम् ।" इत्यमरः । 'तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी ।' इति हैमः । **निस्पन्देति** । निस्पन्दः निश्चलः स्वस्वव्यापारविरत इत्यर्थः । तादृशः करणानां इन्द्रियाणां ग्रामः समूहः यस्य स तथोक्तः । 'करणं कारणे काये साधनेन्द्रियकर्मसु । कायस्थे र(त्र)तबन्धे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशोः पुत्रे' इत्यजयः । 'ग्रामः स्वरे संवसथे बृन्दे शब्दादिपूर्वकः ।' इति विश्वः । **अथेति** । यामः प्रहरः । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः ।' इति विश्वः । **यामवत्यां** रात्रौ । **कलहायमानयोः** कलहं कुर्वतोः । शब्दवैरेत्यादिना करणार्थे क्यङ् । **कितवः** धूर्तः । 'धूर्तोऽक्षदेवी कितवः'

कान्तरमन्विष्य गतोऽसि । कथमन्यथा रात्रिरियती तव" इति। अथ तच्छ्रुत्वा शुकस्तामवादीत्—"भद्रे, मुञ्च कोपम् । अपूर्वा बृहत्कथा मया श्रुता, प्रत्यक्षीकृता च । तेनायं कालातिपातः ।" इति । अथ समुपजातकुतूहलया शारिकया मुहुर्मुहुरनुबद्ध्यमानः कथां कथयितुमारेभे ।

अस्ति मन्दरगिरिशृङ्गैरिव प्रशस्तसुधाधवलैः, बृह-

---

इत्यमरः । **इयती** इदंपरिमाणा । 'नीता' इति क्वचिदधिकः पाठो दृश्यते । **भद्रे** सुमङ्गले । सान्त्वनोक्तिरियम् । **अपूर्वा** नव्या । **बृहत्कथा** महती कथा । **प्रत्यक्षीकृतेति** । कथासंबन्धिजनस्य प्रत्यक्षीकरणमेव कथायाः प्रत्यक्षीकरणमिति बोध्यम् । **कालातिपातः** कालस्यातिलङ्घनं विलम्ब इत्यर्थः । **अनुबध्यमानः** अनुवृत्यमानः । "अनुबन्धोऽप्रयोगिणि । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।' इति हैमः ।

**अस्तीति** । एतादृशैः वेश्मभिः उद्भासितम्, एतादृशेन निवासिजनेन अनुगतम्, एतादृशेन वेश्याजनेन अधिष्ठितं कुसुमपुरं नाम नगरं अस्तीति संबन्धः । वेश्मनां विशेषणान्याह— **मन्दरेत्यादिना** । मन्दरस्य समुद्रमथनविषये मन्थानभूतस्य पर्वतविशेषस्य शृङ्गैः शिखरैः सानुभिरिव वा । 'कूटोऽस्त्री शिखरं शृङ्गम्' 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । **प्रशस्तेति** । प्रशस्ता श्रेष्ठा या सुधा गृहादिलेपनचूर्णविशेषः । तेन तल्लेपनेनेत्यर्थः धवलानि शुक्लानि तैः । पक्षे सुधा अमृतम् । 'लेपभेदेऽमृते सुधा ।' इति वैजयन्ती । 'पक्षे सुधाः इष्टकाः शिला इत्यर्थः । ताभिः धवलानि रम्याणि । 'सुधामृते स्नुहीमूर्वाले-

त्कथालम्बैरिव सालभञ्जिकोपशोभितैः, वृत्तैरिव समाणवकक्रीडितैः, करियूथैरिव समत्तवारणैः, सुग्रीवसैन्यैरिव सगवाक्षैः, बलिभवनैरिव सुतलसन्निवेशैः वेश्मभिरुद्भासितम्,

---

पगङ्गेष्टकासु च ।' इति विश्वः । 'अथ धवलो महोक्षे सुन्दरे सिते। धवली गौः इति हैमः ।' इति केचित् । **बृहत्कथेति** । बृहत्कथा नाम गुणाढ्यकविकृतः पैशाचीबद्धो ग्रन्थविशेषः । तस्य लम्बाः सर्गपरिच्छेदादिवत् ग्रन्थावान्तरविच्छेदाः । 'बृहत्कथारम्भैरिव' इति पाठान्तरम् । 'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ।' इति दण्डी । **सालभञ्जिकेति** । सालभञ्जिका स्तम्भादिषूत्कीर्णा पाञ्चालिका, गणिका वा । पक्षे सालभञ्जिका नाम काचिद्विद्याधरी, या बृहत्कथायां वर्ण्यते । 'सालभञ्जिका नायिकाविशेषः ।' इति शिवरामः । 'पाञ्चालिका तु पाञ्चाली पुत्रिका सालभञ्जिका । वेश्या तु गणिका क्षुद्रा वारस्त्री सालभञ्जिका ।' इति जटाधरः । **वृत्तानि** पद्यानि । 'वृत्तं पद्ये चरिते त्रिष्वतीते दृढनिस्तले ।' इत्यमरः । **समाणवकेति**। माणवकानां बालानां वटूनां वा क्रीडितेन क्रीडया सह वर्तन्त इति तैः तथोक्तैः । पक्षे माणवकक्रीडितं नाम वृत्तविशेषः, यस्य माणवकमित्यपि व्यपदेशः । "भात्तलगा **माणवकम्** ।" इति तल्लक्षणम् । **करीति** । करिणां गजानां यूथानि समूहाः । **मत्तेति** । मत्तवारणानि प्रासादवीथीवरण्डाः निर्यूहा वा । पक्षे मत्तवारणा मत्तगजाः । "निर्यूहो मत्तवारणम् ।" इति वैजयन्ती । "मत्तवारणमिच्छन्ति दानक्लिन्नकटद्विपे । महाप्रासादवीथीनां वरण्डे चाप्यपाश्रये ।" इति विश्वः । **सगवाक्षैरिति** । गवाक्षाः वातायनानि । पक्षे गवाक्षो नाम कश्चिद्वानरः । "गवाक्षो जालके कपौ ।" इति हैमः । **बलीति** । बलिर्नाम विरोचनपुत्रः कश्चिद्दैत्यः । **सुतलेति** ।

धनदेनापि प्रचेतसा, गोपालेनापि रामेण, प्रियंवदेनापि

---

शोभनः तलसंनिवेशः भूमिसंस्थानम् ,सुतलः सुभूमिकः संनिवेशः गृहाणां संस्थानं वा येषां तैस्तथोक्तैः। अथवा संनिवेशः पुरादेर्बहिर्विहरणभूमिः। यद्वा सुतैः पुत्रैः लसन्तः राजमानाः निवेशाः येषां तैस्तादृशैः । पक्षे सुतले सुतलाख्ये अधोलोके संनिवेशः संस्थानं येषां तैस्तादृशैः । त्रिविक्रमेणाधःकृतस्य बलेः पाताले वासादिति भावः । "तलं ज्याघातवारणे । तलश्चपेटे तालद्रौ स्वभावाधारयोः त्सरौ ।" इति हैमः । "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यवीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना ।" इति मेदिनी । "संनिवेशो निकर्षणः ।" इत्यमरः । "नगरादेः बहिः स्वैरविहारचारुभूमिषु । तत्र द्वयं निगदितं संनिवेशो निकर्षणम् ।" इति रत्नावली । 'अतलं सुतलं चैव वितलं च तलातलम् । महातलं च विख्यातं ततो ज्ञेयं रसातलम् । ततः पातालमित्येवं सप्त पातालसंज्ञकाः ।' इति पाद्मम् । 'एवंभूतानुभावोऽयं बलिस्सर्वसुखैकभुक् । आस्ते सुतलराज्यस्थो देवदेवप्रसादतः ।' इति देवीभागवतम् । **वेश्मभिः** गृहैः । 'वेश्म सद्म निकेतनम् ।' इत्यमरः । **उद्भासितं** शोभितम् । इतो निवासिजनं विशिनष्टि—**धनदेनापीत्यादिना** । धनदेन कुबेरेण सतापि, प्रचेतसा वरुणेनेति विरोधः। पक्षे धनदः धनप्रदः दानशील इत्यर्थः । प्रचेताः प्रकृष्टमनस्क इति परिहारः । एवमेवोत्तरत्रापि आपाततो विरोधस्ततः परिहारश्च बोध्यः। अपिः सर्वत्र आभासमानं विरोधं दर्शयति ।'धनदौ दातृगुह्यकौ ।' इति हैमः । 'प्रचेताः पाशिनि मुनौ ना प्रकृष्टहृदि त्रिषु ।' इति मेदिनी । **गोपालेनेति** । गाः पालयतीति गोपालः कृष्णः । रामः दाशरथिः बलरामो वा । गोपालस्य रामत्वं विरुद्धम् । पक्षे गोपालः गोधनसंप-

पुष्पकेतुना, भरतेनापि लक्ष्मणेन, तिथिपरेणाप्यतिथिसत्कार-प्रवणेन, असंख्येनापि संख्यावता, अमर्मभेदिनापि वीरतरेण,

---

न्नः । यद्वा गोपालः वाक्पालः वाग्मीत्यर्थः । 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ।' इति मेदिनी । रमयतीति रामः सर्वसन्तोषक इति परिहारः । **प्रियंवदेनेति** । प्रियंवदो नाम कश्चन गन्धर्वः । पुष्पकेतुः मन्मथः । पक्षे प्रियंवदः प्रिय-भाषणशीलः । पुष्पेण पुष्पधारणेन जायमानः केतुः द्युतिः यस्य स पुष्प-केतुः । "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि ।" इति मेदिनी । "पुष्पं सौजन्यं केतुः चिह्नं यस्य तेन पुष्पकेतुना सौजन्यनिधिनेत्यर्थः । पुष्पे ह्यार्तवसौजन्ये इत्यजयः ।" इति केचित् । **भरतेनापीति** । भरतः कैकेयीपुत्रः । लक्ष्मणः सुमित्रासुतः । पक्षे भे नक्षत्रे तच्छास्त्र इत्यर्थः । रतः आसक्तः भरतः ज्यौतिषिक इत्यर्थः । लक्ष्मणः लक्ष्मीवान् । "नक्षत्रमृक्षं भं तारम्" इत्यमरः । "लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत् ।" इति मेदिनी । "भरतेनापि शत्रुघ्नेन" इति पाठे तु शत्रुघ्नः सुमित्रासूनुः, पक्षे रिपु-हन्ता इति व्याख्येयम् । **तिथीति** । तिथौ पर्वादितत्तत्तिथिविहितकर्मणि परेण श्रेष्ठेन तदासक्तेनेत्यर्थः । **अतिथिसत्कारेति** । तिथेः तिथिवि-हितकर्मणः सत्कारे बहुमाने तदनुष्ठान इत्यर्थः । प्रवणः आयत्तः तिथिसत्कारप्रवणः स न भवतीत्यतिथिसत्कारप्रवणः । तिथिपरस्य अतिथिसत्कारप्रवणत्वं विरुद्धम् । पक्षे अतिथयः अभ्यागताः तेषां सत्कारे उपचारे प्रवणः प्रह्व इति परिहारः । "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले ।" इत्यमरः । "प्रवणः क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षी (क्ष) णे प्रगुणे समुदाहृतः ।" इति धरणिः ।

अपतितेनापि नानासवासक्तेन, सुदर्शनेनाप्यचक्रेण, अजातम-

---

"स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।" इत्यमरः । **असंख्येनापीति** । असंख्येन संख्यारहितेन सतापि, संख्यावता संख्यायुक्तेनेति विरोधः । पक्षे न संख्यं युद्धं यस्येति असंख्यः कलहरहितः । यद्वा असंख्यः संख्यातीतः अत्यधिक इत्यर्थः । संख्या ज्ञानं अस्यास्तीति संख्यावान् पण्डित इति परिहारः । "मृधमास्कन्दनं संख्यम् ।" "संख्यावान्पण्डितः कविः ।" इत्यमरः । **अमर्मभेदिनेति** । मर्म जीवस्थानं तत् भिनत्तीति मर्मभेदी । स न भवतीत्यमर्मभेदी । वीरतरः अतिशूरः । अमर्मभेदिनो वीरतरत्वं विरुद्धम् । वीरस्य बाणैः परमर्मभेदित्वात् । पक्षे मर्म तत्वं परेषां रहस्यं वा इति परिहारः । "ई श्रीः । रा दाने । विशेषेण ई श्रियं राति ददातीति वीरं तादृशं तलं पाणितलं यस्य स वीरतरः । रलयोरभेदः ।" इति कश्चित् । "वीरतरेण काण्डेन । काण्डस्य मर्मभेदित्वं प्रसिद्धम् । तद्भिन्नत्वेन वर्णनं विरोधः । अजिह्मगो वीरतरोऽस्त्रकण्टक इति हारावली । मर्म रहस्यं तदभेदकेन । वीरतरेणातिशूरेणेति परिहारः ।" इति शिवरामो व्याचष्टे । **अपतितेनापीति** । पतितः पातकी । अपतितः परिशुद्धः । **नानेति** । नानाविधेषु आसवेषु मद्यविशेषेषु आसक्तः । अपतितस्य नानासवासक्तत्वं विरुद्धम् । मद्यपानस्य पातित्यप्रयोजकतास्मरणात् । तथा च स्मर्यते । "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ।" इति, "महापातकिनो ये च पतितास्ते प्रकीर्तिताः ।" इति च । नानासवासक्तेनापि, अपतितेन भूमौ अनिपतितेन । आसवासक्तस्य मदेन पतनावश्यंभावात्तदभावोक्तिर्विरुद्धेति वा । पक्षे अपतितः अपातकी । यद्वा अः विष्णुः । तत्र पतितः विष्णुभक्त इत्यर्थः । नानाविधाः सवाः

देनापि सुप्रतीकेन, हंसेनाप्यपक्षपातिना, अविदितस्नेहक्षयेणापि कुलप्रदीपेन, अग्रन्थिनापि वंशपोतेन, अग्रहेणापि काव्य-

यागाः। तेष्वासक्त इति परिहारः । "मैरेयमासवः शीधुः" "यज्ञः सवोऽध्वरो यागः" इत्यमरः । **सुदर्शनेनेति** । सुदर्शनः विष्णोश्चक्रायुधम् । अचक्रं चक्रायुधभिन्नः । सुदर्शनस्य अचक्रत्वं विरुद्धम् । पक्षे शोभनं दर्शनं यस्य स सुदर्शनः सुन्दरः प्राज्ञो वा। चक्रं दम्भविशेषः । तद्रहितः अचक्र इति परिहारः । "सुदर्शनो हरेश्चक्रेऽमरावत्यां सुदर्शनी ।" इति विश्वः । "जनावने समूहे च दम्भभेदरथाङ्गयोः ।" इति रन्तिदेवः । **अजातमदेनेति** । अजातः अनुत्पन्नः मदः दानजलं यस्य तेन तथोक्तेन । सुप्रतीकेन तदाख्येन दिग्गजेन । सुप्रतीकस्य अज्ञातमदत्वं विरुद्धम् । पक्षे मदः अहंकारः । प्रतीकः अवयवः । सुप्रतीकः शोभनावयव इति परिहारः । "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ।" इति विश्वः । "सुप्रतीको दिगीशेभे शोभनावयवे त्रिषु ।" इति मेदिनी । **हंसेनापीति** । हंसः पक्षिविशेषः । पक्षेण पतत्रेण पतति गच्छतीति पक्षपाती, स न भवतीति अपक्षपाती । हंसस्य अपक्षपातित्वं विरुद्धम् । पक्षे हंसः अमत्सरः । पक्षे पातः पक्षपातः । सः अस्यास्तीति पक्षपाती न पक्षपाती अपक्षपाती पक्षपातरहितः तटस्थ इत्यर्थः । "हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे । निर्लोभनृपतौ हंसः शारीरमरुदन्तरे ।" इति विश्वः । **अविदितेति** । स्नेहक्षयः तैलक्षयः । **कुलेति** । कुलस्य गृहस्य दीपः कुलदीपः । दीपस्य अविदितस्नेहक्षयत्वंविरुद्धम् । पक्षे स्नेहः प्रेमा । कुलदीपः वंशप्रदीपकः कुलश्रेष्ठ इत्यर्थः । "स्नेहः प्रेम्णि घृतादिके ।" इति हैमः । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्" इति मेदिनी ।

जीवज्ञेन, निदाघदिवसेनेव वृषवर्धितरुचिना, माघविरामदि-

**अग्रन्थिनेति**। ग्रन्थिः पर्व। अग्रन्थिः पर्वरहितः। वंशपोतः वेणुकरीरः। वंशपोतस्याग्रन्थित्वं विरुद्धम्। पक्षे ग्रन्थिः कौटिल्यम्। तद्रहितः अग्रन्थिः। वंशे सद्वंशे जातः पोतः अर्भकः वंशपोतः सद्वंशप्रसूत इत्यर्थ इति परिहारः। यद्वा पोतः यानपात्रम्। वंशपोतः कुलोत्तारक इत्यर्थः। "ग्रन्थिर्वस्त्रादिबन्धे रुग्भेदे कौटिल्यपर्वणोः।" "वंशः संघेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च।" इति हैमः। "यानपात्रे शिशौ पोतः" इत्यमरः। **अग्रहेणेति**। अग्रहः ग्रहभिन्नः। **काव्येति**। काव्यः शुक्रः। जीवः बृहस्पतिः। ज्ञः बुधः। एवंविधस्य अग्रहत्वं विरुद्धम्। पक्षे ग्रहः अभिनिवेशः। तद्रहितः अग्रहः न कुत्राप्याभिनिविष्ट इत्यर्थः। काव्यस्य जीवः आत्मा तत्तत्त्वमित्यर्थः। तं जानातीति काव्यजीवज्ञ इति परिहारः। "ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः।" इति विश्वः। "काव्यं ग्रन्थे पुमान् शुक्रे" "जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ।" "ज्ञो ब्रह्मबुधविद्वत्सु" इति मेदिनी। **निदाघेति**। निदाघदिवसः ग्रीष्मदिवसः। "निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि।" इति विश्वः। **वृषेति**। वृषे धर्मे वर्द्धिता रुचिः अभिलाषो यस्य तेन तथोक्तेन। पक्षे वृषेण वृषभराशिना सूर्यस्य तत्संक्रमणेनेत्यर्थः वर्द्धिता रुचिः दीप्तिः यस्य तेन तथोक्तेन। तदा सूर्यस्यातितेजस्वित्वाद्दिवसस्य रुचिरधिकेति भावः। "वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः।" इति मेदिनी। "रुचिर्द्युतौ। स्पृहाभिष्वङ्गशोभासु" इति हैमः। अत्रेदमवधेयम्। ऋतवो हि बहुधा तत्र तत्र विकल्पिता दृश्यन्ते। यथा। "मेषवृषौ वसन्तः" इत्येके। "वसन्तः कुम्भमीनयोः। ग्रीष्मौ मेषवृषौ प्रोक्तः" इत्यपरे।

**वसेनेव तपस्यारम्भिणा, नभस्वतेव सत्पथगामिना, विवस्वतेव गोपतिना, महेश्वरेणेव चन्द्रं दधता निवासिजनेनानुगतम्, घनापगमेनेव दर्शितखण्डाभ्रेण, वेलातटेनेव प्रवाल-**

---

"मीनमेषौ वसन्तः। वृषभमिथुने ग्रीष्मः" इत्यन्ये। एवं चैतादृशपक्षभेदाश्रयणेन वृषभस्य ग्रीष्मान्तर्भावः समर्थनीय इति। **माघेति**। माघः फाल्गुनादव्यवहितपूर्वो मासः। तस्य विरामदिवसः अवसानदिनम्। **तपस्येति**। तपस्या तपश्चरणम्। तत्र आरम्भिणा प्रयत्नवता। यद्वा तपसि आरम्भिणेति द्वे पदे। उक्त एवार्थः। पक्षे तपस्यः फाल्गुनमासः। "अथ फाल्गुने। स्यात्तपस्यः फाल्गुनिकः।" इत्यमरः। **नभस्वान्** वायुः। "नभस्वद्वातपवन" इत्यमरः। **सत्पथेति**। सत्पथः साधुमार्गः। पक्षे सतां नक्षत्राणां पन्थाः सत्पथः आकाशः। "सत्पथो दिवि सन्मार्गे तारामार्गे च कथ्यते।" इत्यजयः। **विवस्वान्** सूर्यः। "भास्वद्विवस्वत्सप्ताश्व" इत्यमरः। **गोपतिनेति**। गौः भूमिः वाक् अर्जुनी वा। पक्षे गौः रश्मिः। **महेश्वरः** शिवः। **चन्द्रः** स्वर्णम्, इन्दुश्च। "चन्द्रः कर्पूरकाम्पिल्यसुधांशुस्वर्णवारिषु।" इति मेदिनी। **निवासिजनेन** पुरवास्तव्यजनेन। **अनुगतं** व्याप्तम्। इतो वेश्याजनं विशिनष्टि— **घनापगमेनेवेत्यादिना**। घनापगमः मेघापगमः शरत्काल इत्यर्थः। **दर्शितेति**। खण्डाभ्रं नाम दन्तक्षतविशेषः। "विचित्रमीषत्परिमण्डलं च क्षतैः समन्ताद्विशदैरुपेतम्। खण्डाभ्रकं तद्दशनाग्रलेखं बिम्बाधरोत्सङ्गविभूषणाय।" इति तल्लक्षणम्। "खण्डाभ्रमभ्रावयवे स्त्रीणां दन्तक्षतान्तरे।" इति हैमः। "खण्डाभ्रं नखक्षतविशेषः। खण्डाभ्रं भुजमूले यत्कलाकारं नखक्षतम्। इति कामतन्त्रे।" इति केचित्।

मण्डनेन, देवाङ्गनाजनेनेव इन्द्राणीपरिचयविदग्धेन, गजेन्द्रेणेव पल्लववर्धितरुचिना, कोकिलेनेव परपुष्टेन, भ्रमरेणेव कुसुमेषुलालितेन, जलौकसेव रक्ताकृष्टिनिपुणेन, यायजू-

---

पक्षे खण्डाभ्रं शकलीभूतो मेघः मेघावयव इत्यर्थः । "भित्तं शकलखण्डे वा" "अभ्रं मेघो वारिवाहः" इत्यमरः । **वेलातटं** समुद्रकूलप्रदेशः । **प्रवालेति** । प्रकृष्टाः वालाः कुन्तला एव मण्डनं यस्य तेन । यद्वा प्रवालः वीणादण्डः, विद्रुमो वा । पक्षे प्रवालानि विद्रुमाः किसलयानि वा । "चिकुरः कुन्तलो वालः" इत्यमरः । "प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे ।" इति हैमः । शिवरामस्तु प्रवालमणिमण्डनेन इति पाठमभ्युपगम्य "यद्वा प्रवालमणिः दन्तक्षतविशेषः । तथा च वामनः । गाढं दन्तौष्ठसंयोगात्स प्रवालमणिर्भवेत् । इति ।" इति व्याचष्टे । **इन्द्राणीति** । इन्द्राणी बन्धविशेषः । तस्य परिचये परिचयेन वा विदग्धेन कुशलेन । "निजकक्षद्वयसङ्गतजानुभ्यां भवति चाभ्यासात् । इन्द्राणीरचितत्वादिन्द्राणीत्याख्यया बन्धः ।" इति तल्लक्षणम् । "तिष्ठतो मिथुनस्यैव यद्रतं पुष्पपञ्जरे । रागापातक्षणभ्रष्टं तदिन्द्राण्याह्वयं विदुः । इति भोजराजः ।" इति केचित् । पक्षे इन्द्राणी इन्द्रपत्नी । "इन्द्राणी करणे स्त्रीणां पौलोमीसिन्दुवारयोः ।" इति विश्वः । इन्द्रवरुणेत्यादिना ङीष् आनुक् च । **पल्लवेति** । पल्लवः विटः, किसलयं च । **परेति** । परं अत्यन्तं पुष्टः धनसंपन्नः । परैः अन्यैः कामुकैः पुष्टः ऐश्वर्यं प्रापित इति वा । पक्षे परैः अन्यैः काकैः पुष्टः । **कुसुमेति** । कुसुममयाः इषवः बाणाः यस्य सः कुसुमेषुः मन्मथः । तेन लालितेन विलासं प्रापितेन । पक्षे कुसुमेषु पुष्पेषु । लालितेन तोषितेन मादितेन वा । **जलौकसेति** । जलं ओकः स्थानं यस्य सः जलौकाः कश्चिज्जलजन्तुविशेषः, यस्य रक्तपा

केनेव सुरतार्थिना, महानटबाहुनेव बद्धभुजंगाङ्केन, गरुडेनेव विलासिहृदयतापकारिणा, अन्धकेनेव शूलानामुपरि गतेन

इति व्यपदेशः । **रक्तेति** । रक्तानां अनुरक्तानां विटानां आकृष्टिः आकर्षणं वशीकरणमित्यर्थः । तत्र निपुणेन समर्थेन । पक्षे रक्तस्य रुधिरस्य आकृष्टिः चूषणम् । 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि ।" इति मेदिनी । "जलौकसेनेव रक्ताकृष्टिनिपुणेन वेश्याजनेनेति वासवदत्तायाम्, जलं च तदोकश्चेति जलौकः । ततोऽर्श आद्यचि एकवचनमदन्तत्वं चोपपाद्यम् ।" इति मुकुटः । **यायजूकः** इज्याशीलः । 'इज्याशीलो यायजूकः' इत्यमरः । 'यजजपदशां यङः' इति सूत्रेण यजतेर्यङन्तादूकप्रत्ययः । **सुरतेति** । सुरतं निधुवनम् । पक्षे सुरस्य भावः सुरता देवत्वम् । **महानटः** शिवः । 'महाकालो महानटः' इत्यमरः । **बद्धेति** । बद्धः स्वीकृतः भुजङ्गानां अङ्कः उत्सङ्गः अपराधो वा येन तेन तथोक्तेन । पक्षे बद्धः धृतः भुजङ्गाः सर्पा एव अङ्कः चिह्नं भूषणं वा येन तेन तादृशेन । 'भुजङ्गः सर्पषिड्गयोः ।' इति हैमः । 'अङ्कः स्थानेऽन्तिके मन्तौ रूपकोत्सङ्गलक्ष्मसु । नाटकादिपरिच्छेदे चित्रयुद्धे च भूषणे ।' इति विश्वः । **विलासीति** । विलासिनां हृदयतापं कृणोति हिनस्ति अपनयतीति तेन । कृञ् हिंसायां स्वादिः । यद्वा विलासिनां स्वासंयुक्तविटानां हृदयतापं करोतीति तेन । पक्षे वबयोरभेदात् बिलासिनः बिलस्थितिशीलाः सर्पाः । तेषां हृदतापकरेण । **अन्धकः** तन्नामा कश्चिदसुरः, यः शिवेन शूलमारोपितः । **शूलानामिति** । शूलानां प्रदेशान्तरस्थानां वारस्त्रीणाम् । उपरि गतेन श्रेष्ठेन । पक्षे शूलं नामायुधविशेषः । प्रकृतोपयोगि बहुवचनमत्र कथंचिदवयवाभिप्रायेण समर्थनीयम् । उपरि गतेन शूलाग्रमारोपितेनेत्यर्थः ।

वेश्याजनेनाधिष्ठितं कुसुमपुरं नाम नगरम् ।

यत्र च सुरासुरमौलिमालालालितचरणारविन्दा, शुम्भनिशुम्भमहासुरबलमहावनदावानलज्वाला, महिषासुरगिरिवरवज्रधारा, प्रणयकलहप्रणतगङ्गाधरजटाजूटकोटिस्खलितजाह्नवीजलधाराधौतपादपद्मा, भगवती कात्यायनी चण्डाभिधाना स्वयं निवसति । यस्य च परिसरे सुरासुरमज्जनगलितकुसुममकुटरजोराजिपरिमलवाहिनी, पितामहकमण्डलु-

---

'शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति ।' इति मेदिनी । **अधिष्ठितं** अध्युषितम् । **कुसुमपुरं** पाटलीपुत्रकम् । नामेति प्रसिद्धौ ।

**यत्र चेति** । यत्र यस्मिन् कुसुमपुरे । चण्डाभिधाना चण्डिकाख्या । कात्यायनी दुर्गा । निवसति । 'वेतालाभिधाना' इति पाठान्तरम् । 'उमा कात्यायनी गौरी' इत्यमरः । कात्यायनीं विशिनष्टि—**सुरासुरेत्यादिना** । मौलिमाला शिरःस्थितपुष्पदाम , किरीटपरम्परा वा । "किरीटे मौलिरस्त्रीबे चूडासंयतकेशयोः ।" इति रभसः । "माला तु पङ्क्तौ पुष्पादिदामनि ।" इति हैमः । **शुम्भेति** । दावानलः वनाग्निः । "दवदावौ वनारण्यवह्नी" इत्यमरः । रूपकमलंकारः । **प्रणयेति** । गङ्गाधरः शिवः । जटानां जूटः बन्धः जटाजूटः कपर्दः । कोटिः अग्रम् । स्खलिता प्रच्युता । जाह्नवी गङ्गा । धौतं क्षालितम् । **यस्य चेति** । यस्य कुसुमपुरस्य । परिसरे समीपे । भगवती भागीरथी गङ्गा । प्रवहति । गङ्गाया विशेषणान्याह— **सुरासुरेति** । कुसुमैमकुटं पुष्पैः

विनिर्गतधर्मद्रवधारा, धरातलपतितसगरसुतशतसुरनगरसमारोहणपुण्यरज्जुनिश्रेणिका, ऐरावतकपोलकषणकम्पिततटगतहरिचन्दनस्यन्दमानरससुरभितसलिला, सलीलसुरसुन्दरीनितम्बबिम्बाहतितरलिततरङ्गा, स्नानावतीर्णसप्तर्षिमण्डलविमलजटाटवीपरिमलपुण्यवेणिः, एणतिलकमकुटविकटजटा-

---

कृतं किरीटम्। "मकुटकुसुम" इति पाठान्तरम्। रजः परागः। **पितामहेति**। पितामहः ब्रह्मा। तस्य कमण्डलोः जलाधारपात्रविशेषात् विनिर्गतो यो धर्मद्रवः धर्म एव किमीदृशः परिणत इति शङ्क्यमानं सलिलम्, तस्य धारा। पुरा बलिनिग्रहे ऊर्ध्वोत्क्षिप्तं हरेश्चरणारविन्दं क्षालयितुं ब्रह्मणा समुपयुक्तं स्वकमण्डलुजलमेव गङ्गात्मना समभूदिति पौराणिकी कथात्रानुसंधेया। **धरातलेति**। धरातलं पातालम्। तत्र पतितस्य सगरसुतशतस्य सुरनगरसमारोहणार्था पुण्यभूता रज्जुनिश्रेणिका रज्जुकृता अधिरोहणी। 'निश्रेणिस्त्वधिरोहणी।' इत्यमरः। सगरसुताः भगीरथप्रयत्नेन गङ्गयैव स्वर्गं प्रापिता इति रामायणे व्यक्तम्। **ऐरावतेति**। कपोलकषणं गण्डस्थलवर्षणम्। रसः निर्यासः। **सलीलेति**। नितम्बबिम्बं नितम्बमण्डलम्। तरलिताः क्षोभिताः। **स्नानेति**। स्नानार्थं अवतीर्णस्य सप्तर्षिमण्डलस्य विमलायाः परिशुद्धायाः जटाटव्याः निबिडस्य जटाबन्धस्य परिमलेन गन्धेन पुण्या वेणी प्रवाहः यस्यास्सा तथोक्ता। 'वेणी सेतुप्रवाहयोः। देवताडे केशबन्धे" इति हैमः। **एणतिलकेति**। एणः हरिणः तिलकं विशेषकं यस्य स एणतिलकः हरिणाङ्कः चन्द्रः। एणतिलकमुकुटः चन्द्रमौलिः शिवः। विकटः करालः। भ्रान्तिः चक्राकारभ्रमणम्। संस्कारः वासना। "संस्कारो वासना समे।" इति

जूटकुहरभ्रान्तिजनितसंस्कारेवाद्यापि कुटिलावर्ता, धरणीव सार्वभौमकरस्पर्शोपभोगक्षमा, जलदकालसरसीव गन्धपरिभ्रमद्भ्रमरमालानुमीयमानजलमूलमग्नकुमुदपुण्डरीका, छन्दोविचितिरिव मालिनीसनाथा, ग्रहपङ्क्तिरिव सूर्यात्मजोपशो-

---

वैजयन्ती । **कुटिलेति** । कुटिलाः वक्राः आवर्ताः भ्रमयः यस्यास्सा तथोक्ता । "स्यादावर्तोऽम्भसां भ्रमः ।" इत्यमरः । **धरणिः** भूमिः । **सार्वभौमेति** । सार्वभौमस्य तदाख्यस्य दिग्गजस्य करस्पर्शः शुण्डासंस्पर्शः तत्पूर्वकः तद्रूपो वा य उपभोगः अनुभवः तस्य क्षमा योग्या । पक्षे सार्वभौमः चक्रवर्ती । करस्पर्शः अन्यनृपतिकर्तृकं राजग्राह्यभागवितरणम् । तत्पूर्वकस्योपभोगस्य क्षमा उचिता । "सार्वभौमस्तु दिग्गजे चक्रवर्तिनि ।" इति हैमः । "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः ।" इति मेदिनी । "स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि ।" इति हैमः । **जलदेति** । जलदकालः वर्षाकालः । सरसी सरः । "कासारः सरसी सरः ।" इत्यमरः । **गन्धेति** । गन्धेन मदजलवासनया परिभ्रमन्ती उपरिष्टादितस्ततः संचरन्ती या भ्रमरमाला भ्रमरपङ्क्तिः तया अनुमीयमानः ऊह्यमानः जलमूलमग्नः कुमुदः पुण्डरीकश्च दिग्गजो यस्यां सा तथोक्ता । पक्षे कुमुदानि कैरवाणि । पुण्डरीकाणि सिताम्भोजानि । "ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।" "सिते कुमुदकैरवे ।" "पुण्डरीकं सिताम्भोजम्" इत्यमरः । **मालिनीति** । मालिनी नाम काचिन्नदी । पक्षे मालिनी नाम वृत्तविशेषः । "ननमयययुतेयं मालिनी भोगिलोकैः ।" इति तल्लक्षणम् । **ग्रहेति** । ग्रहाः सूर्यादयः । **सूर्येति** ।

भिता सराजहंसा च, शरत्कालदिनश्रीरिव उज्ज्वलत्कोकनदा प्रबुद्धपुण्डरीकाक्षा च, हृतान्धतमसापि तमसान्विता, वीचिकलिताप्यवीचिदुर्गभा भगवती भागीरथी प्रवहति ।

---

सूर्यात्मजा यमुना । पक्षे सूर्यात्मजः शनिः । "कालिन्दी सूर्यतनया" "समौ सौरिशनैश्चरौ ।" इत्यमरः । **सराजेति** । राजहंसाः हंसविशेषाः । पक्षे राजा चन्द्रः । हंसः सूर्यः । "राजा तु पार्थिवे । निशाकरे प्रभौ शक्रे यक्षक्षत्रिययोरपि ।" "हंसोऽर्केऽमत्सरेऽच्युते । खगाश्वयोगिमन्त्रादिभेदेषु परमात्मनि ।" इति हैमः । **उज्ज्वलदिति** । उज्ज्वलन् विजृम्भमाणः कोकानां चक्रवाकानां नदः शब्दः यस्यां सा तथोक्ता । पक्षे कोकनदानि रक्तोत्पलानि । पूर्वत्रापीदं सुयोजम् । "रक्तोत्पलं कोकनदम्" इत्यमरः । **प्रबुद्धेति** । प्रबुद्धं विकसितं यत् पुण्डरीकं तदेव अक्षि यस्यास्सा तथोक्ता । अक्षाः सर्पाश्चेति वा । "पुण्डरीकाक्षाः पद्मबीजानि" इति केचित् । पक्षे प्रबुद्धः योगनिद्राया उत्थितः पुण्डरीकाक्षः विष्णुः यस्यां सा तथोक्ता । कार्तिकशुक्लैकादश्यां भगवतो वासुदेवस्य योगनिद्राया उत्थानमिति पुराणेषु व्यक्तम् । तथा च मात्स्ये । "शेते विष्णुः सदाषाढे भाद्रे च परिवर्तते । कार्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने ।" इति । **हृतेति** । अन्धयतीत्यन्धम् । अन्धं तमः अन्धतमसम् । अवसमन्धेभ्य इति समासान्तोऽच्प्रत्ययः । अन्धतमसं गाढं तिमिरम् । हृतं अन्धतमसं यया सा तथोक्ता । तादृशी सत्यपि, तमसा तिमिरेण अन्विता युक्तेति विरोधः । पक्षे अन्धतमसं अन्धतामिस्रापरपर्यायो नरकविशेषः, प्रबलमज्ञानं वा । तमसान्विता इत्येकं पदम् । तमसया तन्नामकनद्या अन्वितेति परिहारः । "ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः ।" इत्यमरः । **वीचीति** । वीचयः तरङ्गाः । तैः कलिता

यच्च दिशि दिशि सन्तानकतरुकुसुमनिकरमिव शिखरावलग्नं तारागणमिव कुसुमनिकरमुद्वहद्भिः, उत्तम्भितजलदैः, अनूरुकशाभिघातपरवशरविरथतुरगग्रासविषमिताग्रपल्लवैः, चन्द्रचमूरुचरणसंक्रान्तामृतकणनिकरसेकसंजात बहुलसुकुमारनवकुसुमकिसलयसहस्रदर्शिताकालसन्ध्याकालविभ्रमैः, भरतचरितैरिव सदारामाश्रितैः, महावीरैरिव नारि-

---

संयुक्ता सत्यपि, अवीचिदुर्गमा वीचिभिः संपूर्णा न भवतीति विरोधः। पक्षे अवीचिः नरकभेदः। "वीचिदुर्गमाविति नरकविशेषौ। तौ यया न भवतः सा तथा।" इति केचित्।

**यच्चेति** । यत् कुसुमपुरम् । एवंभूतैः उपवनपादपैः उपशोभितमित्यन्वयः। कीदृशैः पादपैः। **दिशि दिशीति** । सन्तानकः देवतरुविशेषः । **उत्तम्भितेति** । उत्तम्भिताः ऊर्ध्वं धृताः जलदाः मेघाः यैस्तैस्तथोक्तैः । **अनूरुकशेति** । अनूरुः ऊरुरहितः अरुणः । कशा ताडनी । "अश्वादेस्ताडनी कशा।" इत्यमरः। अभिघातः प्रहारः । ग्रासः चर्वणम् । विषमिताः न्यूनाधिकभावादिना बहुविधं भेदं प्रापिताः। अग्रं शिखरम्। **चन्द्रेति**। चमूरुः कुरङ्गभेदः। 'चीनश्चमूरुप्रियकावपि।' इति मृगप्रकरणे अमरः। चरणं भक्षणं सञ्चारो वा। चरणः पाद इति वा। सुकुमारं रम्यम्। अकालः अनियतकालः। विभ्रमः शोभा। 'विभ्रमो भ्रान्तिशोभयोः।' इत्यजयः। **भरतः** कैकेयीपुत्रः। **सदेति**। सन्तं श्रेष्ठं आरामं उपवनं आश्रितैः। पक्षे सदा सर्वदा रामं कौसल्यासूनुं रामभद्रं आश्रितैः। 'आरामः स्यादुपवनम्' इत्यमरः। **नारिकेलीति**। नारिकेलिनी नारिकेलफलयुक्ता

10

केलिधरैः, असंस्कृततरुणैरिव अतिदूरप्रसारिताक्षैः, तपस्विभिरिव जपासक्तैः, प्रसाधितैरिव कृतमालोपशोभितैः, मातङ्ग-

---

धरा भूमिः येषां तैस्तथोक्तैः। नारिकेलशब्दान्मत्वर्थीयः। यद्वा नारिकेलपर्यायो नारिकेलिरिति शब्दोऽपि शब्दमालायां स्वीकृतः। तथा च नारिकेलीनां नारीकेलवृक्षाणां तत्फलानां वा धरैरित्यपि व्याख्यातुं शक्यते। नारीशब्दपर्यायतया नारिशब्दं स्वीकृत्य "नारीणां स्त्रीणां याः केलयः डोलाविहारादयः क्रीडाः तद्धरैः।" इति केचित्। पक्षे अरीणां शत्रूणां केलिः परिहासः तद्धराः अरिकेलिधराः शत्रूपेक्षका इत्यर्थः। ताद्भिन्ना नारिकेलिधराः तैः तादृशैः। 'द्रवकेलिपरीहासाः' इत्यमरः। **असंस्कृतेति**। असंस्कृताः कामकलायामशिक्षिताः। **अतीति**। अतिदूरं प्रसारिताः अत्युच्छ्रिता इत्यर्थः। तादृशाः अक्षाः विभीतकाख्यतरवः येषु तैस्तथोक्तैः। पक्षे अतिदूरं अत्यधिकं प्रसारितानि विस्तारितानि अक्षीणि यैस्तैस्तथोक्तैः। कटाक्षवीक्षणं हि नागरकनयनविलास इति भावः। 'अतिदूरप्रश्रयाक्षैः' इति पाठमादृत्य 'अतिदूरः अत्यन्तासंनिहितः प्रश्रयो विनयो येषां तानि अक्षाणि इन्द्रियाणि येषां ते तथा। पक्षे अतिदूरं अत्यर्थं प्रश्रयः प्रकर्षेण सेवा उच्छ्रायो वा। अतिदूरप्रश्रययुक्ता अक्षाः विभीतकाः।' इति केचित्। उपमानपक्षे 'अक्षाः पाशकाः।' इति केचित्। तदेतत्सर्वं असंस्कृततरुणपदस्वारस्यानुगुणम्। **तपस्विनः** तापसाः। **जपेति**। जपा जपावृक्षः, तत्पुष्पं वा। पक्षे जपः मन्त्रादीनामुपांशूच्चारणम्, वेदाध्ययनं वा। 'जवायां तु जपा स्मृता।' इति धर्मदासः। 'स्वाध्यायः स्याज्जपः' इत्यमरः। **प्रसाधिताः** अलंकृताः। **कृतेति**। कृतमालाः वृक्षविशेषाः। पक्षे कृता ग्रथिता माला माल्यम्। **मातङ्गेति**। विदारणं

कुम्भस्थलविदारणोत्सुकसिंहैरिव उत्फुल्लकेसरैः, सारिष्टैरपि चिरजीविभिः, मुनियुतैरपि मदनाधिष्ठितैरुपवनपादपैरुपशोभितम्, अदितिजठरमिव अनेकदेवकुलाध्यासितम्, पाताल-

---

भेदनम्। उत्सुकाः आसक्ताः। **उत्फुल्लेति**। उत्फुल्लाः विकसिताः केसराः वकुलाः येषां तैस्तथोक्तैः। पक्षे उत्फुल्लाः प्रवुद्धाः केसराः सटाः येषां तैस्तथोक्तैः। 'सिंहाश्वयोश्च केशेषु किञ्जल्के केसरोऽस्त्रियाम्। नागकेसरपुन्नागवकुलेषु पुमानयम्।' इति नानार्थरत्नमाला। 'उद्यतकेसरैः उद्धूतस्कन्धकेशैः। पक्षे केसरा वृक्षाः।' इति शिवरामः। **सारिष्टैरिति**। अरिष्टं मरणचिह्नम्। तेन सह वर्तन्त इति सारिष्टाः। तादृशैः सद्भिरपि, चिरं जीवन्तीति चिरजीविनः तादृशैरिति विरोधः। पक्षे अरिष्टः काकः, कङ्कः, वृक्षविशेषो वा। तेन सहितैः। चिरजीविभिः पुरातनैरिति परिहारः। 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः। अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च' इति मेदिनी। 'रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते। तल्लक्षणमरिष्टं स्यात् रिष्टमप्याभिधीयते।' इति पुराणे। **मुनियुतैरिति**। मुनयः ऋषयः। तैर्युतानां मदनाधिष्ठितत्वं विरुद्धम्। पक्षे मुनयः अगस्त्यवृक्षाः। मदनाः वृक्षभेदाः। 'मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने।' इति मेदिनी। 'मदनः सिक्थके स्मरे। राढे वसन्ते धत्तूरे' इति हैमः। **अदितीति**। अदितिः देवानां माता तस्याः जठरं उदरम्। "जठरो न स्त्रियां कुक्षौ बद्धकक्खटयोस्त्रिषु।' इति मेदिनी। **अनेकेति**। देवकुलानि देवालयाः, पक्षे देवसमूहाः। अध्यासितं अधिष्ठितम्। **महाबलीति**। महान्तो ये बलिनः बलवन्तः तैः शोभितम्। यद्वा बलिः

मिव महाबलिशोभितं भुजङ्गाधिष्ठितं च, ससुरालयमपि पवित्रम्, भोगियुक्तमप्यनुपद्रवम् ।

तत्र सुरतरभसखिन्नप्रसुप्तसीमन्तिनीरत्नताटङ्कमुद्राङ्कितबाहुदण्डः, प्रचण्डप्रतिपक्षलक्ष्मीकेशपाशकुसुममालामोदसुरभितकरकमलः, प्रशस्तकेदार इव बहुधान्यकार्यसंपाद-

---

दैवतोपहारः, गृहदारुप्रभेदो वा । पक्षे महान् बलिः विरोचनसुतो बलिचक्रवर्ती । "बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च ।' इति मेदिनी । **भुजङ्गेति** । भुजङ्गाः विटाः, सर्पाश्च । 'भुजङ्गः सर्पषिड्गयोः ।' इति हैमः । **ससुरेति** । सुरायाः मद्यस्य आलयाः सुरालयाः मद्यविक्रयस्थानानि । तैः सहितमपि पवित्रं परिशुद्धमिति विरोधः । पक्षे सुराणां देवानां आलयाः सुरालयाः देवगृहाणि तैः सहितमिति परिहारः । 'सुरो देवे सुरा चषकमद्ययोः ।" इति हैमः । **भोगीति** । भोगिनः सर्पाः । तैः युक्तमपि अनुपद्रवं उपद्रवरहितमिति विरोधः । पक्षे भोगिनः सुखिनः । 'भोगी भुजंगमे । वैयावृत्यकरे राज्ञि ग्रामण्यां नापितेऽपि च ।' इति हैमः ।

**तत्रेति** । तत्र तस्मिन् कुसुमपुरे । शृङ्गारशेखरो नाम राजा प्रतिवसतीति सम्बन्धः । तं विशिनष्टि—**सुरतेत्यादिना** । रभसः वेगः । 'रभसो वेगहर्षयोः ।' इति विश्वः । 'सुरतभराखिन्न' इति पाठान्तरम् । सीमन्तिन्यः स्त्रियः । रत्नताटङ्कानां रत्नखचितकर्णाभरणविशेषाणां मुद्राः चिह्नानि । 'ताटङ्कमुख' इति पाठान्तरम् । 'ताटङ्कः कर्णभूषणम् ।' इत्यजयः । **प्रचण्डेति** । प्रचण्डाः उद्धताः । प्रतिपक्षाः शत्रवः । केशपाशः केशसमूहः । **प्रशस्तेति** । प्रशस्तः श्रेष्ठः । केदारः क्षेत्रम् ।

कः, पार्थ इव सुभद्रान्वितः सभीमसेनश्च, कृष्ण इव सत्यभामोपेतः सबलश्च, श्रृङ्गारशेखरो नाम राजा प्रतिवसति। यो बलभित्, पावकः, धर्मराट्, निर्ऋतिः, प्रचेताः, सदा-

'केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः।' इति मेदिनी। **बहुधान्येति**। बहुधा नानाप्रकारेण। अन्येषां कार्याणि संपादयतीति अन्यकार्यसंपादकः परोपकारनिरत इत्यर्थः। पक्षे बहुविधानां धान्यानां व्रीहियवादीनां सप्तदशानां धान्यानां कार्यं फलरूपं कृत्यं संपादयतीति तथा। **पार्थः** अर्जुनः। **सुभद्रेति**। सुभद्राणि शोभनानि मङ्गलानि। यद्वा शोभनाः भद्राः गजविशेषाः श्रेष्ठाः साधवो वा। पक्षे सुभद्रा नाम कृष्णस्य भगिनी, या अर्जुनेन परिणीता। 'भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके। करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च। तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि। त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे।' इति मेदिनी। **सभीमेति**। भीमया भयंकरया सेनया सहितः। पक्षे भीमसेनः वृकोदरः। **सत्येति**। सत्यं यथार्थभाषणम्। भा दीप्तिः। मा लक्ष्मीः। उपेतः युक्तः। पक्षे सत्यभामा नाम कृष्णस्य प्रेयसी। **सबलश्चेति**। बलं सैन्यं शक्तिर्वा। पक्षे बलः बलरामः। 'बलं रूपे स्थामनि स्थौल्यसैन्ययोः। बोले बलस्तु बलिनि काके दैत्ये हलायुधे।' इति हैमः। **य इति**। यः श्रृङ्गारशेखरः। **बलेति**। बलं शत्रुसैन्यं भिनत्तीति तादृशः। पक्षे बलभित् इन्द्रः। 'बलारातिः शचीपतिः।' इत्यमरः। **पावकः** सदाचारः पवित्रयिता वा, पक्षे अग्निः। 'पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके। भल्लातके विडङ्गे च शोधयितृनरेऽपि च।' इति हैमः। **धर्मेति**। धर्मेण राजते इति धर्मराट् धर्मशीलः। धर्मराट्

गतिः, धनदः, शंकर इत्यष्टमूर्तिरप्यनष्टमूर्तिः ।

**सुराणां पातासौ स पुनरतिपुण्यैकहृदयो**
**ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ।**

---

यमश्च । 'धर्मराजः पितृपतिः' इत्यमरः । **निर्ऋतिरिति** । निर्ऋतिः निरुपद्रवः । 'निर्ऋतिर्निरुपद्रवे । अलक्ष्म्यां दिक्पतौ चापि' इति हैमः । यद्वा निर्गता ऋतिः स्पर्धा जुगुप्सा वा यस्मात्स तथा । सर्वत्र समवृत्तिरित्यर्थः । पक्षे निर्ऋतिर्नाम दिक्पालेष्वन्यतमः । 'ऋतिर्जुगुप्साकल्याणगतिस्पर्धासु' इति हैमः । 'ऋतिः दुःखम् । ऋतिर्गमनदुःखयोः । इत्यजयः ।' इति केचित् । **प्रचेताः** प्रकृष्टमनाः, वरुणश्च । **सदागतिः** सतां आगमनस्थानम्, वायुश्च । **धनदः** धनदाता, कुबेरश्च । **शंकरः** सुखकारी क्षेमकारो वा, शिवश्च । **इत्यष्टेति** । इति एवंरीत्या । अष्टौ मूर्तयः दिक्पालस्वरूपाणि यस्य स तथा । तादृशः सन्नपि, अनष्टमूर्तिः अष्टमूर्तिभिन्न इति विरोधः । पक्षे अनष्टा नाशं अप्राप्ता रम्या मूर्तिः यस्य स तथेति परिहारः । 'अष्टानां लोकपालानां वपुर्धारयते नृपः ।' इति मनुः ।

**सुराणामिति** । असौ इन्द्रः । सुराणां मद्यानाम् । पाता पानकर्ता । पिबतेः तृचि पातेति रूपम् । अत एव न लोकेति षष्ठीनिषेधो न । वस्तुतस्तु सुराणां देवानां पाता पालकः । पातेः तृच् । स पुनः शृङ्गारशेखरस्तु । अतिपुण्ये अतिशयितपुण्यकर्मण्येव हृदयं मनः यस्य स तथा । एवकारार्थकस्य एकशब्दस्य समासे परं प्रवेशः । अत्राधिकं तु श्रीकृष्णब्रह्मतन्त्रपरकालसंयमिसार्वभौमानुगृहीतायां हंससंदेशव्याख्यायां रसास्वादिन्यां द्रष्टव्यम् । 'अतिपुण्यं एकं हृदयं यस्येत्युत्कर्ष इन्द्रात् ।' इति शिवरामः । तस्य इन्द्रस्य । अस्थाने अनुचिते

करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेन्द्रं विजयते ॥
जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासु-
र्लक्षाप्तिर्मार्गणानामभवदरिबले सद्यशस्तेनलब्धम् ।

---

विषये । ग्रहः अभिनिवेशः । गुरुः अधिकः । तस्य आस्थाने सभायां ग्रहः सूर्यादिग्रहेष्वन्यतमः गुरुः बृहस्पतिः अस्तीति वास्तवार्थः । "युक्ते द्वे साम्प्रतं स्थाने" "आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।" "निर्बन्धोपरागार्कादयो ग्रहाः।" इत्यमरः । "गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुर्जरे चापि" इति हैमः । सः शृङ्गारशेखरः । उचितमार्गे न्याय्ये पथि । निरतः आसक्तः । तस्य इन्द्रस्य । करः हस्तः । प्रणयः याञ्चा अस्यास्तीति प्रणयी याचकः । तस्य भावः प्रणयिता याञ्चे-त्यर्थः । "प्रणयः प्रेमयाञ्चयोः ।" इति हैमः । शतकोटीनां अनेककोटि-धनानां विषये प्रणयितां याचकवृत्तिम् । वस्तुतस्तु शतकोटिः वज्रायुधम् । तत्र प्रणयितां स्नेहम् । अत्यर्थं नितराम् । वहति । सः राजा । सर्वस्वं सक-लमपि धनम् । तृणमिव तृणवदविगणय्येत्यर्थः । दाता दानशीलः । ददातेः तृन् । नलोकेति प्रतिषेधात् कर्मणि द्वितीया । अतः, सुरेन्द्रं देवेन्द्रम् । विजयते जयति । विपराभ्यां जेरित्यात्मनेपदम् । 'तृणमिव सुरेन्द्रं विज-यते' इति शिवरामस्य कस्य चिच्चान्वयस्तु न पुष्टः । श्लेषसंकीर्णं काव्यलिङ्गमलंकारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।' इति तल्लक्षणम् । 'विरोधाभासोऽलंकारः ।' इति शिवरामस्तु चिन्तनीयः ।

**जीवेति** । सः राजा । मृधभुवि युद्धभूमौ । "मृधमास्कन्दनं संख्यं समीकं साम्परायकम् ।" इत्यमरः । धनुषः चापस्य ।

**मुक्ता तेन क्षमेति त्वरितमरिबलैरुत्तमाङ्गैः प्रविष्टा**
**पञ्चत्वं द्वेषिसैन्यैर्गतमवनिपतिर्नाप संख्यान्तरं सः ॥**

---

जीवस्य प्राणानां आकृष्टिं आकर्षणम् । जीवायाः मौर्व्याः आकृष्टिं च । चक्रे । शत्रुः तस्य रिपुः । गताः असवः प्राणाः यस्य स गतासुः विगतप्राणः । आसीत् । 'जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु ।' इति मेदिनी । मार्गणानां याचकानाम्, बाणानां च । 'मार्गणस्तु शरेऽर्थिनि ।' इति हैमः । अरिबले शृङ्गारशेखरशत्रुसैन्ये । तस्मादित्यर्थः । लक्षस्य लक्षसंख्याकस्य धनस्य लक्ष्यस्य च आप्तिः प्राप्तिः । अभवत् । 'लक्षं व्याजशरव्ययोः । संख्यायामपि' इति हैमः । तेन राज्ञा । सत् यशः लक्षवितरणजन्या कीर्तिः । तद्यश इति पाठे तस्य अरिबलस्य यश इति तत् यश इति वा व्याख्येयम् । लब्धं प्राप्तम् । तेन राज्ञा । क्षमा भूमिः, क्षान्तिश्च । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । मुक्ता त्यक्ता । इति हेतोः । त्वरितं सत्वरम् । अरिबलैः शत्रुसैन्यैः । उत्तमाङ्गैः शिरोभिः । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । क्षमेत्यनुषज्यते । क्षमा भूमिः । प्रविष्टा । शत्रुसैन्यान्यनेन हतानि भूमौ न्यपतन्नित्यर्थः । द्वेषिसैन्यैः शत्रुबलैः । पञ्चत्वं तत्संख्या, मरणं च । गतं प्राप्तम् । सः-अवनिपतिः राजा । संख्यान्तरं अन्यां संख्याम्, अन्यत् युद्धं च । न आप न प्राप्तवान् । एकस्मिन्नेव युद्धे सर्वानपि रिपून् हतवानिति नास्ति युद्धान्तरावकाश इति वीर्यातिशय उक्तः । 'पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति ।' इति मेदिनी । 'संख्यमाहवे । संख्यैकादौ विचारे च' इति हैमः । असंगतिरलंकारः । 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ।' इति तल्लक्षणम् ।

यत्र राजनि राजनीतिचतुरे चतुरम्बुधिमेखलां शासति वसुमतीम्, पितृकार्येषु वृषोत्सर्गः, शशिनः कन्यातुलारोहणम्, योगेषु शूलव्याघातचिन्ता, दक्षिणवामकरणं दिङ्निश्च-

---

**यत्रेति** । राजनीतौ चतुरे कुशले । यत्र राजनि यस्मिन् शृङ्गारशेखरनृपतौ । **चतुरिति** । चत्वारः अम्बुधयः समुद्राः मेखला काञ्ची यस्यास्तां तथोक्ताम् । वसुमतीं भूमिम् । शासति परिपालयति सति । एवं परं एवमेव । व्यवस्थितं व्यवस्थाविशिष्टम् । आसीदिति शेषः । **पितृकार्येषु** पित्रुद्देश्यकक्रियासु । **वृषेति** । वृषस्य वृषभस्य उत्सर्गः मोचनम् । न तु जनेषु वृषस्य धर्मस्य उत्सर्गः त्यागः । 'एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः । प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति ।' इत्यग्निपुराणम् । अत्र सर्वत्र परिसंख्यालङ्कारः । प्रकृतेत्वार्थः । **शशिनः** चन्द्रस्य । **कन्येति** । कन्या तुला इति द्वौ राशी । तयोः आरोहणं संक्रमणम् । न तु राष्ट्रे कन्यानां परीक्षार्थं तुलारोहणं धटारोहः । कन्याविषये तुलारोहणमिति वा । तादृशो महानाभियोगो राष्ट्रे नास्तीति भावः। अत्र यद्वक्तव्यं तत्पूर्वमेवोक्तम् । **योगेषु** विष्कम्भादिषु सप्तविंशतिसंख्याकेषु विष्कम्भः प्रीतिरायुष्मानिति परिगणितेषु । **शूलेति** । शूलव्याघातौ योगविशेषौ तयोश्चिन्ता । न तु प्रजासु शूलव्याघातस्य शूलायुधारोपणेन व्यापादनस्य चिन्ता आलोचना । प्रसवेष्विति पाठस्तु पुनरुक्तिदूषितः । 'शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु' इति मेदिनी। **दक्षिणेति** । दिङ्निश्चयेषु दिशां निर्द्धारणेष्वेव, दक्षिणवामकरणं अस्या इयं दक्षिणा अस्या इयं वामेति विभागकरणम् । न तु प्रजासु राष्ट्रे वा दक्षिणानां पण्डितानां वामकरणं प्रतिकूलकार्याचरणम् । 'दक्षिणस्य

येषु, शरभेदो दधिषु, शृङ्खलाबन्धो वर्णग्रथनासु, उत्प्रेक्षाक्षे
काव्यालङ्कारेषु, लक्षदानच्युतिः सायकानाम्, क्रिपां सर्ववि

---

वामस्य च हस्तस्य पादस्य कर्णस्य वा करणं छेदनम् । कृञ् हिंसायाम
इति केचित् । 'दक्षिणवामकरणं अधरोत्तरीकरणम् ।' इति परे । 'द
णः सरले प्राज्ञे' इति भागुरिः । 'वामं सव्ये प्रतीपे च द्रविणे च
सुन्दरे ।' इति विश्वः । **शरेति** । शरस्य दध्यग्रस्य भेदः मथन
शरेण जलेन भेदः पूर्वावस्थातो व्यत्यास इति वा । पक्षे शरेण ब
भेदः विदारणम् । 'शरस्तु तेजने बाणे दध्यग्रे ना शरं जले ।' इति वि
'शरभेद इषुधिषु' इति पाठे तु 'शरभेदः बाणनानात्वम् ।
धिषु तूणीरेषु । ' इति व्याख्येयम् । 'भेदो द्वैधे विशेषे स्यादुप
विदारणे ।' इति विश्वः । **शृङ्खलेति** । शृङ्खलाबन्धो
अलङ्कारशास्त्रप्रसिद्धो वर्णावृत्तिरूपो रचनाविशेषः । पूर्वपादस्यान्ति
वर्णावुत्तरपादस्यादितः कृत्वा पद्यरचना शृङ्खलाबन्ध इत्यलंकारग्र
व्यक्तम् । तादृशः शृङ्खलाबन्धः वर्णग्रथनासु अक्षररचनास्वेव । न
प्रजानां शृङ्खलया निगलेन बन्धः बन्धनम् । 'शृङ्खला त्रिषु सं
विशेषे निगलेऽपि च ।' इत्यजयः । **उत्प्रेक्षेति** । उत्प्रेक्षा आक्षे
अलंकारविशेषौ । 'संभावना स्यादुत्प्रेक्षा' 'आक्षेपः स्वयमुक्तस्य प्र
षेधो विचारणात् ।' इति तयोर्लक्षणम् । **काव्यालंकाराः** का
श्रिता अलङ्काराः । पक्षे उत्प्रेक्षा अनवधानम् । 'उत्प्रेक्षानवधाने
काव्यालङ्करणेऽपि च ।' इति मेदिनी । 'उत्प्रेक्षा अनर्थाशङ्कि दीर्घ
नम् ।' इति केचित् । आक्षेपः भर्त्सनम् । 'आक्षेपः परिभर्त्सने । का
लङ्करणाकृष्टयोः' इति हैमः । **लक्षेति** । सायकानां बाणानामेव, लक्ष
शरव्यस्य दानात् खण्डनात् च्युतिः भ्रंशः । न तु प्रजानां लक्षस्य

शः, कोशसंकोचः कमलाकरेषु न जनेषु, जातिविहीनता मालासु न कुलेषु, शृङ्गारहानिः जरत्करिषु न जनेषु, दुर्वर्णयोगः कर्णिकादिषु न कामिनीषु, गान्धारविच्छेदो रागेषु न पौरवनितासु, मूर्च्छाधिगमो गानेषु न प्रजासु, खर्माभावो नीचसेवकेषु

---

संख्याकधनस्य दानास्य वितरणस्य च्युतिः । **क्विपामिति** । क्विपः प्रत्ययाः, येषां वेरपृक्तस्येति लोपेन कियताप्यंशेन न श्रवणम् । सर्वविनाशः सर्वावयवावच्छेदेन लोपः । पक्षे स्पष्टोऽर्थः । **कोशेति** । कोशानां कुड्मलानां दलानां वा संकोचः मुकुलीभावः । पक्षे कोशस्य धनसंचयस्य संकोचः न्यूनीभावः । 'कोशोऽस्त्री कुड्मले खड्गपिधाने दलवित्तयोः ।' इत्युत्पलः । इत आरभ्य शाब्दी परिसंख्या । **जातीति** । जातिः मालतीपुष्पम्, ब्राह्मणत्वादिजातिश्च । 'जातिश्छन्दासि सामान्ये मालत्यां गोत्रजन्मनोः ।' इति विश्वः । जातिहीनता शरदादिकालग्रथितमालास्वेव, न तु कुलेषु । सर्वेऽपि सत्कुलप्रसूता उत्तमजातयश्चेति भावः । **शृङ्गारेति** । शृङ्गारः गजमण्डनम्, शृङ्गाररसश्च । **जरन्तः** वृद्धाः । "शृङ्गारो गजमण्डने । सुरते रसभेदे च' इति हैमः । **दुर्वर्णेति** । दुर्वर्णं रजतम् । पक्षे दुर्वर्णाः परुषाक्षराणि, मूढा वा । 'दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः ।' इति मेदिनी । **कर्णिका** कर्णालंकारः । 'कर्णिका कर्णभूषणम् ।' इत्यमरः । कटकादिष्विति पाठान्तरम् । **गान्धारेति** । गान्धारः स्वरविशेषः । पक्षे गान्धारः सिन्दूरम् । सर्वा अपि पौरवनिताः सभर्तृका एवेति भावः । 'गान्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे ।' इति हैमः । 'गान्धारः रतिः । गान्धारो रागभेदे स्यान्न स्त्री गाने रतावपि । इति हरिः ।' इति केचित् । **मूर्च्छा** स्वरारोहावरोहक्रमः, संमोहश्च ।

न परिजनेषु, मलिनाम्बरत्वं निशासु न जनेषु, चलरागता गीतेषु न विदग्धेषु, वृषहानिः निधुवनलीलासु न पौरेषु, भङ्गुरत्वं रागविकृतिषु न चित्तेषु, अनङ्गता कामदेवे न परिजनेषु, मारागमो यौवनोदयेषु न प्रकृतिषु, द्विजाघातः सुरतेषु न प्र-

---

'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च ।' इति संगीतशास्त्रे। **खर्मेति**। खर्मः पौरुषम् । तस्य अभावो नीचसेवकेषु । तेषां भीरुत्वात् । न तु परिजनेषु खर्मस्य दुकूलस्य पौरुषस्य वा अभावः । 'खर्मः क्षौमे पौरुषे च' इति हैमः । 'खर्मः परम्पराशुद्धिः। खर्मः परम्पराशुद्धौ वस्त्रभेदेऽपि पौरुषे । इति धरणिः ।' इति शिवरामः । **अम्बरं** आकाशः, वस्त्रं च । **चलेति** । चलः कम्पिताख्यगमकस्वरविशिष्टः रागः येषां तेषां भावः चलरागता । पक्षे चलः अस्थिरः रागः अनुरागः येषां तेषां भावः । 'रागः स्याल्लोहितादिषु । गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे ।' इति हैमः । 'गमकस्वश्रुतिस्थानच्छायां श्रुत्यन्तराश्रयाम् । स्वरो यो मूर्च्छनामेति गमकः स इहोच्यते । कम्पितः स्फुरितो नीलो भिन्नः स्थविर एव च । आहतान्दोलितौ चेति गमकाः सप्त कीर्तिताः ।' इति संगीतदामोदरे । **विदग्धाः** रसिकाः । **वृषः** शुक्रम्, धर्मश्च । 'ज्येष्ठाम्बुधर्मशुक्रेषु स्मृतोऽसौ वृषभे वृषः ।' इत्युत्पलः । **भङ्गुरत्वं** वक्रगतिविशेषः, कौटिल्यं च । **रागविकृतयः** मालवादिरागविस्तराः। 'रागविकृतयः अनुरागविकाराः । भङ्गुरत्वं शृङ्गारचेष्टाविशेषः ।' इति केचित् । **अनङ्गता** अङ्गहीनता । उभयत्र तुल्यमिदम् । सर्वेऽपि परिजनाः संपूर्णाङ्गा एवेति भावः । यद्वा अङ्गं उपायः सहाय इत्यर्थः । अनङ्गता असाधनत्वम् । 'अङ्गं गात्रे प्रतीकोपा-

जासु, रसनाबन्धो रतिकलहेषु न दानानुमतिषु, अधररागता तरुणीषु न परिजनेषु, कर्तनमलकेषु न पुरन्ध्रीषु, निस्त्रिंशत्वमसिषु न मनस्सु, करवालनाशो योधेषु न जनपदेषु परमेवं व्यवास्थितम् ।

---

ययोः' इति मेदिनी । **मारः** मन्मथः । पक्षे शत्रुः विघ्नः मरणं वा । **आगमः** आगमनम् । यद्वा प्रकृतिपक्षे मारागमः आभिचारिकं शास्त्रम् । 'आगमस्त्वागतौ शास्त्रे' इति हैमः । **द्विजाः** दन्ताः, विप्राश्च । 'दन्तविप्राण्डजा द्विजाः ।' इत्यमरः । **रसनेति** । रसना मेखला । तया बन्धः रतिकलहेष्वेव । न तु दानस्य वितरणस्य अनुमतिषु संमतिषु । रसनायाः जिह्वायाः बन्धः अव्यापारः मौनमुद्रेत्यर्थः । 'रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोः ।' इत्यजयधरणी । **अधरेति** । अधरे ओष्ठे रागो रक्तिमा यासां तासां भावः अधररागता । पक्षे अधरः हीनः रागः प्रेमा येषां तेषां भावः । 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत् ।' इति मेदिनी । **कर्तनं** छेदनं परस्परवियोजनमित्यर्थः । पक्षे कर्तनं अनुरागविच्छेदनम् । खण्डनं वा । 'कर्तनं सूत्रोत्पादनम् । कर्तनं च द्वयोश्छेदे नारीणां सूत्रनिर्मितौ । इति विश्वः ।' इति शिवरामः । 'कर्तनं तालपत्रादिभिरासनादिनिर्माणम् ।' इति केचित् । **पुरन्ध्र्यः** कुटुम्बिन्यः । 'स्यात्तु कुटुम्बिनी । पुरन्ध्री' इत्यमरः । **निस्त्रिंशत्वमिति** । निर्गताः त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशाः । पक्षे निस्त्रिंशं क्रूरम् । 'निस्त्रिंशः क्रूरखड्गयोः ।' इत्यजयः । **करेति** । करवालेन खड्गेन नाशः मरणम् । पक्षे करस्य राजग्राह्यभागस्य कराणां हस्तानां वा वालानां केशानां वबयोरभेदात् बालानां शिशूनां वा नाशः । 'करवालः कृपाणवत् ।' इत्यमरः ।

तस्य चाभूदेवंविधस्य राज्ञो महिषी दिग्गजमदरेखेव आनन्दितालिगणा, पार्वतीव सुकुमारा चन्द्रलेखालंकृता च, वनराजिरिव नवमालिकोद्भासिता साचित्रका च, अप्सरस्संहतिरिव संहतसुकेशी समञ्जुघोषा च, सर्वान्तःपुरप्रधा-

---

**तस्य चेति** । एवं विधस्य तस्य राज्ञः । सर्वान्तःपुरप्रधानभूता अनङ्गवती नाम महिषी अभूदिति संबन्धः । 'कृताभिषेका महिषी' इत्यमरः । **आनन्दितेति** । आलिः सखी । पक्षे अलिः भृङ्गः । 'आलिः सखी वयस्या च' 'षट्पदभ्रमरालयः ।' इत्यमरः । **सुकुमारा** सौकुमार्ययुक्ता । पक्षे शोभनः कुमारः सुब्रह्मण्यः यस्यास्सा तथोक्ता । 'कुमारोऽश्वानुचारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे ।' इति हैमः । 'सुकुमारीं च बालां च' इति प्रयोगदर्शनात् सुकुमारशब्दस्य बह्वादित्वं कल्पनीयमिति प्रामाणिकाः । **चन्द्रलेखा** चन्द्रकला, नखक्षतविशेषश्च । 'ग्रीवायां स्तनपृष्ठे च वक्रो नखपदसंनिवेशोऽर्द्धचन्द्रकः । सर्वस्थानेषु नातिदीर्घा लेखा ।' इति वात्स्यायनीये । 'रुद्धाम्बरं शशिकलामलिखत्कराग्रैः ।' इति मङ्खकः । चन्द्रलेखा 'चन्द्रकलाकारः शिरसि धार्यमाणो भूषणविशेषः ।' इति कश्चित् । 'चन्द्रः स्वर्णम् । चन्द्रलेखः स्वर्णपट्टः ।' इति केचित् । **नवमालिका** नूतना माला, सप्तलाख्यो लताविशेषश्च । **चित्रकं** तिलकम् । पक्षे चित्रकाः वृक्षविशेषाः । 'चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु ।' इति मेदिनी । सचित्रकाननेति पाठे तु सचित्रकं आननं मुखं यस्यास्सा । पक्षे चित्रैः विचित्रैः काननैः सहितेति व्याख्येयम् । **संहतिः** समूहः । **संहतेति** । संहताः संयुक्ताः शोभनाः केशाः यस्यास्सा तथोक्ता ।

नभूता अनङ्गवती नाम । तयोश्च मध्यमोपान्ते वयसि वर्तमानयोः कथमपि दैववशात्रिभुवनविलोभनीयाकृतिः, पुलोमतनयेव आनन्दितसहस्रनेत्रा, मेरुगिरिमेखलेव सुजातरूपा, शरन्निशेव उल्लसत्तारका, सत्परिषदिव अच्छिद्रद्विजपङ्क्तिभूषिता,

---

**समञ्जुवति** । मञ्जुना मधुरेण घोषेण स्वरेण सहिता । पक्षे सुकेशीमञ्जुघोषे अप्सरसौ । **तयोश्चेति** । तयोः कथमपि दैववशात् वासवदत्ता नाम तनया अभूदिति संबन्धः । **मध्यमेति** । मध्यमस्य मध्यवयसः उपान्ते प्रान्ते । वयसि अवस्थाविशेषे । यौवनपरिणामदशायामित्यर्थः । 'वयस्तु त्रिविधं बालं मध्यं वृद्धमिति । तत्रोनषोडशवर्षा बालाः । षोडशसप्तत्योरन्तरे मध्यं वयः । तस्य विकल्पो वृद्धियौवनं संपूर्णता हानिरिति ।' इति सूत्रस्थाने सुश्रुतः । **विलोभनीया** स्पृहणीया । **पुलोमतनया** इन्द्राणी । 'पुलोमजा शचीन्द्राणी' इत्यमरः । **आनन्दितेति** । आनन्दितानि पश्यतां सहस्राणां नेत्राणि यया सा तादृशी । पक्षे सहस्रनेत्रः इन्द्रः । **मेखला** कटकप्रदेशः । 'मेखलाद्रिनितम्बे स्याद्रशनाखड्गबन्धयोः ।' इति हैमः । **सुजातेति** । सुजातं रूपं यस्यास्सा तथोक्ता । पक्षे शोभनं जातरूपं स्वर्णं यस्यां सा तथा । 'चामीकरं जातरूपं महारजतकाञ्चने ।' इत्यमरः । **तारका** कनीनिका, नक्षत्रं च । 'नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च ।' इति शाश्वतः । **सत्परिषत्** सज्जनसभा । **अच्छिद्रेति** । छिद्रं रन्ध्रम् । अच्छिद्राः विवररहिताः अविरला इत्यर्थः । द्विजाः दन्ताः । पक्षे छिद्रं दोषः । अच्छिद्राः निर्दोषाः । द्विजाः ब्राह्मणाः । 'छिद्रं विवररन्ध्रवत् । गर्ते

राक्षसकुललक्ष्मीरिव माल्यवत्सुकेशशोभिता तनयाभूद्वासवदत्ता नाम । अथ सा रावणभुजवन इव उल्लसितगोत्रे, विन्ध्याचल इव मदनालंकृते, पारावार इव संजातलावण्ये, नन्दनवन इव सदाकल्पतरुणाभिनन्दिते, पवन इव सुमनोहरे परिणाममुपयात्यपि यौवने परिणयपराङ्मुखी तस्थौ ।

---

दोषे' इति हैमः । **माल्येति** । माल्यवद्भिः मालासहितैः सुकेशैः शोभनकुन्तलैः शोभिता । पक्षे माल्यवान् सुकेशश्चेति द्वौ राक्षसौ । **अथेति** । सा वासवदत्ता । **भुजवनं** बाहुसमूहः । **उल्लसितेति** । उल्लसितं शोभितं गोत्रं कुलं येन तस्मिन् तथोक्ते । पक्षे उल्लसितः ऊर्ध्वोत्क्षिप्तः गोत्रः कैलासपर्वतः येन तस्मिन् तादृशि । **मदनः** मन्मथः, वृक्षविशेषश्च । **पारावारः** समुद्रः । 'पारावारः सरित्पतिः ।' इत्यमरः । **लावण्यं** मुक्ताफलेषुच्छाया इति लक्षितः कान्तिविशेषः, लवणभावश्च । **सदाकल्पेति** । सन् श्रेष्ठः आकल्पः वेषः येषां ते सदाकल्पाः । तादृशैः तरुणैः युवभिः अभिनन्दिते प्रशंसिते । पक्षे सदा सर्वदा । कल्पतरुणा कल्पवृक्षेण । अभिनन्दिते । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । **सुमन इति** । मनो हरतीति मनोहरं रम्यम् । सुमनोहरे अतिरम्ये । पक्षे सुमनसः पुष्पाणि हरतीति तस्मिन् तादृशे । **परिणामः** परिपाकः संपूर्णतेत्यर्थः । 'चरमावस्था' इति केचित् । **परिणयेति** । परिणये विवाहे पराङ्मुखी निरभिलाषा । "परिणयोद्वाहोपयामाः पाणिपीडनम् ।" इत्यमरः । तस्थौ स्थितवती ।

अथैकदा विजृम्भमाणसहकारकोरकनिकुरुम्बनिपतितमधुकरमालामदकलझंकारहुंकारजनितपथिकजनसंज्वरः, कोमलमलयमारुतोद्भूतचूतप्रसवरसास्वादकषायकण्ठकलकण्ठकु-

---

**अथेति** । अथ अनन्तरम् । एकदा कदाचित् । एतादृशः वसन्तकालः आजगामेति संबन्धः । विजृम्भमाणेत्यादीनि वसन्तकालविशेषणानि । विजृम्भमाणानां विकसतां सहकारकोरकाणां चूतविशेषकलिकानां निकुरुम्बेषु समूहेषु निपतितानां सौरभलोभसंभ्रमेण समापत्य निलीनानां मधुकरमालानां भ्रमरपङ्क्तीनां यः मदकलः मदेनाव्यक्तमधुरः झंकारः झं इति शब्दः स एव हुङ्कारः तर्जनशब्दः तेन जनितः उत्पादितः पथिकजनानां पान्थानां संज्वरः संतापः यस्मिन् स तथोक्तः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।' 'कलिका कोरकः पुमान् ।' 'निकुरुम्बं कदम्बकम् ।' 'संतापः संज्वरः समौ ।' इत्यमरः । पथिकशब्दे पन्थानं गच्छतीत्यर्थे 'पथः ष्कन्' इति ष्कन्प्रत्ययः । **कोमलेति** । कोमलेन मृदुना मलयमारुतेन दक्षिणानिलेन उद्भूतानां कम्पितानां चूतप्रसवानां आम्रपुष्पाणां रसस्य मकरन्दस्य आस्वादः अनुभवः तत्पानमित्यर्थः तेन कषायः मधुरः कण्ठः कण्ठध्वनिः येषां तेषां कलकण्ठानां पिकानां कुहूरुतेन कुहूध्वनिना भरितानि पूर्णानि सकलानां समस्तानां दिशां मुखानि अग्रभागाः यस्मिन् स तथोक्तः । चूतानां प्रसवरसः मकरन्द इति वा । 'कुहकुहारावभरित' इति पाठान्तरम् । 'कोमलं मृदुले जले ।' इति मेदिनी । 'कषायो मधुरे स्निग्धे तिक्तेऽपि सुरभिण्यपि ।' इति वैजयन्ती । 'कण्ठो वाचकशब्दे स्यात्संनिधाने गले ध्वनौ' 'कलकण्ठस्तु कोकिले । हंसे पारावते चापि त्रिषु

हूरुतभरितसकलदिङ्मुखः, विकचकमलषण्डनिलीयमानमत्त-कलहंसकुलकोलाहलमुखरितसकलसरोवरः, परभृतखरनख-त्रोटिकोटिपाटितपाटलीकुड्मलविवरविनिर्गतमधुरमधुधारा - सारशीकरनिकरसमालब्धदक्षिणसमीरणमारवारणव्रणितपथि-

---

त्वेष कलस्वरे ।' 'कुहूः स्त्री कोकिलालापे विनष्टेन्दुतिथावपि ।' इति नानार्थरत्नमाला । 'कषायकण्ठः सुरभिकण्ठः' इति कश्चित् । 'चूताङ्कुरास्वादकषायकण्ठः' इति कुमारसंभवपद्यव्याख्यानावसरे 'कषायकण्ठः रक्तकण्ठः । सुरभावपथे रक्ते कषाय इति केशवः ।' इति मल्लिनाथः । **विकचेति** । विकचानां विकसितानां कमलानां तामरसपुष्पाणां षण्डेषु समूहेषु निलीयमानानां तिष्ठतां मत्तानां मदवतां कलहंसानां हंसविशेषाणां कुलस्य समूहस्य कोलाहलेन कलकलेन मुखरिताः वाचालिताः सकलाः सरोवराः श्रेष्ठानि सरांसि यस्मिन् स तादृशः । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशाविकचस्फुटाः । फुल्लश्चैते विकसिते' 'अब्जादिकदम्बे षण्डमस्त्रियाम् ।' इत्यमरः । निलीयमानेति, लीङ् श्लेषणे इति दैवादिकाच्छानचि रूपम् । 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे ।' इति मेदिनी । **परभृतेति** । परभृतानां कोकिलानां खराः तीक्ष्णाः ये नखराः नखाः त्रोटिः चञ्चुश्च तेषां कोट्या अग्रेण पाटितानां विदारितानां पाटलीकुड्मलानां लोध्रविशेषमुकुलानां विवरात् रन्ध्रात् विनिर्गतैः बहिः प्रसृतैः मधुराणां मधुधारासाराणां मकरन्दविसराणां शीकरनिकरैः कणसमूहैः समालब्धः लिप्तः यः दक्षिणसमीरणः मलयानिल एव मारवारणः मन्मथगजः तेन व्रणितं संजातव्रणं परिणमनेन विशकलितमिति यावत् , तादृशं पथिकवधूनां पान्थानां स्त्रीणां हृदयं मानसमेव तटं

कवधूहृदयतटः, मधुमदमुदितकामिनीमुखकमलगण्डूषशीधु-सेकपुलकितवकुलः, मदनरसपरवशविलासिनीतुलाकोटिवि-कटचटुलचरणारविन्दमन्दप्रहारहृष्टकङ्केलितरुशतः, प्रतिदि-

---

तीरं यस्मिन् स तथोक्तः । गजस्य मण्डनतया कुङ्कुमादिलेपः प्रसिद्धः । 'समीरणमारबाण' इति, 'पथिकवधूहृदयः' इति च पाठान्तरम् । बाणाग्रेऽपि विषादिलेपनं प्रसिद्धमेव । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि ।' 'चञ्चुस्त्रोटिरुभे स्त्रियौ' 'समालम्भो विलेपनम् ।' 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ।' इत्यमरः । **मधुमदेति** । मधुमदेन मद्यमदेन मुदितानां संतुष्टानां कामिनीनां स्त्रीणां मुखकमलगण्डूषशीधूनां मुखारविन्दपूर्तिपर्याप्तानामासवानां सेकेन सेचनेन पुलकिताः संजातपुलकाः कोरकिता इत्यर्थः तादृशाः वकुलाः केसरवृक्षाः यस्मिन् स तथोक्तः । मुखपूर्तिपरस्यापि गण्डूषशब्दस्य करिकलभादाविव 'विशिष्टवाचकानाम्' इति न्यायेन विशेष्यभूतपूर्तिमात्रपरत्वं प्रकृते । 'उन्नतनाभिस्तु गण्डूषा नापि मुखपूर्तिः ।' इति बोपालितः । 'गण्डूषो मुखपूर्तीभपुष्करप्रसृताञ्जलिः ।' इति रुद्रश्च । 'मैरेयमासवः शीधुः' इत्यमरः । माधवस्तु 'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम् ।' इत्याह । 'शोकं जहाति वकुलो मुखशीधुसिक्तः ।' इति दोहदमुच्यते । **मदनरसेति** । मदनरसेन कामोपभोगेन परवशाः विवशाः कामोपभोगस्पृहया नितरामुत्ताम्यन्त्य इत्यर्थः, तादृश्यः याः विलासिन्यः तरुण्यः तासां यानि तुलाकोटिभिः नूपुरैः विकटानि सुन्दराणि चटुलानि चञ्चलानि आघाताय प्रवृत्तानीत्यर्थः चरणारविन्दानि पादपद्मानि तेषां तैर्वा ये मन्दाः सुकुमाराः प्रहाराः

शमश्लीलप्रायवैहासिकगीयमानगीतश्रवणोत्सुकषिङ्गजनसमार-

आघाताः तैः हृष्टानि संतुष्टानि मुकुलितानीत्यर्थः तादृशानि कङ्केलितरूणां अशोकवृक्षाणां शतानि यस्मिन् स तथोक्तः। अत्र 'मदनरय' इत्यपपाठः। 'विकटं विशालम्' इति कश्चित्। शिवरामस्तु भयंकरार्थकत्वमभिसंधाय 'विकटं विरहिणाम्' इत्याह। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्।' इत्यमरः। 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः ।' इति विश्वः। 'स्त्रीप्रियो वञ्जुलोऽशोकः कङ्केलिः कर्णपूरकः। इति बाणः। 'सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् ।' **प्रतिदिशमिति**। प्रतिदिशं सर्वास्वपि दिक्षु । वीप्सायामव्ययीभावः। दिक्छब्दस्य शरदादिपाठात् 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्। प्रतिदिनमिति पाठान्तरम् । अश्लीलप्रायाः ग्राम्योक्तिभूयिष्ठाः ये वैहासिकाः नर्मपरा विदूषकाः तैः गीयमानानां गीतानां गीतीनां श्रवणे उत्सुकाः आसक्ताः ये षिङ्गजनाः विटजनाः तैः समारब्धस्य चर्चरीतालस्य चर्चर्याख्यतालविशेषस्य आकर्णनेन श्रवणेन मुह्यन्तः मूर्च्छन्तः इति-कर्तव्यतामूढा वा अनेके पथिकाः यस्मिन् स तथोक्तः । अश्लीलप्रायेति गीतविशेषणं वा । 'चर्चरीगीताकर्णनमाद्यदनेक' इति पाठान्तरम् । 'अश्लीलः धूर्तः' इति कश्चित् । 'ग्राम्यमश्लीलम्' इत्यमरः। 'प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः।' इति हैमः । 'वैहासिको नर्मपरो लीलाजीवश्च गद्यते।' इति वैजयन्ती । वैलासिकेति पाठान्तरम् । 'ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम्।' इति नैषधपद्यव्याख्याने 'विहासे नियुक्तः, स प्रयोजनम्, शिल्पं वास्येति 'तत्र नियुक्तः' इति, 'शिल्पम्' इति वा ठक्। 'प्रयोजनम्' इति वा ठञ्।' इति नारायणः । 'षिङ्गः पल्लवको विटः।' इत्यमरः। 'तालः कालक्रियामानम्' इत्यमर-

ब्धचर्चरीतालाकर्णनमुह्यदनेकपथिकः, दुर्जन इव सतामरसः, दुष्कुल इव जातिहीनः, रावण इवापीतलोहितपला-

---

व्याख्यानावसरे 'कालस्य एकद्वित्रिमात्राद्युच्चारणनियमितस्य क्रियायाः परिस्पन्दात्मिकायाः परिच्छेदहेतुस्तालः।' इति भरतः। 'चञ्चत्पुटश्चाचपुटः षट्पितापुत्रकस्तथा' इत्यारभ्य परिगणितेषु षष्टौ तालेषु 'दीपको मल्लिकामोदो गजलीलश्च चर्चरी' इति परिगणितः पञ्चविंशस्तालश्चर्चरी । 'लचतुष्कविरामान्तं गजलीले प्रकीर्तितम्। अष्टकृत्वस्तु चर्चर्यां विरामान्ते द्रुतौ लघुः।' इति तल्लक्षणं संगीतशास्त्रे। चर्चरीति गीतभेदोऽपि। तथा च रुद्रः। चर्चरी गीतभेदे च केशभित्करशब्दयोः।' इति । 'द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि। प्रियमण्ठकरासकेन वा द्रुतमध्या प्रथमा हि चर्चरी। सोमो वा प्रतिमण्ठकः। लघ्वादितालो लोकेऽसौ रास इत्यभिधीयते।' इति रङ्गनाथः। 'पुरः पौराणामुच्चरति चर्चरीध्वनिः' इति रत्नावल्याम्। 'चर्चरी वाद्यविशेषः। चर्चरी करवादनमिति कोशः' इति कश्चित्। **सतामिति**। तामरसैः सह वर्तत इति सतामरसः। पक्षे सतां अरस इति छेदः। सतां साधूनाम् । अरसः अरागः अप्रिय इत्यर्थः। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः।' इत्यमरः। **दुष्कुल इवेति**। दुष्टं कुलं यस्य सः हीनकुलजात इत्यर्थः। **जातीति**। जातिभिः मालतीपुष्पैः हीनः शून्यः। मालतीकुसुमं ग्रीष्मे वर्ण्यत इति कविसमयः। पक्षे जातिः कुलं जन्म वा। 'जातिश्छन्दो जन्म गोत्रं स्वव्याहतिकरोत्तरम्। सामान्यं मालती च' इति नानार्थरत्नमाला। दुर्जनपक्षे 'जातिः सामान्यम्' इति शिवरामः। **रावण इति** । 'विश्रवसोऽपत्यं पुमान् रावण इति विग्रहः। तस्यापत्यमित्यणि कृते विश्रवसो विश्रवणरवणाविति

शशतसेवितः, महाशृङ्गारीव सुगन्धवहः, सुराजेव समृद्धकुवलयः, वास्तुक इव विवर्धितसुखाशः ,सत्कविकाव्यबन्ध इवा-

---

प्रकृते रवणादेशः । पौराणिकास्तु रावयतीति व्युत्पादयन्ति । तदुक्तमुत्तरकाण्डे । यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्नावीरो भविष्यसि । इति । रौतेः कर्तरि ण्यन्ताल्ल्युट् ।' इति मल्लिनाथः । **आपीतेति** । आपीतानां ईषद्गौरवर्णानां लोहितानां रक्तवर्णानां च पलाशानां पत्राणां पलाशवृक्षाणां वा शतैः सेवितः तत्संपूर्ण इत्यर्थः । पक्षे पलं मांसं अश्नन्तीति पलाशाः राक्षसाः । आपीतं सम्यक् पीतं लोहितं रक्तं यैस्ते आपीतलोहिताः, तादृशानां पलाशानां शतैः सेवितः पूजितः । 'पीतो गौरो हरिद्राभः' इत्यमरः । 'पीतो वर्णनिपीतयोः ।' लोहितो मङ्गले नदे । वर्णभेदे लोहितं तु कुङ्कुमे रक्तचन्दने । गोशीर्षे रुधिरे युद्धे' इति हैमः । 'पलाशं छदने मतम् । शटीकिंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु ।' इति मेदिनी । 'पलमुन्मानमांसयोः ।' इति हैमः । **सुगन्धेति** । शोभनः गन्धवहः मलयमारुतः यस्य स तथोक्तः । पक्षे शोभनस्य गन्धस्य चन्दनादेः वहः धारकः । 'गन्धवहगन्धवाहानिलाशुगाः ।' इत्यमरः । **सुराजेति** । शोभनः प्रशस्तः राजा सुराजा । 'न पूजनात्' इति निषेधात् 'राजाहः...' इति न टच् । **समृद्धेति** । समृद्धानि संपूर्णानि कुवलयानि उत्पलानि यस्मिन् सः । पक्षे समृद्धं संपन्नं कुवलयं भूमण्डलं यस्य स तादृशः । 'स्यादुत्पलं कुवलयम्' 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । 'वलयोऽस्त्री कण्ठरोगे कङ्कणे मण्डलेऽपि च ।' इति शाश्वतः । **वास्तुक इवेति** । वास्तुः नगरम् , तत्र भवः वास्तुकः नागरकः विदग्ध इत्यर्थः । 'वास्तुरस्त्री गृहं सीमा सुरङ्गा गृहभूः पुरी ।' इति रत्नमाला । अध्यात्मादित्वाठ्ठञि 'इसुसुक्तान्तात्कः' इति तस्य कादेशः ।

नवबद्धतुहिनिपातः, सत्पुरुष इव दोषानुबन्धरहितः, कैवर्त

---

वास्ताविक इति पाठान्तरम्। तत्र, वास्तविकः वस्तुनिर्माणपरः । 'वस्तुज्ञ-स्याद्वास्तविकः' इत्यजय इति साम्प्रदायिकाः । वास्ताविकः वास्तुनिर्माण-परः। 'वास्तुज्ञः स्यद्वास्तविकः' इति वैजयन्तीति केचित्। **विवर्द्धितेति**। विवर्द्धिता सुखाशा सुखाभिलाषो येन स तथोक्तः। उभयत्र तुल्यमिदम्। यद्वा वास्तुकपक्षे सुखाशः सुखभोजनमिति, वसन्तकालपक्षे विवर्द्धिताः हिमावरणादिविनिर्गमेन प्रसृता इव लक्ष्यमाणाः शोभनं खं आकाशं शोभनाः आशाः दिशः येन स इति च व्याख्येयम् । 'अनन्तं सुरवर्त्म खम्।' इत्यमरः । 'सुखाशो वरुणे राजतिनिशे सुखभोजने ।' इति मेदिनी । शिवरामस्तु 'वास्तविक इव तात्विकपदार्थ इव । विवर्द्धिता सुखस्याशा येन । पक्षे विशेषेण शरदपेक्षया वर्द्धितः सुखाशो राजति-मिषः येन । केचित्तु वास्तविको वाटिकापाल इत्याहुः । सुखाशो राज-तिमिषे (तिनिशे) शोभनाशाप्रचेतसोरिति विश्वः।' इति व्याचष्टे । **सत्कवीति**। सत्कवेः महाकवेः काव्यप्रबन्धः काव्यसन्दर्भः। सत्पदं प्रबन्धान्वयि वा। 'अदोषौ स गुणौ सालंकारौ शब्दार्थौ काव्यम्' इति प्राञ्चः। 'वाक्यं रसात्मकं काव्यम्' इत्यर्वाचीनाः। 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्' इति नव्याः। **अनवबद्धेति**। अनवबद्धः असंलग्नः अस्थित इत्यर्थः, तादृशः तुहिनी तुहिनवान् तुहिनसंबन्धी पातः पतनं, तुहिनिनः तुहिनवतः शिशिरस्य वायोः पातः प्रसरणं वा यस्मिन् स तथोक्तः। अवबद्धतुहिनिपातो न भवतीति वा विग्रहः। पक्षे अनव-बद्धौ अप्रयुक्तौ तु, हि, इत्याकारकौ पादपूरणार्थकौ निपातौ यस्मिन् स तथोक्तः, न खलु महाकविप्रबन्धेषु पादपूरणमात्रप्रयोजनान्यव्य-यानि प्रयुज्यन्त इति भावः । तुहीत्येतौ पादपूरणार्थकानां निपा-

इव बद्धराजीवोत्पलसालः, समृद्धकासारशकुनिसार्थ इव नि-

---

तान्तराणामुपलक्षणे । 'तु पादपूरणे' 'हि पादपूरणे' इति मेदिनी । अनवबद्धतुहिन इति पाठमभ्युपगम्य 'प्रबन्धे तु, हि, न, इत्येते न बद्धाः प्रयुक्ताः' इति कश्चित् । 'अबद्धानि अप्रयुक्तानि तु, हि, न, अव्ययानि यत्र' इति शिवरामः । अत्र तुह्योः पादपूरणार्थकत्वस्याप्यभिधानात्तन्मात्रप्रयोजकतया तयोरन्येषां च तादृशानां निपातानां सत्कविकाव्येषु भूयसाऽप्रयोगो युक्त एव । निषेधार्थकस्य नञो नशब्दस्य वा पादपूरणार्थकत्वस्यानभिधानात्तस्य तुहिसमानयोगक्षेमत्वं कथमिति चिन्त्यम् । निषेधस्यापि भङ्गयन्तरेण व्यञ्जनमेव न्याय्यम्, न तु शब्दप्रयोगेण वाच्यतापुरस्कारेणेति तस्याप्रयोगो भूयसा संभवतीति वा कथंचित्स्थितस्य गतिः कल्पनीया । **दोषेति** । दोषा रात्रेः अनुबन्धेन अनुवृत्त्या दैर्घ्येणेत्यर्थः रहितः हीनः, वसन्तेऽह्नोऽधिकमानत्वात् । पक्षे दोषाणां अनुबन्धः संबन्धः उत्पादो वा तेन रहितः । 'दोषोत्पादेऽनुबन्धः स्यात्प्रकृतस्यानुवर्तने' इति रत्नमाला । **कैवर्त इवेति** । कैवर्तः जालिकः । 'कैवर्ते दाशधीवरौ ।' इत्यमरः । **बद्धेति** । बद्धानि प्राप्तानि राजीवानि पद्मानि उत्पलानि कुवलयानि चेत्येवं सालानि पुष्पाणि सालानि अन्यानि पुष्पाणि वा येन स तथोक्तः । पक्षे बद्धाः जालेन गृहीताः राजीवोत्पलसालाः तदाख्या मीनविशेषाः येन स तथोक्तः । 'स्यादुत्पलं कुवलयम्' 'राजीवपुष्कराम्भोरुहाणि च ।' इत्यमरः । 'उत्पलः शकुलः शालो राजीवो मद्गुरस्तिमिः ।' इति वैजयन्ती । रोहितो मद्गुर इत्यमरव्याख्यानावसरे 'कैवर्त इव बद्धराजीवोत्पलसालो वसन्तकाल इति वासवदत्ताश्लेषाद्दन्त्यादिश्च (शालः) कैवर्तपक्षे सालो मत्स्यभेदः । वसन्तपक्षे सालं पुष्पम् ।

न्दितमरुवकः, शक्र इवेन्द्राणीरुचिरः, महावीर इवाधरीकृत-

---

सालं पुष्पे क्लीबं वृक्षे तु पुमान् ।' इति सुधा । शिवरामस्तु 'शाला वृक्षाः। शालः पादपमात्रे स्यात्प्राकारे शङ्कुकद्रुमे । इति विश्वप्रकाशः' इत्याह । 'जालः' इति पाठान्तरम् । तदा वसन्तपक्षे राजीवोत्पलानां पद्मकुवलयानां जालं समूहः बद्धं येन स तादृशः । कैवर्तपक्षे बद्धौ राजीवोत्पलौ मत्स्यविशेषौ येन तत् । तादृशं जालं आनायः यस्य स तथोक्त इति व्याख्येयम् । 'जालं बृन्दगवाक्षयोः । क्षारकानायदम्भेषु नीपे ना स्त्री तु घोषके ।' इति रभसः । **समृद्धेति** । समृद्धे जलसंपूर्णे कासारे सरसि विद्यमानानां शकुनीनां पक्षिणां सार्थः समूहः । 'कासारः सरसी सरः ।' शकुन्तिपक्षिशकुनि ...' इत्यमरः । 'सार्थो वणिक्समूहे स्यादपि संघातमात्रके ।' इति मेदिनी । **निन्दितेति** । निन्दितः धिक्कृतः निरस्त इत्यर्थः, तादृशः मरुवकः सुगन्ध्योषधिविशेषः येन स तादृशः । शिशिरर्त्वौचित्यनिरूपणावसरे 'मरुवककुन्देष्वेव पुष्पास्थितिः' इति मरुवकस्य शैशिरिकत्वं वाग्भट्टः प्राह । पक्षे निन्दिताः परिहसिताः मरौ निर्जलप्रदेशे विद्यमानाः बकाः कह्वाः येन स तथोक्तः। वबयोरभेदः। 'भवेन्मरुवकः पुष्पभिच्छल्यद्रुफाणिज्जके । ' इति मेदिनी । 'समानौ मरुधन्वानौ' 'अथ बकः कह्वः' इत्यमरः । आनन्दितमरुवक इति पाठं स्वीकृत्य 'मरुवकः सुगन्धौषधिविशेषः । पक्षे मरुदेशबकः ' इति परं कश्चिद्विलिखति । एवं सति कस्य कुत्र कथमन्वयः, कथं च सांगत्यमिति स एव वेद । **शक्रः** इन्द्रः । **इन्द्राणीति** । इन्द्राण्या सिन्दुवारेण रुचिरः मनोहरः । पक्षे इन्द्राणी शची, तया रुचिरः; तस्याः रुचिं अभिलाषं राति ददातीति तादृश इति वा । 'इन्द्राणी करणे स्त्रीणां पौलोमीसिन्दुवारयोः ।' इति मेदिनी । 'इन्द्रवरुण...' इति सूत्रेण इन्द्रस्य स्त्रीत्यर्थे ङीष्

दमनकः, षिद्ग इवाम्लानसुभगो वसन्तकाल आजगाम ॥

अतिदूरप्रवृद्धेन मधुना जगति को वा न विक्रियते, यद-

---

आनुगागमश्च । **अधरीकृतेति** । अधरीकृतः तिरस्कृतः निराकृत इत्यर्थः, तादृशः दमनः सुगन्धिलताविशेषः पुष्पविशेषो वा येन स तथोक्तः । पक्षे अधरीकृताः तिरस्कृताः दमनाः प्रतिवीराः येन स तथोक्तः । यद्वा न विद्यते धरा भूमिः येषां ते अधराः भूमेः परलोकं गता इत्यर्थः, तादृशाः कृताः दमनाः शत्रवः येन स तथोक्तः । 'दमनो वीरपुष्पयोः ।' इति हैमः । 'दमनौ शत्रुमूलौ च' इत्यजयः । मदनक इति पाठे, मदनकः लताविशेषः । पक्षे मदनः शत्रुः । 'मदनौ शत्रुकन्दर्पौ' इति हरिरिति व्याख्येयम् । यद्यपि काव्यानुशासने वसन्ततौ वर्णनीयेषु दमनकोऽपि परिगणितः । अत एव 'अतिक्रान्तदमनकाय' इत्यत्र पूर्वं 'अतिक्रान्ताः भूतले अत्यन्तं व्याप्ताः प्रभूता इत्यर्थः' इत्येवं व्याख्यातमस्माभिः । तथापीदं पक्षान्तराभिप्रायेण नेयम् । अत एव तत्र 'अतिक्रान्तो दमनकः पुष्पविशेषो येन । शिशिरजत्वात्तस्यातिक्रम इति भावः ।' इत्येवं शिवरामेण व्याख्यातम् । प्रकृतस्थले तु 'वसन्तप्रकरण एव दमनकश्लेषवर्णनान्महावीर इवेति प्रक्षिप्तः पाठः ।' इति शिवरामीये दृश्यते । **षिद्गः** विटः । **अम्लानेति** । अम्लानैः महासहाभिः सुभगः मनोहरः । पक्षे अम्लानः नित्यतुष्टः सुभगः मनोरमश्च । यद्वा आम्लानेति छेदः । आम्लानः किंचिदिव कृशोऽपि सुभगः सुन्दरः । इदमेव हि रोगान्मदनतापस्यान्तरम्, यत्कार्श्यादिष्वपि कान्तेरवियोगो नाम । स्पष्टं चैवं वर्णनं शाकुन्तलादिषु । एतादृशः वसन्तकालः । आजगाम आगतः ।

**अतिदूरेति** । अतिदूरप्रवृद्धेन अत्यन्तं वृद्धियुक्तेन । मधुना वसन्ते-

तिमुक्तको मुनिरपि विचकास । कुसुमशरस्य नवचूतप्रसवशरमूले निलीयमाना मधुकरावलिर्नामाक्षरपङ्क्तिरिव रेजे ।

---

न, मद्येन च तत्पानेनेत्यर्थः । 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे' इति विश्वः । **विक्रियते** विकारं स्वरूपान्यथाभावं प्राप्नोति । शुद्धस्यान्तर्भावितण्यर्थकत्वमभ्युपगम्य विक्रियत इत्यत्र कर्मकर्तरि लकार उपपादनीय इति 'यूयवयौ जसि' इति सूत्रस्थकौमुदीव्याख्यानावसरे कृष्णभट्टः । 'कर्मणि लट्' इति शिवरामस्तु चिन्त्यः । विकरोतेरकर्मकत्वात् । अत एव 'अकर्मकाच्च' इति सूत्रस्य 'छात्रा विकुर्वते' इत्युदाहरणं प्रदर्शितम्, व्याख्यातं च 'विकारं लभन्ते' इति कौमुद्यादिषु । ण्यर्थान्तर्भावे तु कर्मकर्तरि लकार इत्येव स्वरसवाहि । **यदिति** । अतिमुक्तः अत्यन्तं मुक्तिमापन्नः, मुक्तान्सर्वानप्यतिक्रान्तो वा । **मुनिः** ऋषिः, जीवन्मुक्तोऽपीत्यर्थः । विचकास विषयोपभोगौत्सुक्यरूपं मनसो विकासं प्राप्तः । अपिः प्रकृतिवैरूप्यं द्योतयति । वास्तवार्थस्तु, अतिमुक्तः वासन्ती । मुनिः अगस्त्यवृक्षश्च । अपिः समुच्चये । विचकास विकसति स्म । 'अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च ।' 'मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने ।' इति मेदिनी । श्लेषसंकीर्णोऽर्थान्तरन्यासः । काव्यार्थापत्तिश्च । 'कैमुत्येनार्थसंपत्तिः काव्यार्थापत्तिरिष्यते' इति तल्लक्षणम् । **कुसुमेति** । प्रसवः पुष्पम् । 'प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च ।' इति मेदिनी । **निलीयमाना** संलगन्ती । निलीयमानेति निपूर्वाद्दैवादिकात् 'लीङ् श्लेषणे' इत्यस्मात्कर्तरि शानच् । निलीनेति पाठान्तरम् । **मधुकरावलिः** भ्रमरपङ्क्तिः । **नामाक्षरपङ्क्तिः**

वृन्तविनिर्गतविकचविचिकिलकलिकाविवरे मञ्जु गुञ्जन्मधुकरो मकरकेतोस्त्रिभुवनविजयप्रयाणशङ्खध्वनिमिव चकार ।

---

स्वामिभूतमन्मथनामधेयप्रतिपादकानां वर्णानां राजिः । बाणेषु तत्तन्नामलेखनं प्रसिद्धम् । तथा च 'स्वनामचिह्नं निचखान सायकम् ।' इति रघुः । 'सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे । निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ।' इति कुमारसंभवः । 'यन्त्रणेव रेजे' इति पाठं स्वीकृत्य 'शराणां पत्ररचना यन्त्रणा परिकीर्तिता, इति हारावली । यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च, इति विश्वप्रकाशः ।' इति शिवरामः । उत्प्रेक्षा । **वृन्तेति** । वृन्तेभ्यः बन्धनेभ्यः विनिर्गताः उपरि प्रसृताः विकचाः ईषद्विकसिताश्च याः विचिकिलकलिकाः मल्लीविशेषकोरकाः तासां विवरे विकसनरन्ध्रे । 'वृन्तं प्रसवबन्धम् ।' इत्यमरः । 'भवेद्विचिकिलो मल्लीप्रभेदे मदने पुमान्' इति मेदिनी । मञ्जु मनोहरं यथा तथा । **गुञ्जन्** अव्यक्तं शब्दायमानः । गुजि अव्यक्ते शब्दे । **मधुकरः** भ्रमरः मद्यपायी च । 'कथमेकेषां दुष्टमधुकराणां सकाशात्परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि ।' इति नागानन्दम् । अत्रेदमवधेयम् । विचिकिलकलिका हि शङ्खसदृशी । शङ्खश्च मूलेन ध्मायत इति प्रसिद्धम् । भृङ्गश्च कलिकोपरि भ्राम्यंस्तित्रन्गुञ्जतीति नेयमुत्प्रेक्षा समीचीनेत्येवमाक्षेपं निराकर्तुमेव प्रकृते भृङ्गादिपदं विहाय कविना मद्यपायीत्यर्थान्तरमवबोधयन्मधुकरपदं प्रयुक्तम् । न हि मत्तस्य स्नानास्थानविवेकः संभवतीति सेयमारूढा परां कोटिमुत्प्रेक्षेति । 'वृन्तविनिर्गतविचकिलकलिकातले' इति शिवरामपाठः, 'वृन्तविनिर्गतविकचविचिकिलाविवरे' इति कस्य

नवयावकपङ्कपल्लवितसनूपुरतरुणीचरणप्रहारानुरागवशान्नव - किसलयच्छलेन तमिव रागमुदवहदशोकः । मधुरमधुपरिपूरितकामिनीमुखकमलगण्डूषसेकादिव तद्रसगन्धमात्मकुसुमेषु

---

चित्पाठश्च नातीव हृद्यः । यत्तु वृन्तविनिर्गताः भूमौ पतिता इति यावत्, तादृश्यः याः विचिकिलकलिकाः तासां तले मूले मूलविवर इत्यर्थः । तथा च यथाश्रुतमेव शङ्खध्वननमुपपद्यते इति शिवरामस्याशयः । वृन्तविनिर्गतानि भूमौ पतितानि यानि विकचानि विचिकिलानि विचिकिलकुसुमानि तेषां विवरे मूलदेशस्थे रन्ध्रे इत्यर्थः कस्यचित्पाठेऽपि । एवमपि समुपपद्यत एवोत्प्रेक्षेति । तन्न । कलिकानां वृन्तेभ्यः पतनासंभवात् । क्लेदादिना पतने तु तासां निर्गन्धत्वेन भ्रमरसञ्ज्ञायोगात् । विकसितानां तत्कुसुमानां शङ्खसादृश्यासंभवात् । पतितानां तेषां पुनः संकोचेन कथंचिच्छङ्खसादृश्यसंपादने तु तेषां निर्गन्धत्वेन भृङ्गसञ्ज्ञानुपपत्तिः । तस्मादस्मदुक्ता सरणिरेव ज्यायसीत्यलम् । **नवेति** । यावकपङ्कः पिण्डालक्तकः । पल्लविताः रक्ताः पल्लवयुक्ताश्च । 'पल्लवितं सपल्लवे । लाक्षारक्ते तते' इति हैमः । चरणप्रहारानुरागः पादाघाताय स्पृहा, चरणताडनसमये संक्रान्तो रक्तिमा च । **रागं** लौहित्यम् । सापह्नवोत्प्रेक्षा । तरुणीचरणानां पल्लवितत्वविशेषणस्याशोके पल्लवोत्पादनयोग्यतातात्पर्यकत्वात्परिकरः । अत एव समालङ्कारोऽपि, तद्गुणालंकारश्च । सर्वत्रापि श्लेषो मूलम् । एतेषां च यथायथं संकरः । 'अलंकारः परिकरः साभिप्राये विशेषणे ।' 'सारूप्यमपि कार्यस्य कारणेन समं विदुः ।' (समम्) 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ।' इति तल्लक्षणानि । **मधुरेति** । गण्डूषः मुखपूरणं मुखपरिपूरितं मध्विति यावत् । **तद्रसगन्धं** मधुरसवासनाम् । यद्वा रसगन्धमिति समाहार-

रवकुलकुसुमपरिमलमेलनसमृद्धमधुरिमगुणः, कामकलाकलापकुशलचारुकर्णाटसुन्दरीस्तनकलशघुसृणधूलिपटलपरिमलामोदवाही, रणरणकरसितापरान्तकान्तकुन्तलोल्लसनसंक्रा-

---

धम्मिल्लभारे संयतकचभरे विद्यमानानि यानि वकुलकुसुमानि केसरपुष्पाणि तेषां च परिमलस्य सुगन्धस्य मेलनेन संयोगेन समृद्धः अभिवृद्धः मधुरिमगुणः शोभनतागुणः प्रियत्वगुणो वा यस्य स तादृशः। अलकसहितः धम्मिल्ल इति वा। उत्तमस्त्रीणामलकधम्मिल्लयोः सुगन्धित्वं कविसमयसिद्धम्। अनेन च ललाटचुम्बनम्, उपच्छन्दनाय केशोपसीवनं च व्यज्यते। 'कन्दर्पकेलिः सुरतम्' 'लम्पटोऽभिनिविष्टः स्यात्' इति वैजयन्ती। 'प्रेङ्खोलितस्तरालितो लुलितान्दोलितावपि।' धम्मिल्लः संयताः कचाः' इत्यमरः। 'मधुरौ स्वादुशोभनौ।' इति व्याडिः। 'ललाटतटधम्मिल्लमलनामिलितपरिमलसमृद्धमधुरिमगुणः' इति शिवरामधृतः पाठः। **कामकलेति**। कामकलाकुशलाः कामशास्त्रशिक्षिताः। घुसृणधूलिः कुङ्कुमचूर्णम्। पटलं समूहः। परिमलः विमर्दः तत्संपर्क इति यावत्। आमोदः अत्यन्तमनोहरो गन्धः। अनेन स्तनस्पर्शो ध्वनितः। 'कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्।' इति मेदिनी। 'घुसृणं कुङ्कुमं समम्।' इति वैजयन्ती। 'परिमलो विमर्दोत्थे हृद्यगन्धे विमर्दने।' इति हैमः। 'आमोदः सोऽतिनिर्हारी' इत्यमरः। **रणरणकेति**। रणरणकेन उत्कण्ठया रसिताः संजातरसाः अनुभूता वा याः अपरान्तकान्ताः पाश्चात्यदेशस्त्रियः तासां कुन्तलानां चिकुराणां उल्लसनेन आन्दोलनेन संक्रान्तः यः परिमलः तेन मिलितायाः संगतायाः अलिमालायाः मधुरतरेण झंकाररवेण मुखरितं शब्दायितं

न्तपरिमलमिलितालिमालामधुरतरझङ्काररवमुखरितनभस्थलः, नवयौवनरागतरलकेरलीकपोलपालिपत्रावलीपरिचयचतुरः,चतुःषष्टिकलाकलापविदग्धमुग्धमालवनितम्बिनीनितम्ब-

---

नभःस्थलं यस्य तथोक्तः। कुन्तलोल्लासनेति पाठेऽपि उल्लासनं आन्दोलनमेव। अनेन कचग्रहणं भणितं च क्रोडीकृतम्। 'औत्सुक्यं रणरणकोत्कण्ठे आयल्लकारती। हल्लेखोत्कलिके' इत्यभिधानसंग्रहः। 'अपरान्तास्तु पाश्चात्त्यास्ते च सूर्पारिकादयः।' इति यादवः। 'चिकुरः कुन्तलो वालः' इत्यमरः। रसितेत्यत्र तारकादित्वादितच्, रसयतेः कर्तरि क्तो वा। करणरसिककान्तकुन्तलीकुन्तलोल्लासनेति पाठमभ्युपगम्य 'करणेषु गीताङ्गहारसंवेशादिक्रियासु रसिकाः कान्ताः कुन्तल्यः कुन्तलदेशाङ्गनाः' इति शिवरामो व्याचष्टे। **नवयौवनेति**। नवयौवनं प्रथमयौवनम्। तदा, रागतरलाः अनुरागेण चञ्चलहृदयाः। यौवनोद्धतेति पाठे उद्धताः सगर्वा इति व्याख्येयम्। कपोलपालिः गण्डप्रदेशः। पत्रावली पत्राङ्कुरः। परिचयः संबन्धः, अभ्यासश्च। चतुरः निपुणः, उपभोगक्षमश्च। 'त्यजत मानमलं बत विग्रहैः' इति रघुवंशपद्यव्याख्यायां 'चतुरं उपभोगक्षमम्' इति मल्लिनाथः। अनेन पत्रावलीलेखनं व्यञ्जितम्। 'दरोद्भिन्नस्तनं किंचिच्चलाक्षं मेदुरस्मितम्। मनागभिस्फुरद्भावं नव्यं यौवनमुच्यते।' इति नवयौवनलक्षणमाह भूपालः। 'पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः।' इत्यजयः। **चतुःषष्टीति**। कलापः समूहः। विदग्धाः निपुणाः। मुग्धाः प्रथमयौवनवत्यः। संवाहनं मृदुमर्दनम्। अनेनोपचारचातुर्यमभिव्यञ्जितम्। 'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः।' इत्यजयः। चतुःषष्टिकलाश्च 'गीतं वाद्यं नृत्यं नाट्यं आलेख्यम्' इत्यादिना शैवतन्त्रोक्ता

बिम्बसंवाहनकुशलः, सुरतश्रमपरवशान्ध्रपुरन्ध्रीनीरन्ध्रपीनपयोधरभारनिदाघजलकणनिकरशिशिरितो मलयमारुतो ववौ ।

अत्रान्तरे वासवदत्तासखीजनाद्विदितसुताभिप्रायः शृङ्गारशेखरः स्वसुतायाः स्वयंवरार्थमशेषधरणितलभाजां राजपुत्राणामेकत्र मेलनमकरोत् । ततो दग्धकृष्णागुरुपरिमलामो-

---

भागवतव्याख्यायां श्रीधरेण प्रदर्शिता इति तत्रैव ता द्रष्टव्याः । विस्तरभयान्नेह विलिख्यन्ते । वात्स्यायनीयेऽपि निरूपिताः कियतापि भेदेन चतुःषष्टिकलास्तत एव ज्ञेयाः । 'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ।' इति विश्वनाथः । **सुरतेति** । आन्ध्रपुरन्ध्रयः त्रिलिङ्गदेशस्त्रियः । नीरन्ध्रौ निबिडौ । पीनौ बृहन्तौ । 'स्यात्तु कुटुम्बिनी । पुरन्ध्री' इत्यमरः । अत्र मलयानिले विशेषणबलेन शृङ्गारनायकव्यवहारप्रतीतेः समासोक्तिः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।' इति तल्लक्षणम् ।

**अत्रेति** । अन्तरे अवसरे समय इत्यर्थः । धरणिः भूमिः । **तत इति** । ततः अनन्तरम् । वरः श्रेष्ठः आरोहः श्रोणिः नितम्बो वा यस्याः सा वरारोहा अत्युत्कृष्टेत्यर्थः । तादृशी वासवदत्ता । मञ्चं पर्यङ्कं यानविशेषमिति यावत्, 'तस्मात्कर्णीरथादवततार' इत्युत्तरत्र वक्ष्यमाणत्वात् । आरुरोह आरूढवतीति संबन्धः । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।' इत्यमरः । **दग्धेति** । दग्धः धूपितः । परिमलामोदः परिमलानुभवेन जातो हर्षः । परिमलामोद इत्यखण्डं समस्तपदं अत्यन्तसुगन्धपरं वा मोहिताः परवशाः । मधु व्रतं भक्ष्यं येषां ते मधुव्रताः भ्रमराः । गुम-

दमोहितमधुव्रतव्रातबहुलगुमगुमायितमुखरितम्, अतिरभसहासच्छटादीधितिधवलिमपरिमिलितम्, अनेकपरिहासकथा-

---

गुमायितं गुमगुमशब्दः। शब्दानुकरणमेतत्। 'आमोदो हर्षगन्धयोः।' इति विश्वः। 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः।' इत्यमरः। **अतिरभसेति**। 'चेटीनामित्यादिरस्य' इति शिवरामः। अतिरभसेन अत्यन्तहर्षेण यः हासः तस्य दीधितिच्छटायाः कान्तिपुञ्जस्य धवलिम्ना शुक्लत्वेन परिमिलितं युतम्। 'रभसो वेगहर्षयोः।' इति विश्वः। 'ज्येष्ठानां स्मितहसिते' इत्यारभ्य 'किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः।' इति दर्पणकारः। 'अतिरभसहासच्छटामोदपरिमलितम्' इति पाठमभ्युपगम्य 'अतिरभसोऽतिवेगः। छटा समूहः। आमोदः परिमलः' इति कश्चित्। अस्य तात्पर्यं स एव वेद। **अनेकेति**। अनेकपरिहासकथालापे बहुविधनर्मालापे विदग्धाः चतुराः ये शृङ्गारमयाः शृङ्गारप्रचुराः रसिकाः जनाः तेषां निचयेन समूहेन समाकुलं व्याप्तम्। 'तत्प्रकृतवचने मयट्' इति प्राचुर्ये मयट्। 'व्यस्ते त्वप्रगुणाकुलौ।' इत्यमरः। 'व्यस्तं तु व्याकुले व्याप्ते' इति विश्वः। शिवरामस्तु 'अनेकपरिहासकथाकलापविदग्धशृङ्गारिजनसमाकुलम्' इति पाठं स्वीकृत्य 'अनेकेषां भूपतीनां परिहासः कुलवयोरूपगुणहीनत्वेन परिहासः। कथाकलापः योग्यानां वंशादिवर्णनसमुदायः। तत्र विदग्धः चतुरः तज्ज्ञो यः शृङ्गारिजनो लोको नायिकानायकरसभावाभिज्ञः सखीरूपः तेन समाकुलं व्याप्तम्। जनो लोके महर्लोकात्परलोके च पामरे। इति विश्वप्रकाशः। तथा च कालिदासः। ततो नृपाणां श्रुतवंशवृत्तेति। यद्वा अनेकपरिहासकथाकलापे द्वयोः परस्परानुरागानन्तरं अनेकपरिहासकथाकलापे विदग्धः। शेषं पूर्ववत्। तथा च कालिदासः।

लापविदग्धशृङ्गारमयजननिचयसमाकुलम्, दह्यमानमहिषाक्षादिसुगन्धिद्रव्यसौरभाकृष्टपुरोपवनषट्पदकुलसमाकुलम्, अर्जुनसमरमिव नन्दिघोषमुखरितदिगन्तरम्, नृपास्थानमिव सराजोपहारम्, तापसाश्रममिव वितानोद्भासितम्, त्रिविष्टप-

---

तथा गतायां परिहासपूर्वं सख्यां सखी वेत्रधरा बभाषे । इति' इति व्याचष्टे । **दह्यमानेति** । महिषाक्षः गुग्गुलुः । पुरोपवनं नगरोद्यानम् । षट्पदाः भ्रमराः । 'जटायुः कालनिर्यासः कौशिको गुग्गुलुः पुरः । देवधूपः सर्वसहो महिषाक्षः पलंकषा ।' इति वैद्यकरत्नमाला । **नन्दिघोषेति** । नन्दिनां वन्दिनां घोषेण मुखरितं दिगन्तरं यस्य तं तथोक्तम् । यद्वा नन्दिघोषः आनन्दकलकलः । पक्षे नन्दिघोष इति अर्जुनरथस्य नाम । 'नन्दिमागधवंशज्ञवन्दिमङ्गलपाठकाः ।' इति वैजयन्ती । 'नन्दिर्द्यूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान् ।' 'नन्दिघोषोऽर्जुनरथे घोषे वन्दिजनस्य च ।' इति मेदिनी । 'यद्वा नन्दिर्जामातृसुहृज्जन इत्यर्थः । तेषां घोषेणेति पूर्ववत् । नन्दिरानन्दजामातृमित्रयोरपि चेष्यते । इत्युत्तरतन्त्रम् ।' इति शिवरामः । **नृपास्थानं** राजसभा । 'आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।' इत्यमरः । **सराजोपहारं** रलयोरभेदात् लाजविकिरणरूपाचारसहितम् । पक्षे नृपत्युपायनयुतम् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा ।' इत्यमरः । **वितानेति** । वितानः उल्लोचः । पक्षे वितानः यज्ञः । 'वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि । वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः ।' इति विश्वः । **त्रिविष्टपमिवेति** । तृतीयं विष्टपं त्रिविष्टपं स्वर्गः । 'पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते' इति सुधा । 'पिष्टपो विष्टपोऽप्यस्त्री भुवनं च

मिव सुमनोलङ्कृतं मञ्चमारुरोह वरारोहा वासवदत्ता ।

तत्र केचित्कलाङ्कुरा इव विदितनगरमण्डनाः, अपरे

---

नपुंसकम् ।' इत्यमरमाला । **सुमन इति** । सुमनसः पुष्पाणि, पक्षे देवाः । 'सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः ।' इति मेदिनी ।

**तत्रेति** । तत्र स्वयंवरमण्टपे, तेषु राजपुत्रेषु वा । केचित्कलाङ्कुरा इव विदितनगरमण्डना इत्येवं क्षणं राजपुत्राः स्थिता इत्यन्वयः । क्षणमित्यत्र अत्यन्तसंयोगे द्वितीया । कलाङ्कुर इति स्तेयशास्त्रप्रवर्तकस्य कर्णीसुतस्य मूलदेवस्य संज्ञा । 'कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्तकः ।' इति कादम्बरीटीकायाम् । 'कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः ।' इति हारावली । शिल्पशास्त्रप्रवर्तकः स इति केचित् । उपमेयानुरोधेन बहुवचनम् । एवमुत्तरत्रापि क्वचिदवसेयम् । कलाङ्कुराः चोरा इति केचित् । **विदितेति** । विदितानि अङ्गीकृतानि नगरमण्डनानि नागरिकभूषणानि अग्राम्यालङ्काराः यैस्ते तथोक्ताः । पक्षे विदिताः ज्ञाताः नगरमण्डनाः वेश्याः यैस्ते तथोक्ताः । मूलदेवो हि वेश्यास्तासां चरितानि च सुस्पष्टं जानातीति स्फुटं तदीयचरितेन । 'रूपाजीवा तु गणिका वारस्त्री पुरमण्डना ।' इति भागुरिः । यद्वा विदितानि स्वचारैर्ज्ञातानि नगरे विद्यमानानि चोरयितव्यानि मण्डनानि आभरणानि यैरिति व्याख्येयम् । मूलदेवश्च कलाविलासे कथासरित्सागरे च विस्तरेण वर्णितः । 'विहितनगरमण्डनाः' इति पाठान्तरम् । 'विजितनगरमण्डनाः' इति पाठमादृत्य 'विजितनगरमण्डना विजिततदभिधानवेश्याः । कलाङ्कुरेण कामशास्त्रकलाभिज्ञतया नगरमण्डना वेश्या जितेति वार्ता । पक्षे विजितं नगरस्य मण्डनं भूषणं यैस्ते, सर्वोत्कृष्टभूषणधारणादिति भावः । पक्षे विना गरुडेन जितं नगरं बाणपुरं

पाण्डवा इव दिव्यचक्षुःकृष्णागुरुपरिमिलिताः, अन्ये शर-

---

तस्य मण्डना बाणासुरतुल्या राक्षसा इवेत्युपहासोऽपि ।' इति शिवरामो व्याचष्टे । अत्रोपहासपरतया व्याख्यानं किमर्थमिति न ज्ञायते । उत्तरत्र 'विरक्तहृदया' इति विरागस्य वक्ष्यमाणत्वात्तदुत्पत्तये एवमुपहासपरतया व्यख्यानमिति तु न वक्तुं शक्यम् । न खलु 'विना गरुडेन जितम्...' इत्येवं क्लेशेन व्याख्यातुरुपहासपरतया व्याख्यानकौशलेन नायिकायाः पारमार्थिको विरागः संभवति । नहि ग्रन्थकर्तुर्वाक्ये एवं योजना साधीयसी फलवती वा । यदि च नायिकासख्या वचनमिदं स्यात्, यदि वा तत्तन्नृपतीनां चेष्टादिकं वर्ण्येत; तर्हि युज्येत काममेवं व्याख्या । यया नायिकाया विरागस्तन्मूलकस्तत्तन्नृपतिपरित्यागश्च समर्थितो भविष्यति, यथा बालरामायणरघुवंशादौ । प्रकृते तु न तथेति शिवरामेण किमर्थं क्लेशोऽनुभूयत इति विचार्यं सुधीभिः । **दिव्येति** । दिव्यचक्षुः सुगन्धभेदः । कृष्णागुरुः अगुरुविशेषः । तयोर्धूपगन्धेन परिमिलिताः युताः, तत्पङ्केन युता वा । यद्वा दिव्यचक्षुषः सुलोचनाः कृष्णागुरुपरिमिलिताश्चेति विशेषणसमासः । पक्षे दिव्यचक्षुः अन्धः धृतराष्ट्रः, यद्वा दिव्यचक्षुः ज्ञानचक्षुर्भगवान् कृष्णः, कृष्णा द्रौपदी, गुरवः पूज्या भीष्मादयः, यद्वा गुरुः द्रोणाचार्यः एतैः परिमिलिताः । 'दिव्यचक्षुः सुगन्धस्य भेदे नान्धे सुलोचने ।' 'कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद्द्रौपदी नीली कणाद्राक्षासु योषिति ।' इति मेदिनी । 'सदिव्यचक्षुषः' इति क्वचित्पाठः । 'दिव्यचक्षुः अर्जुनः । तेन सहिताः । पक्षे दिव्यचक्षुरिति सुगन्धिद्रव्यविशेषः । यद्वा ज्यौतिषिकः । दिव्यचक्षुर्ज्यौतिषिके पार्थात्मज्ञानिनोरपि । इत्युत्पलः ।' इति केचित् । पाण्डवपदेन अर्जुनव्यतिरिक्तानां चतुर्णां ग्रहणमिति तदाशयः । 'पक्षे

दिवसा इव दूरप्रवृद्धाशाः, इतरे प्रहर्तुमुद्यता इव स्वबलार्थिनः, केचिद्व्याधा इव शकुनश्रावकाः, केचिदाखेटासक्ता इव रूपानुसारप्रवृत्ताः, केचिज्जैमिनिमतानुसारिण इव तथा-

---

दिव्यचक्षुषः अन्धाः, कृष्णाः श्यामवर्णाः । अगुरुपरिमलिताः वृद्धरक्षणरहिता इत्युपहासः । दिव्यचक्षुः सुनयने कृष्णेऽन्धे सिंहकेऽपि च । इति धरणिः । विदुः परिमलं गन्धे रक्षणेऽपि चेति विश्वः ।' इति शिवरामः । **दूरेति** । दूरं अत्यर्थं प्रवृद्धा आशा वासवदत्ताप्राप्त्यभिलाषः येषां ते तादृशाः । पक्षे दूरं प्रवृद्धाः प्रसृताः मेघावरणाद्युपरोधनिरासेन सुदूरप्रसरणा इव लक्ष्यमाणा इत्यर्थः, तादृश्यः आशाः दिशः येषां ते तथोक्ताः । 'सुदूरप्रवृद्धसुखाशाः' इति पाठमङ्गीकृत्य शरद्दिवसपक्षे 'सुदूरं प्रवृद्धाः सुखाशाः राजतिमिषाः येभ्यस्ते, सुखाशानां वसन्ते वृद्धेरिति भावः ।' इति, 'पक्षे सुदूरं प्रवृद्धा सुष्ठु खमिवाकाशमिव आशा येषां ते ईप्सितालब्धेर्व्यर्थत्वादिति भाव इत्युपहासः ।' इति च शिवरामः । **स्वबलेति** । शोभना अबला योषित् स्वबला । पक्षे स्वेषां बलं शक्तिः सैन्यं वा स्वबलम् । 'स्वस्मै बलं पराक्रममर्थयन्ते वैद्यादिभ्यस्त इत्युपहासः ।' इति शिवरामः । **व्याधाः** किराताः । **शकुनेति** । शकुनं गरुडध्वन्यादिरूपं निमित्तं शृण्वन्तीति तथा । पक्षे शकुनान् पक्षिणः तच्छब्दान् शृण्वन्ति तद्ग्रहणनिमित्तं तदावासपरिज्ञानाय सावधानं आकर्णयन्तीति तथा । 'पक्षिण आहूय हन्तुं स्वहस्तगतान्पक्षिणः शब्दायन्त इत्यर्थः ।' इति केचित् । 'शकुनस्तु पुमान्पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम् ।' इति मेदिनी । अस्य शिवरामव्याख्यानं मुद्रितपुस्तके नोपलभ्यते । **आखेटेति** । आखेटः मृगया । 'आच्छोदनं मृगव्यं स्यादाखे-

गतध्वंसिनः, केचित्खञ्जना इव सांवत्सरफलदर्शिनः, के-

---

टो मृगया स्त्रियाम् ।' इत्यमरः । **रूपेति** । रूपस्य सौन्दर्यस्य अनुसारेण अनुरोधेन प्रवृत्ताः मनःप्रवृत्तिमन्तः, रूपवद्वस्त्वपेक्षमाणा इत्यर्थः । यद्वा रूपानुसारे सौन्दर्यादरे प्रवृत्ताः, रूपवद्वस्तु बहुमन्यमाना इत्यर्थः । पक्षे रूपानुसारे मृगानुधावने प्रवृत्ताः आसक्ताः । 'आवेध्यारोप्यविक्षेप्यैर्भूषणैश्च विनाकृतम् । यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ।' इति सुधाकरः । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु । सौन्दर्ये च स्वभावे च' इति वैजयन्ती । अत्रोपहासपरं शिवरामव्याख्यानं मुद्रितपुस्तके न दृश्यते । **जैमिनीति** । जैमिनिः पूर्वमीमांसासूत्रकर्ता व्यासशिष्यो महर्षिः । **तथागतेति** । तथा आगतान् स्ववेषादितुल्यं वेषादिकं परिगृह्य स्वयंवरार्थमागतान् नृपतीन् ध्वंसयन्ति परिहसन्तीति तथागतध्वंसिनः, परिहासेन तेषां मन उपमृद्नन्तीत्यर्थः । 'तथा भूतं गमनं तद्ध्वंसिनः कार्यं न पश्यन्तीत्यर्थः ।' इति कश्चित्? 'तथागतमतध्वंसिनः ।' इति पाठं स्वीकृत्य 'तथागतानां यथा स्वगृहे स्थितास्तथैवागतानां न समयोचितवस्त्रभूषणधारिणां सौन्दर्याभिमानजुषां मतं किमिव हि मधुराणां मण्डनं नाकृतीनामित्येवं रूपं तद्ध्वंसिनः तन्निन्दकाः ।' इति शिवरामः । पक्षे तथागतः बुद्धः तद्ध्वंसिनः, मीमांसकैर्बुद्धानभिमतानां वेदप्रामाण्यादीनां सिद्धान्तितत्वात्तद्ध्वंस इति बोध्यम् । 'सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।' इत्यमरः । 'तथागतानां नास्तिकानां मतध्वंसिनः ।' इति, 'पक्षे तथागतं कुलपरंपरोचितं मतं शैवादिमतं तद्ध्वंसिनो नाशकाः । आचारहीनतात्रोपहासबीजम् ।' इति च शिवरामः । **खञ्जनाः** खञ्जरीटपक्षिणः । **सांवत्सरेति** । 'संवत्सरं वेत्ति सांवत्सरः । तदधीते तद्वेद इत्यण् ।' इति सुधा । 'सांवत्सरो ज्यौतिषिकः' इत्यमरः । तेन कथ्यमानं-

**चित्सुमेरुपरिसरा इव कार्तस्वरमयाः, केचित्कुमुदाकरा इव भास्वद्दर्शननिमीलिताः, केचिद्धार्तराष्ट्रा इव विश्वरूपा-**

---

कथितं वा फलं पश्यन्ति आलोचयन्तीति तादृशाः। पक्षे संवत्सरे भवं सांवत्सरं यावत्संवत्सरभावीत्यर्थः, तादृशं फलं दर्शयन्ति सूचयन्तीति तादृशाः। 'संवत्सरात्फलपर्वणोः' इति वार्तिकेन फले विशेष्ये संवत्सरशब्दादण्। खञ्जनदर्शनं तत्तत्स्थलभेदवशेन शुभाशुभसूचकमिति स्पष्टं बृहत्संहितायां खञ्जनकलक्षणाध्याये। तत्र प्रथमदर्शने तद्दिवसे यत्फलम्, तदेव यावद्वर्षं भावीति सांहितिकाः। तथा च वराहमिहिरः। 'आवर्षात्प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषात्।' इति। काश्यपश्च। 'प्रथमे दर्शने पाकमावर्षात्प्रवदेद्बुधः। प्रतिदैवसिके वाच्यं दर्शनेऽस्तमये फलम्।' इति। शिवरामस्तु 'सांवत्सरो ज्यौतिषिकः, तद्वत्फलदर्शिनः। यथा ज्यौतिषिको निध्यादिप्रश्ने निधिरूपं फलं दर्शयति, एवं खञ्जना अपि सुरतादिना निध्यादिफलं दर्शयन्तीत्यर्थः। पक्षे सांवत्सरं फलं वर्षफलं दर्शयन्ति स्त्रीपुत्रादिलाभार्थं तादृशास्ते। द्वीपादन्यस्मादपीति निर्णयराहितत्वेनाधीरत्वं व्यङ्ग्यमुपहासबीजम्।' इति लिखति। **सुमेर्विति**। परिसराः पर्यन्तभूमयः। **कार्तस्वरमयाः** सुवर्णविकाराः सुवर्णप्रचुरा वा, कनकमयबहुभूषणधारिण इत्यर्थः। पक्षे स्पष्टम्। 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्।' इत्यमरः। राजपुत्रपक्षे 'कार्तस्वरः कुत्सित आर्तस्वरः पीडितस्वरः तन्मयाः तद्भाज इत्यर्थः।' इति कश्चित्। 'कः आत्मा। आत्मनि विषादात् आर्तशब्दमयाः।' इति केचित्। 'पक्षे ईषदार्तस्वरमयाः। रुग्णतोपहासबीजम्।' इति शिवरामः। **भास्वदिति**। भास्वतां दीप्तिमतां पुरुषाणां दर्शनेन निमीलिताः दृष्टिप्रतिघातेन निमीलितनयनाः। पक्षे भास्वान् सूर्यः। निमीलिताः

वलोकनजनितेन्द्रजालाद्भुतप्रत्ययाः, केचिदात्मनि वारणबुद्ध्या

संकुचिताः । उभयत्रापि निमीलनमौपचारिकं तदाश्रये बोध्यम् । 'वासवदत्तादर्शनादेव येषामयं प्रकारस्तेषामग्रे का गतिरिति स्पष्ट एवोपहासः ।' इति शिवरामः । 'भास्वान्भास्वरसूर्ययोः ।' इति मेदिनी । **धार्तराष्ट्राः** धृतराष्ट्रपुत्राः दुर्योधनादयः । **विश्वरूपेति** । विश्वरूपावलोकनं अखिलजगदाकारदर्शनं स्वयंवरागतसमस्तलोकस्थितजनसमुदायदर्शनामिति यावत्, तेन जनितः उत्पादितः इन्द्रजालाद्भुतप्रत्ययः न खल्वेवं प्रभूता जगति विद्यन्ते जनाः, परंतु केनाप्यैन्द्रजालिकेन स्वेन्द्रजालमहिम्ना निरवधिको जनसमवायः प्रदर्श्यत इत्येवमिन्द्रजालाश्चर्यविषयको विश्वासः येषां ते तादृशाः । 'विश्वं कृत्स्ने च भुवने विश्वे देवेषु नागरे । विश्वाप्यातिविषायां स्यात्' इति विश्वः । पक्षे विश्वरूपस्य दूत्यकाले भगवन्तं बन्धुं दुर्योधनादिषु समुद्युक्तेषु श्रीकृष्णप्रदर्शितस्य स्वीयसर्वाकारतात्मकस्य रूपस्य अवलोकनेन जनितः इन्द्रजालाद्भुतप्रत्ययः कृष्णेनेन्द्रजालमाचर्यत इत्येवं निश्चयः येषां ते तथोक्ताः । 'विश्वरूपो विष्णुः तदवलोकनेन जनितः इन्द्रजालं माया तस्यां अद्भुतं आश्चर्यमिति प्रत्ययः ज्ञानं येषां ते तथोक्ताः । पक्षे विः पक्षी श्वा सारमेयः रूपं मृगः एतेषां निमित्तविशेषाणां अवलोकनेन जनितः इन्द्रजालाः इन्द्रदाराः शचीत्यर्थः उदीच्यानां दजयोरभेदः रलयोरभेदश्च तस्याः अद्भुतप्रत्ययो निश्चयो येषां ते तथा । स्वयंवरे कलहायमानान् शची नाशयतीति संप्रदायः।' इति कश्चित् । 'इन्द्रजालाः इन्द्रदाराः इन्द्राणी तेषामद्भुतं इन्द्रदाराद्भुतमिति विवाह उच्यते । विवाहः स्यात्परिणयस्तथेन्द्राणीमहोत्सवः । इति निघण्टुः ।' इति केचित् । उपमेयपक्षे 'विश्वस्य जगतो रूपं सौन्दर्यं यस्यां त्रैलोक्यसमवायिसौन्दर्यपरमाणुनिर्मिता वासवदत्ता




बलवन्तोऽपि सुवाहाः, केचित्पाणिग्रहणार्थिनोऽप्यसुकरं म-

---

तस्या दर्शनेन जनितेन्द्रजालप्रत्ययाः। तथा च कन्दर्पकेतुवर्णनप्रस्तावे मूलकार एव स्वस्यैव नैपुण्यस्येत्यादि स्पष्टमेव वक्ष्यति। अतो दूर्यारमूतपूर्व सुरूपयोः संयोजनम्। अत एव स्वप्नदर्शनोत्तरं कन्दर्पकेतौ साभिलाषा वृथैवेत्यादिनाननुरूपभर्तृसंगता अन्या निन्दिष्यति।' इति 'अतत्त्वज्ञत्व-मत्र व्यङ्ग्यमुपहासबीजम्।' इति च शिवरामः। **आत्मेति**। आत्मनि स्वेषु। वारणबुध्या गजधिया। बलवन्तः अभिमानवन्तोऽपि, यद्वा शक्तिमन्तोऽपि, सुवाहाः शोभना अश्वाः। अत्र गजानामश्वत्वमुक्तामिति विरोधः। अमुं च विरोधमापातप्रतीयमानमपिकारो द्योतयति। 'बलं शक्त्यभिमानयोः' इत्यजयः। पक्षे आत्मनिवारणबुद्ध्येत्येकं पदम्। आ-त्मनिवारणबुध्या स्वप्रतिषेधाशङ्कया स्वनिरोधपूर्वकयुद्धावतारसंशयेनेत्यर्थः। बलवन्तः सैन्यसहिताः। शोभनाः वाहाः अश्वाः येषां ते सुवाहाः। यद्वा शोभना वाहाः भुजाः येषां ते तादृशा इति परिहारः। 'वाहो भुजे पुमा-न्मानभेदाश्ववृषवायुषु।' इति मेदिनी। विरोधाभासालंकारः। 'वारणबुद्ध्या गजबुद्ध्या बलवन्तोऽपि सबला अपि, सुवाहाः सुखेन वाहो वहनं येषां तादृशाः। वह प्रापणे घञ्। यो ह्यतिबलः पुमान् स न पुरुषान्तरेण सुखोद्वहनीय इति विरोधः।' इति शिवरामः। परिहारपक्षे 'प्रियन्त इति पराः परवन्तः परैर्युक्ता इत्यर्थः। बपयो रलयो-श्चाभेदाद्बलशब्दस्य परशब्दो द्रष्टव्यः। एवं सर्वत्रोन्नेयम्।' इति कश्चित्। 'पक्षे शोभनाश्वजातिपुरुषाः ते वृषजातिपुरुषा इव न यथाकथं-चिदपि जातित्रयनायिकोपयुक्ता इति दिक्। प्रपञ्चस्तु रतिरहस्यादौ द्रष्टव्यः। अत्रोपहासबीजं तत एवावधेयम्।' इति शिवरामः। **पाणीति**। पाणीनां शत्रुहस्तानां ग्रहणं छेदनेन स्वायत्तीकरणं तत् अर्थ-

न्यमानाः, केचिदधरीकृता अपि स्थिराः, केचित्पाण्डुपुत्रा

यन्ते कर्तुमभिलष्यन्तीति पाणिग्रहणार्थिनः । तादृशा अपि, असुकरं मन्यमानाः; असवः प्राणाः असुकरं प्राणप्रदं सुखाकरमित्यर्थः । तत्पाणिग्रहणं हस्तच्छेदनरूपं कर्म असुकरं सुखकरं मन्वाना इत्यर्थः । करच्छेदनस्य दुःखजनकत्वात्तस्य सुखप्रदत्वेनाभिमतिर्विरुद्धेति विरोधः । पक्षे पाणिग्रहणं वासवदत्तायाः विवाहः तदर्थिनः । सुकरं सुखेन कर्तुं शक्यं तद्भिन्नं असुकरं दुष्करम् । तत् पाणिग्रहणं दुष्करं मन्यमाना इत्यर्थ इति परिहारः । अत्रापिकारस्य न विरोधद्योतकत्वम्, किंतु यथाश्रुतार्थपरतायामेव तस्य पर्यवसानमिति केचित् । विरोधपरवाक्यमध्यप्रविष्टस्यास्यापि वाक्यस्य तत्वौचित्याद्यथाकथंचित्पूर्वोक्तदिशा विरोधः परिहारश्च समुन्नेय इति तु वयम् । केचित्तु अपिकारमुत्तरत्र योजयित्वा असुकरं मन्यमाना अपि पाणिग्रहणार्थिन इत्यन्वयं स्वीकृत्य वासवदत्तायाः करं असुकरं अशोभनं हस्तं मन्यमाना अपि पाणिग्रहणार्थिन इति विरोधः, न खलु निन्दिते वस्तुनि प्रवृत्तिर्भवतीति भावः । पक्षे असुकरं दुष्करमिति परिहार इति व्याचक्षते । 'पाणिना ग्रहणं तत्प्रार्थयन्तः । असुकरं अशोभनहस्तमात्मानं मन्यमानाः । पाणिग्रहणार्थिनः शोभनहस्तरहितत्वं विरुध्यत इति विरोधः ।' इति कश्चित् । 'पाणिग्रहणार्थिनः वासवदत्तापाणिग्रहणार्थिनः । असुकरं दुष्करं मन्यमानाः । स्वेच्छासत्वेऽपि स्वयंवराधीनत्वात्तस्य । पक्षे असवः प्राणास्तत्कारकं प्राणप्रदम् ।' इति शिवरामः । अस्मिन्व्याख्यानद्वयेऽपि कथं विरोध इति सुधीभिर्विचार्यम् । उपहासबीजं त्वत्र शिवरामेण नोक्तम् । **अधरीकृता इति** । धरा भूमिः धरीकृताः पृथ्वीकृताः तद्भिन्नाः अधरीकृताः । तादृशा अपि, स्थिराः भूमय इति विरोधः । पक्षे अधराः

इवाक्षहृदयाज्ञानहृतक्षमाः, केचिद्बृहत्कथानुबन्धिन इव गु-

---

निकृष्टाः, तादृशीकृताः अधरीकृताः न्यक्कृता अपीति यावत्। स्थिराः निश्चलाः दृढाध्यवसाया इत्यर्थ इति परिहारः । 'रसा विश्वंभरा स्थिरा। धरा धरित्री धरणिः' इत्यमरः। 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्।' 'स्थिरा भूशालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु।' इति मेदिनी। 'स्फुटमेवात्रोपहासबीजं निर्लज्जतारूपम्।' इति शिवरामः। **अक्षेति** । 'अक्षहृदयस्य व्यवहारतत्त्वस्य अज्ञानेन हृतक्षमाः त्यक्तक्षान्तयः । कर्मानुगुणमेवेयमस्माभिरपि लप्स्यत इति विवेकाभावादभ्यसूयापरा इति यावत्। पक्षे अक्षहृदयं पाशकतत्त्वं द्यूतशास्त्रं वा तदज्ञानेन अपहृतभूमयः।' इति सांप्रदायिकाः। राजपुत्रपक्षे 'अक्षं इन्द्रियं हृदयं चित्तं तयोरज्ञानेन हृता क्षमा क्षान्तिः येषां ते तथा।' इति कश्चित्। 'अक्षाणां वासवदत्तासंबन्धिनामिन्द्रियाणां हृदयस्य तत्त्वस्य मनसो वाज्ञानेनानवबोधेन हृतक्षमाः गतशान्तयः, इयमङ्गीकरिष्यति नवेति व्याकुलीभूता इति भावः। तरलतात्र दोषः।' इति शिवरामः। 'अक्षो रथस्यावयवे व्यवहारे विभीतके। पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ। अक्षं सौवर्चले तुत्थे हृषीके स्यात्' 'क्षमा क्षान्तौ क्षितौ' इति हैमः। **बृहत्कथेति** । बृहत्कथानुबन्धिनः बृहत्कथाख्यग्रन्थकर्तारः। **गुणाढ्या इति** । गुणैः संध्यादिभिः शौर्यौदार्यादिभिर्वा आढ्याः धनिनः पूर्णा इत्यर्थः। पक्षे गुणाढ्य इति बृहत्कथाकर्तुर्नाम । बहुवचनमुपमेयानुरोधेन । 'बृहत्कथानुसारिणः' इति पाठेऽपि स एवार्थः। यद्वा बृहत्कथापठितारः। गुणाढ्याः वैदग्ध्यादिगुणभूयिष्ठाः, बृहत्कथानुशीलनेन वैदग्ध्यादिगुणोदयसंभवादिति व्याख्येयम्। 'बृहत्कथा वलाहककथा। गुण इति बृहत्कथाकर्तृकविनाम तेनाढ्याः। पक्षे गुणैराढ्याः।' इति कश्चित्। 'केचिद्बृहत्क-

णाढ्याः, केचित्तिर्यग्गतय इव सुगन्धवाहाः, केचित्कौरवसैनिका इव द्रोणाशासूचकाः, केचित्कैरवाकरा इवासोढ-

---

थानुबन्धिनो गुणाढ्याः' इति पाठं स्वीकृत्य 'बृहत्कथानुबन्धिनो बृहत्कथाख्यग्रन्थकर्तारः । गुणाढ्याः तन्नामानः कवयः । बहुवचनं पूजार्थम् । पक्षे बृहत्कथानुबन्धिनः बहुकथावक्तारः । गुणाढ्याः गुणैः सन्ध्यादिभिरन्यैश्चाढ्याः । पक्षे गुणैर्वागुरादिभिराढ्याः । सर्वदा मृगयासक्ततया व्यसनितात्र दोषः ।' इति शिवरामः । अत्र रूपकमिति शिवरामाशयः । परन्तु तदीयपाठेऽपि उत्तरत्र 'कौरवसैनिका इव' इत्येवमुपमाप्रकरणादत्राप्युपमापरपाठ एव समीचीन इति भाति । **तिर्यगिति** । तिरश्ची गतिः येषां ते तिर्यग्गतयः वायवः । **सुगन्धेति** । शोभनं गन्धं वहन्ति धारयन्तीति तादृशाः । यद्वा सुगन्धाः शोभनगन्धसहिताः वाहाः भुजाः येषां ते तथोक्ताः । पक्षे शोभनं गन्धं वहन्ति प्रापयन्ति प्रसारयन्तीति तथा । 'केचित्तिर्यग्गतयः सुगन्धवाहाः' इति शिवरामपाठः । 'तिर्यग्गतयः कुटिलमार्गगामिनः । सुगन्धवाहाः सुगन्धधारिणः । पक्षे तिर्यग्गतयः वायवः । वायोस्तिर्यग्गमनं वैशेषिकभाष्ये । सुगन्धवाहाः शोभनवायवः ।' तदीयं व्याख्यानम् । **कौरवसैनिकाः** दुर्योधनसैन्यानि । **द्रोणेति** । द्रोणः काकः तच्छास्त्रं तच्छकुनतावबोधकं निमित्तशास्त्रम्, तत्सूचकाः तदवेक्षकाः पक्षिशास्त्रालोचका इति यावत् । द्रोणशब्दः शकुनभूतपक्षिसामान्योपलक्षकः । पक्षे द्रोणः द्रोणाचार्यः तस्य शास्त्रं शासनं निदेशः, तत्सूचकाः तदनुष्ठातारः द्रोणाचार्याज्ञावशंवदा इत्यर्थः । यद्वा शस्त्राणां समूहः शास्त्रम् । द्रोणाचार्यस्य शस्त्रसमूहं सूचयन्ति पतिष्यति युष्मासु द्रोणाचार्यशस्त्रसमूह इत्येवं शत्रून्बोधयन्तीति तादृशाः ।

शूरभासः क्षणमेवं स्थिता राजपुत्राः। सा च क्षणेनैताने-

---

'द्रोणाशासूचकाः।' इति शिवरामपाठः। 'द्रोणाचार्यादाशा जयाशा तत्सूचकाः। द्रोणाचार्योऽस्मत्सेनापतिरिति नास्माकं पराजय इत्येवं परस्परसूचकाः। पक्षे द्रोणः काकः, तस्मात् आशा वासवदत्ताप्राप्त्याशा तत्सूचकाः। उक्तंच स्थानस्थितप्रकरणे वसन्तराजे। इष्टार्थदोऽश्वादिकवाहनस्थश्छत्रादिसंस्थस्तदवाप्तिकारी। वध्वागमं जल्पति तोरणस्थो हृद्यार्थदो हृद्यतरुस्थितश्च। इत्यादि' इति तदीया व्याख्या। 'द्रोणः पार्थगुरौ काके माने' इति हैमः। 'शास्त्रं न द्वयोरागमाज्ञयोः।' इति मेदिनी। **असोढेति**। असोढाः शूराणां वीराणां भासः द्युतयः तेजांसि यैस्ते तादृशाः। पक्षे असोढाः शूरस्य सूर्यस्य भासः किरणाः यैस्ते तथोक्ताः। 'शूरश्चारुभटे सूर्ये' इति विश्वः। 'सुभटे शूरः सूर्ये च दन्त्योऽपि' इत्यूष्मविवेकः। 'भा भुव्यलंकृतौ दीप्तौ स्त्रियां भाः किरणे द्युतौ।' इति नानार्थरत्नमाला। सहतेः क्तप्रत्यये सोढेति रूपम्। **सा चेति**। सा वासवदत्ता। एकैकशः प्रत्येकम्। अत्र एकैकश इति प्रयोगो न साधुः। अपवादेन शसा द्विर्वचनस्य बाधितत्वादिति मनोरमाकारः। 'एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा—' इति भाष्यप्रयोगेण स्वार्थेऽपि शसिति विज्ञायत इति एकैकश इत्यत्र वीप्सायां द्विर्वचने ततः स्वार्थे शसिति ज्ञानेन्द्रसरस्वती। नव्यास्तु नेदं भाष्यवचनम्, परंतु भाष्यकृता समुद्धृतं श्रौतं वचनमेव। अतो नेदं ज्ञापकं भविष्यति। अत्र हि च्छान्दसत्वात् शस्। अत एव हरदत्तेन 'एकैकशः पितृसंयुक्तान्' इत्यत्र छन्दोवदृषयः कुर्वन्तीति समाहितम्। किं च 'एकां कपिलाम् —' इति वाक्ये एकेति प्रधानार्थकं संबुध्यन्तमिति न दोषः। एकैकश इत्यस्योपपत्तिस्तु एवं करणीया। 'संख्यैकवचनाच्च—' इति सूत्रे चकारो वीप्सायामित्यनन्तरं द्रष्ट-

कैकशः समवलोक्य विरक्तहृदया सती तस्मात्कर्णीरथादवततार ।

अथ तस्यामेव रात्रौ सा स्वप्ने, वालिनमिवाङ्गदोपशो-

---

भ्यः । संख्यैकवचनात् वीप्सायां च शस् । चात्स्वार्थेऽपि । स चाभिधानस्वाभाव्यादेकशब्दादेव । तेन एकशब्दाद्वीप्साशसभावे द्विर्वचने ततोऽस्यन्तस्वार्थिके शसि पक्षे जाते एकैकश इत्येतत्सिद्धिः । न चैवमेकश इत्युक्ते संदेहः स्यात् । शास्त्रे व्याख्यानतो लोके प्रकरणादितो निर्णयादिति वदन्ति । **विरक्तेति** । विरक्तं निरभिलाषं हृदयं मनः यस्याः सा तथोक्ता सती । 'विरक्तहृदया वर्णितदोषदर्शनात्' इति शिवरामः । **कर्णीरथात्** प्रवहणात् । 'कर्णीरथः प्रवहणं डयनं च समं त्रयं ।' इत्यमरविवरणे 'त्रीणि पुरुषस्कन्धवाह्यस्य यानविशेषस्य डोला इति ख्यातस्य' इति सुधा । एतदनुरोधेनैव पूर्वं मञ्चपदं यानविशेषपरतया व्याख्यातमस्माभिः । 'कर्णीरथो मञ्चः । कर्णीरथः प्रवहणे मञ्चे राज्ञां स्वयंवरे । इत्यजयः ।' इति केचित् । एतत्पक्षे च पूर्वोक्तं मञ्चपदं यथाश्रुतमेव रमणीयम् । कर्णवंशादिति पाठेन 'कर्णवंशो भवेन्मञ्च इति हारावली' इति शिवरामः ।

**अथेति** । अथ आगतेषु राजपुत्रेषु विरागेण मञ्चादवतार्य स्वावासगमनानन्तरत् । तस्यामेव रात्रौ स्वयंवरदिनसंबन्धिन्यामेव निशायाम् । कंचित् । वक्ष्यमाणविशेषणविशिष्टं, युवानं तरुणम् । स्वप्ने । सा वासवदत्ता । ददर्श अपश्यदिति संबन्धः । इतः परं यूनो विशेषणानि । **वालिनमिवेति** । वाली नाम कश्चिद्वानरराजः सुग्रीवस्य ज्येष्ठः । **अङ्गदेति** । अङ्गदं केयूरः, पक्षे अङ्गदो नाम वालिनः पुत्रः । 'अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् ।' इति मेदिनी । **कुहूमुखमिव**

भितम्, कुहूमुखमिव हारिकण्ठम्, कनकमृगमिव रामाकर्षणनिपुणम्, जयन्तमिव वचनामृतानन्दितवृद्धश्रवसम्, कृष्णमिव कं सहर्षं न कुर्वन्तम्, महामेघमिव विलसत्कर-

---

कोकिलमिव। 'कुहूकण्ठमिव' इति पाठान्तरम्। 'ध्वांक्षपुष्टः कलकण्ठो मधुकण्ठः कुहूमुखः।' इति हारावली। **हारीति**। हारी हारवान् कण्ठः यस्य तं तथोक्तम्। पक्षे हारी मनोहरः कण्ठः कण्ठध्वनिः यस्य तं तादृशम्। **कनकेति**। सीताविलोभनेन रामसीतयोर्वियोजनाय रावणेन प्रेरितो मारीचः कनकमृगरूपं दधाविति स्पष्टं श्रीमति रामायणे। **रामेति**। रामाणां सुन्दरीणां आकर्षणे स्वसौन्दर्यादिना वशीकरणे निपुणं समर्थम्। पक्षे रामस्य दाशरथेः आकर्षणे देशान्तरनयने निपुणं शक्तम्। 'मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते। दर्शनादर्शनादेवं सोऽपाकर्षत राघवम्। सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः।' इति श्रीमति रामायणे। 'सुन्दरी रमणी रामा' इत्यमरः। **जयन्तमिव** तन्नामकमिन्द्रपुत्रमिव। 'जयन्तः पाकशासनिः।' इत्यमरः। **वचनेति**। वचनामृतैः सुधासदृशैर्वचोभिः आनन्दितानि तोषितानि वृद्धानां पण्डितानां श्रवांसि श्रवणानि येन तं तथोक्तम्। पक्षे वचनामृतैः आनन्दितः वृद्धश्रवाः इन्द्रः येन तं तथोक्तम्। 'वृद्धः प्राज्ञे स्थविरे च' इति हैमः। 'श्रुतिः स्त्री श्रवणं श्रवः।' 'वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः।' इत्यमरः। 'वृद्धेभ्यः शृणोति, वृद्धे श्रवसी यस्य, वृद्धेषु पण्डितेषु श्रवो यशो यस्य' इति तत्र व्याख्यातारः। **कंसेति**। कं जनं सहर्षं हर्षयुक्तं न कुर्वन्तं सर्वानपि जनान् हर्षयुक्तान्कुर्वन्तमित्यर्थः। पक्षे कंसहर्षमित्येकं पदम्। कंसस्य स्वमातुलस्य मधुरापतेः हर्षं सन्तोषं न कुर्वन्तम्। **विलसदिति**। विलसन्तौ

कम्, समुद्रमिव महासत्त्वम्, मालिन्या कबरिकया तुङ्ग-भद्रया नासिकया शोणेनाधरेण नर्मदया वाचा गोदया

---

शोभमानौ करौ हस्तौ यस्य तं तादृशम्। समासान्तः कप्। पक्षे विलसन्त्यः करकाः वर्षोपलाः यस्य तं तथोक्तम्। 'वर्षोपलस्तु करको' इत्यमरः। **महासत्त्वमिति**। महत् सत्त्वं बलं चित्तं स्वभावो वा यस्य तं तादृशम्। पक्षे महान्ति बृहन्ति सत्त्वानि जन्तवो यस्मिन् तं तथोक्तम्। 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसाया-सुचित्तेष्वस्त्री तु जन्तुषु।' इति मेदिनी। 'सतेजसं च' इति क्वचित्पाठः। 'महासत्त्वतेजोयुक्तम्' इति क्वचित्पाठः। तदा तेजः प्रभावः। पक्षे तेजः बाडबाग्निरिति व्याख्येयम्। 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरे-तसोः।' इति मेदिनी। उपरिष्टात् पुण्यसरिन्मयमिवेति वक्ष्यति, तत् श्लेषेण समर्थयते—**मालिन्येत्यादिना**। मालिन्या मालिनीनामिकया कयाचन नद्या, या शाकुन्तलादिषु वर्ण्यते; मालायुक्तया च। **कबरिकया** केशवि-न्यासेन। 'मालिनी मातृकावृत्तभिदोर्मालिकयोषिति। गौरीचम्पानगर्यो-श्च मन्दाकिन्यां नदीभिदि।' इति मेदिनी। 'कवरी केशविन्यासशाकयोः' इति हैमः। 'कबरिका केशबन्धनविशेषः।' इति कश्चित्। **तुङ्गेति**। तुङ्गभद्रा तन्नाम्ना प्रसिद्धा नदी। पक्षे तुङ्गा उन्नता भद्रा मङ्गलकरी च। **शोणेन** शोणाख्यनदेन, रक्तेन च। 'शोणो नदे रक्तवर्णे श्योनाके-ऽग्नौ हयान्तरे।' इति हैमः। **नर्मेति**। नर्मदा सुप्रसिद्धा तन्नामा नदी। पक्षे नर्म क्रीडां लीलासंलापं ददातीति नर्मदा नर्मभाषणचतुरेत्यर्थः। 'द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च।' इत्यमरः। षडेते क्रीडाया इति सुधा, परिहासस्येति बुधमनोहरा। **गोदयेति**। गोदा गोदावरी

भुजया स्वर्वाहिन्या कीर्त्या च पुण्यसरिन्मयमिव, आदिकन्दं शृङ्गारपादपस्य, रोहणगिरिं सकलगुणरत्नसमूहस्य, प्रभवशैलं सुन्दरकन्दर्पकथानदीनाम्, सुरभिमासं वैदग्ध्यसहकारस्य, आदर्शतलं सौजन्यमुखस्य, प्रथमबीजं विद्या-

---

नाम काचित्पुण्यनदी। 'गोदा गोदावरी' इति जलकाये हेमचन्द्रः। पक्षे गां भूमिं ददातीति गोदा भूदानदक्षेत्यर्थः। **स्वरिति।** स्वर्वाहिनी सुरलोकनदी गङ्गा। पक्षे स्वर्वाहिनी स्वर्गगमनशीला, स्वर्गलोकपर्यन्तगामिनीत्यर्थः। **पुण्यसरिन्मयं** पूर्वोक्तरीत्या पुण्यनदीरूपमिव स्थितम्। विकारे स्वार्थे वा मयट्। अत्र सरित्पदं नदीनदसाधारणतया विज्ञेयम्। अत एव शोणेनेत्यस्य सांगत्यम्। श्लेषरूपकोत्प्रेक्षाणां संकरः। **आदीति।** शृङ्गारः शृङ्गाररस एव पादपः वृक्षः तस्य, आदिकन्दं मूलकन्दम्। एनमाश्रित्यैव शृङ्गाररसोत्पत्तिरित्यर्थः, शृङ्गाररसपरमालम्बनभूतमिति यावत्। अत्र परंपरितरूपकम्। एवमुत्तरत्रापि ज्ञेयम्। **रोहणेति।** सकलगुणा एव रत्नानि तेषां समूहस्य, रोहणगिरिं रत्नोत्पत्तिस्थानभूतं रोहणाख्यं पर्वतम्। 'रोहणो रत्नपर्वतः।' इति वैजयन्ती। **प्रभवेति।** सुन्दर्यः रम्याः याः कन्दर्पकथाः मन्मथप्रस्तावा एव नद्यः तासाम्, प्रभवशैलं उत्पत्तिपर्वतम्। **सुरभीति।** वैदग्ध्यं चातुर्यमेव सहकारः रसालः तस्य, सुरभिमासं वसन्तमासं वैदग्ध्योल्लासभूमिमित्यर्थः। 'सुरभिर्हेम्नि चम्पके। जातीफले मातृभेदे रम्ये चैत्रवसन्तयोः। सुगन्धौ गवि सल्लक्याम्' इति हैमः। **आदर्शेति।** सौजन्यं सुजनता तदेव मुखं वदनं तस्य, आदर्शतलं दर्पणतलम्। 'आदर्शतलं सौन्दर्यस्य' इति पाठस्तु न हृद्यः, पुनरुक्तिदूषितश्च। **प्रथमेति।** विद्याः चतुर्दश

लतानाम्, कोशगृहं महासौन्दर्यधनस्य, मूलगृहं शीलसंपदः, स्वयंवृतपतिं कीर्तेः, स्पर्धागृहं लक्ष्मीसरस्वत्योः, त्रिभुवनरमणीयाकृतिम्, कंचिद्युवानं ददर्श ।

---

अष्टादश वा विद्या एव लताः तासाम्, प्रथमबीजं आदिबीजम्। 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। अर्थशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः।' **कोशेति**। महत् अधिकं प्रशस्तं वा यत् सौन्दर्यं तदेव धनं तस्य, कोशगृहं अर्थौघस्थापनागारम्। **मूलेति**। शीलं सत्स्वभावः स एव संपत् तस्य, मूलगृहं आदिगृहं प्रधानगृहमिति यावत्। यद्वा शीलसंपदः शीलसमृद्धेः। 'आदिगृहं शीलसंपदाम्' इति पाठान्तरम्। **स्वयंवृतेति**। कीर्तेः यशसः स्त्रीलिङ्गात्तद्रूपाया नायिकायाः, स्वयंवृतपतिं आत्मना वृतः यः नायकः तम्। स्वयंवरपतिमिति पाठान्तरे स्वयंवरे वृतं पतिमिति व्याख्येयम्। **स्पर्धेति**। लक्ष्मीसरस्वत्योः श्रीवाण्योः, स्पर्धागृहं अत्राहमेव वसेयं अत्राहमेव वसेयमित्येवं संघर्षविषयीभूतं मन्दिरम्, उभयोरप्याश्रयभूतमिति यावत्। उभयोरप्येकत्र समावेशो दुर्लभ इत्यभिप्रायेण स्पर्धागृहमित्युक्तिः। तथा च कालिदासः। 'परस्परविरोधिन्योरेकसंश्रयदुर्लभम्। संगतं श्रीसरस्वत्योः सतामस्तु विभूतये।' इति। 'स्वयंवरपतिं सरस्वत्याः। स्पर्धागृहं कीर्तिलक्ष्म्योः।' इति कस्यचित्पाठस्तु नातीव हृद्यः। **त्रिभुवनेति**। त्रयाणां भुवनानां समाहारः त्रिभुवनम्। पात्रादित्वान्न स्त्रीत्वम्। त्रिभुवनेऽपि रमणीया मनोहारिणी आकृतिः स्वरूपं यस्य तं तथोक्तम्। शिवरामस्तु 'त्रिभुवनविलोभनीयाकृतिम्' इति पाठमभ्युपगम्य 'त्रिभुवने त्रिभुव-

स चिन्तामणिनाम्नो राज्ञस्तनयः कन्दर्पकेतुरिति स्वप्न एव तन्नामादिकमशृणोत् । अनन्तरम् 'अहो प्रजापते रूपनिर्माणकौशलम् । मन्ये, स्वस्यैव नैपुण्यस्यैकत्र दर्शनोत्सुकमनसा वेधसा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयमिति; अन्यथा कथमिवास्य कान्तिविशेष ईदृशो

---

नस्य वा विलोभनीया विलोभनकर्त्री आकृतिर्यस्य तम् । कर्तर्यनीयर्' इति व्याचष्टे ।

**स इति** । स्पष्टम् । **अनन्तरमिति** । अत्र 'अहो' इत्यारभ्य 'देवेन्द्रासक्तचित्ता बभूव' इत्यन्तं वासवदत्तायाश्चिन्ताप्रकाराभिलापः । रूपस्य सौन्दर्यस्य, धर्मिणो धर्मेण व्यपदेशेन रूपवतो वस्तुनो वा निर्माणकौशलं सृष्टिसामर्थ्यम् । अहो आश्चर्यकरम् । **मन्य इति** । स्वस्य आत्मनः स्वकीयस्य वा । एकत्र एकस्मिन्नधिकरणे, दर्शने उत्सुकं साभिलाषं मनो यस्य तेन दर्शनोत्सुकमनसा; स्वकीयं सृष्टिचातुर्यमेकत्र दिदृक्षमाणेनेत्यर्थः । **वेधसा** ब्रह्मणा । **जगत्त्रयेति** । जगत्त्रयसमवायिनः त्रिषु लोकेषु संगताः विद्यमानाः ये रूपपरमाणवः सौन्दर्यप्रकृतिभूताः परमाणवः तान् । 'स्वस्यैव नैपुण्यस्य सौन्दर्यदर्शनोत्सुकमनसा' इति शिवरामधृतः पाठः । अत्र मन्य इति केवलसंभावनामात्रपरम् । उत्प्रेक्षाव्यञ्जकमिदमिति शिवरामस्तु चिन्त्यः । 'सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव' इति कुमारसंभवः । 'रूपोच्चयेन विधिना मनसा कृता नु' इति शाकुन्तलम् । 'तस्याः सखे नियतमिन्दुकलामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः'

भवति । वृथैव दमयन्ती नलस्य कृते वनवासवैशसमवाप । मुधैवेन्दुमती महिष्यप्यजानुरागिणी बभूव । विफलमेव

---

इति भवभूतिः । **ईदृशः** अयमिव पश्यति ज्ञानविषयो भवतीति विग्रहः । अयमिव दृश्यते इति केचित् । **वृथैवेति** । व्यर्थमित्यर्थे वृथेत्यव्ययम् । दमयन्ती कुण्डिननगराधिपभीमराजपुत्री । नलस्य चन्द्रवंश्यस्य राज्ञः । कृते इत्यव्ययं तादर्थ्ये । 'न लोकव्यय—' इति निषेधस्य कारकषष्ठीविषयत्वादत्र शेषे षष्ठी निर्बाधा । 'अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयमिति कोशसारः' इति शिवरामः । **वनवासवैशसं** वनवासेन जातं वनवासरूपं वा वैशसं महद्दुःखम् । 'वैशसं स्यान्महद्दुःखम्' इति वैजयन्ती । कन्दर्पकेत्वपेक्षया तस्य हीनरूपत्वात्तदर्थं दमयन्त्याः क्लेशोऽस्थानपतित इति भावः । एवमेवोत्तरत्रापि । नलः कश्चित्तृणविशेषः, तदर्थं क्लेशसहनमिति महदिदं परिहासस्थानमित्यपि प्रतीयते । **मुधैवेति** । मुधा व्यर्थम् । **महिषी** कृताभिषेका देवी, सैरिभस्त्री च । अजः दशरथपिता राजा, छागश्च । सैरिभ्याः छागानुरागो विरुद्ध इति विरोधमिमं द्योतयत्यपिकारः । 'अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।' 'महिषी नृपयोषिति । सैरिभ्यामोषधीभेदे' इति हैमः । 'अजस्येन्दुमत्यपेक्षया हीनरूपत्वादिति भावः । तथा च कालिदासः । कुलेन कान्त्या वयसा गुणेन गुणैश्च तैस्तैर्विनयप्रधानैः । त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन । इत्यत्रात्मनस्तुल्यमित्यनेनोपमानकल्पनेनाख्या अधिकगुणत्वप्रतिपादनात् । अत एव रत्नं काञ्चनेन समागच्छत्विति संगच्छते । कन्दर्पकेत्वपेक्षयाजादीनां कुरूपत्वमिति तासां तेष्वनुरागो वृथैवेति तु स्पष्टमेव । महिष्याः सैरिभ्याः अजे छागेऽनुरागो विरोधाभासः । एतन्मूलकोऽपि

दुष्यन्तस्य कृते दुर्वासस: शापमनुबभूव शकुन्तला। निरर्थकमेव मदनमञ्जरी नरवाहनदत्तं चकमे। निष्कारणमेव ऊरुगरिमनिर्जितरम्भा रम्भा नलकूबरमचीकमत। व्यर्थमेव धूमोर्णा स्वयं स्वयंवरार्थमागतेषु देवगणेषु धर्मराजमाचकाङ्क्ष। निष्प्रयोजनमेव ऋद्धिर्गन्धर्वयक्षेषु कुबेरमाससाद। अहेतुकमेव पुलोमतनया देवेन्द्रासक्तचित्ता बभूव।' इति बहु-

---

परिहासः। यद्यप्यजवरणसमये इन्दुमत्या न महिषीत्वं तथापि वासवदत्ता परिहासदशायां तत्सत्त्वेन न काप्यनुपपत्तिः।' इति शिवरामः। **विफलमेवेति**। दुर्वाससः, शापं 'विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम्। स्मरिष्यति त्वां न स बोधितोऽपि सन्कथां प्रमत्तः प्रथमं कृतामिव।' इत्येवं रूपम्। अयं च शापवृत्तान्तः कालिदासोपक्रममित्यनेन तदनुवादेनास्य कवेः कालिदासपरभावित्वं संभाव्यते। **निरर्थकमिति**। मदनमञ्जरी कलिङ्गसेनायाः पुत्री मदनमञ्चुकापरनामधेया युवतिः। **नरवाहनदत्तं** उदयनपुत्रं विद्याधरचक्रवर्तिनम्। चकम इति कामयतेः 'आयादयः—' इति णिङभावे लिटि रूपम्। **निष्कारणमिति**। ऊर्वोः सक्थ्नोः गरिम्णा गौरवेण निर्जिता रम्भा कदली यया सा तथोक्ता। **रम्भा** तन्नाम्नी काचिदप्सराः। **नलकूबरं** कुबेरपुत्रम्। अचीकमत कामयते स्म। कामयतेर्लुङि णिङ्पक्षे 'णिश्रि—' इति चङि द्वित्वे 'सन्वल्लघुनि—' इति सन्वद्भावे 'सन्यतः' इति अभ्यासाकारस्येकारे 'दीर्घो लघोः' इति दीर्घः। **देवगणेषु** देवगणाननादृत्य। 'षष्ठी चानादरे' इति सप्तमी। **धर्मराजं** यमम्। **कुबेरं** यक्षराजम्। कुत्सितं बेरं शरीरं यस्य तमिति विग्रहेणार्थान्तरप्र-

विधं चिन्तयन्ती; विरहमुर्मुरमध्यमधिरूढेव, मदनदावाग्निशिखाकबलितेव, वसन्तकालाग्निगृहीतेव, दक्षिणमारुतरुद्रपावकग्रस्तेव, उन्मादपातालगृहं प्रविष्टेव, शून्यकरणग्रामेव वर्तमाना; हृदये विलिखितमिव, उत्कीर्णमिव, प्रत्युप्तमिव,

---

तील्या परिहासश्च। **पुलोमतनया** इन्द्राणी । **विरहेति**। विरहः पूर्वानुरागविप्रलम्भ एव मुर्मुरः तुषानलः तस्य मध्यं अधिरूढा प्रविष्टेव । 'मुर्मुरस्तु तुषानलः ।' इति वैजयन्ती । **मदनेति** । मदनः मन्मथ एव दावाग्निः वनाग्निः तस्य शिखाभिः ज्वालाभिः कबलिता ग्रस्तेव । **वसन्तेति** । वसन्त एव कालाग्निः प्रलयानलः तेन गृहीतेव । **दक्षिणेति** । दक्षिणमारुतः मलयानिल एव रुद्रपावकः शिवनेत्राग्निः तेन ग्रस्ता निगीर्णेव । 'रुद्रपावकः रुद्रकोपाग्निः' इति कश्चित् । **उन्मादेति** । उन्मादः चित्तविभ्रम एव पातालगृहं तत् प्रविष्टेव । 'उन्मादश्चित्तविभ्रान्तिर्वियोगादिष्टनाशतः । वियोगजे तु चेष्टाः स्युर्धावनं परिदेवनम् । असंबद्धप्रलपनं शयनं सहसोत्थितिः । अचेतनैः सहालापो निर्निमित्तास्मितादयः ।' इति सुधाकरः। **शून्येति** । शून्यः स्वस्वविषयग्रहणासमर्थः करणानां इन्द्रियाणां ग्रामः समूहः यस्याः सा तादृशी । अत्रेवकारः कथंचिद्योज्यः । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः ।' इति विश्वः । 'ग्रामशब्दः पाटवेऽपि दृश्यते' इति कश्चित् । 'शून्यकरणग्रामे हृदये' इति शिवरामपाठः । अत्र प्रकरणे प्रायेण शिवरामपाठो न हृद्यः । **विलिखितं** रेखारूपेण कृतावयवसंस्थानम् । **उत्कीर्णं** टङ्केन परितक्ष्य शिलापुत्रिकावदाकारमापादितम् । **प्रत्युप्तं** अङ्गुलीयकादिषु मण्यादिवदर्धरोपितं यथा तथा घटितम् । **कीलितं** दारुद्वयवदयःशलाकया निबिडदृढमुभयत्रानुवृत्ततया प्रोतम् ।

कीलितमिव, निगलितमिव, वज्रलेपघटितमिव, अस्थिपञ्जरप्रविष्टमिव, मर्मान्तरस्थितमिव, मज्जारसशबलितमिव, प्राणपरीतमिव, अन्तरात्मानमधिष्ठितमिव, रुधिराशये द्रवीभूतमिव, पललसंविभक्तमिव, कन्दर्पकेतुं मन्यमाना; उन्मत्तेव,

---

**निगलितं** शृङ्खलया संयतम् । **वज्रेति** । वज्रं नाम गुडमाषरसादिद्रव्यभाविता सुधा, तस्या लेपेन घटितं संयोजितम् । वज्रलेपेन घटितं हि वस्तु न कदापि ततो विश्लिष्यत इति सुप्रसिद्धम् । वज्रकरणरीतिश्च बृहत्संहितातोऽवगन्तव्या । **अस्थीति** । अस्थिपञ्जरं पञ्जराकारं कङ्कालसंनिवेशं प्रविष्टः तमिव । **मर्मेति** । मर्मणां जीवस्थानानां अन्तरं मध्यं अवकाशो वा । 'जीवस्थानं भवेन्मर्म' इति वैजयन्ती । **मज्जेति** । मज्जा नाम अस्थिमध्यस्थस्नेहविशेषः । 'अस्थि यत्स्वाग्निना पक्कं तस्य सारो द्रवो घनः । यः स्वेदवत्पृथग्भूतः स मज्जेत्यभिधीयते ।' इति भावप्रकाशः । मज्जाशब्दः आकारान्तो नकारान्तश्च । तथा चामरटीकायां भरतः । 'लज्जावद्राजवन्मज्जा मांससारास्थिसारयोः ।' इति । तद्रसेन शबलितः मिश्रितः तमिव । **प्राणेति** । प्राणेन प्राणवायुना प्राणैः असुभिर्वा परीतं व्याप्तम् । **अन्तरिति** । अन्तरात्मानं जीवात्मानं मनो वा । अधिष्ठितं अधिष्ठाय स्थितम् । **रुधिरेति** । रुधिराशयः रक्तनिवासस्थानभूतः कोशः तत्र, द्रवीभूतं रुधिरैः सहैवैक्यमापन्नम् । **पललेति** । पललेन मांसेन सह संविभक्तं प्राप्तसंविभागम् । 'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ।' इति मालतीमाधवम् । **उन्मत्ता**

अन्धेव, बधिरेव, मूकेव, शून्येव, निरस्तेन्द्रियग्रामेव, मूर्च्छागृहीतेव, ग्रहग्रस्तेव, यौवनसागरतरलतरङ्गपरंपरापरिगतेव, रागरज्जुभिः परिवारितेव, कन्दर्पकुसुमबाणैः कीलितेव, शृङ्गारभावनाविषरसघूर्णितेव, रूपपरिभावनाशल्यकीलितेव, मलयानिलापहृतजीवितेव अवन्ती; 'हा प्रिये सख्यनङ्ग-

---

भ्रान्ता । **बधिरा** श्रवणेन्द्रियविकला । **शून्या** सर्वज्ञानविहीना केवलशरीरधारणमात्रवती । **निरस्तेति** । निरस्तः सर्वात्मना अभावमनुप्राप्तः इन्द्रियग्रामः यस्याः सा तथोक्ता । शून्यकरणग्रामेवेति पूर्वोक्ते तत्तदिन्द्रियाणां ग्रहणासामर्थ्यं विवक्षितम्, प्रकृते तु सर्वात्मना तेषामभाव इति न पौनरुक्त्यमित्याहुः । ईदृशे निरर्गलनिर्गलति शब्दप्रवाहे पुनरुक्त्यादिचिन्ता न रसिककृत्यमिति परे । **मूर्च्छा** 'आपद्भीतिवियोगाद्यैर्मोहश्चित्तस्य मूढता' इत्युक्तलक्षणो मोहः । **ग्रहेति** । ग्रहैः भूतादिभिः ग्रस्ता आविष्टा । **यौवनेति** । यौवनं तारुण्यमेव सागरः समुद्रः तस्य तरलानां चञ्चलानां तरङ्गाणां वीचीनां परंपराभिः परिगता परिवृता । **रागेति** । रागः अनुरागः स एव रज्जवः पाशाः ताभिः । रागाः मनोरथा एव रज्जव इति वा । **शृङ्गारेति** । शृङ्गारभावना शृङ्गाररसचिन्तनं सैव विषरसः गरलं तेन घूर्णिता संभ्रान्तचित्ता । 'घुणघूर्ण भ्रमणे' 'घूर्णिता विषवेगविवर्तितशरीरा' इति केचित् । **रूपेति** । रूपं कन्दर्पकेतुसौन्दर्यं तस्य परिभावनया अनुध्यानेनैव शल्येन बाणाग्रेण बाणेन शङ्कुना वा कीलिता प्रोता । 'क्ष्वेडाशङ्कुशरे शल्यम्' इति रभसः । **हेति** । इत आरभ्य 'मम प्राणाः' इत्यन्तो वासवदत्ताया भाषणप्रकारः । अनङ्गलेखे इत्यादिकं तत्तत्सखीनां संबोधनम् । हा इति विषादे । 'हा विषादे च शोके

लेखे, वितर हृदये मे पाणिपद्मम्, दुःसहो विरहसंतापः । मुग्धे मदनमञ्जरि, सिञ्चाङ्गानि चन्दनवारिणा । सरले वसन्तसेने, संवृणु केशपाशम् । तरले तरङ्गवति, विकिराङ्गेषु कैतकधूलिम् । वामे मदनमालिनि, कलय वलयं शैवालकलापेन । चपले चित्रलेखे, चित्रपटे विलिख चित्तचोरं जनम् । भामिनि विलासवति, विक्षिपावयवेषु मुक्ताचूर्ण-

---

च कुत्साद्दुःखार्थयोरपि ।' इति मेदिनी । 'अनङ्गस्य लेखा यस्यां सा ईषदुद्भूतमन्मथे । विरहवेदनानभिज्ञतया शिक्षणं तदुपचारेषु ' इति शिवरामः । **वितर** देहि निक्षिपेत्यर्थः । **मुग्धे** सुन्दरि यौवनमध्यस्थे वा । 'मुग्धः सुन्दरमूढयोः ।' इति रभसः । 'मुग्धा यौवनमध्यस्था' 'मुग्धे अनभिज्ञे' इति शिवरामः । **सरले** दाक्षिण्यवति । 'सरले मन्मथविकारानभिज्ञे' इति शिवरामः । **केशपाशं** केशसमूहम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।' इत्यमरः । **संवृणु** बधान । **तरले** चञ्चलचित्ते । विकिर विक्षिप । **वामे** सुन्दरि । 'विपरीतक्रियाकारिणि' इति शिवरामः । **शैवालकलापेन** जलनीलीसमूहेन । **वलयं** कङ्कणम् । **कलय** कुरु । 'वीजय' इति क्वचिद्दृश्यमानः पाठस्तु वक्ष्यमाणेन पुनरुक्तः । यद्वा ईदृशे विषये पुनरुक्तिरपि तद्विषयपोषकत्वात्प्रत्युत काव्यगुण एवेति बोध्यम् । **चपले** चञ्चलस्वभावे । **चित्रपटे** चित्रलेखनार्हे पटे । 'विश्वचित्रं चित्रपटमालेख्यं च समं त्रयम्' इति केचित् । **चित्तचोरं** हृदयापहारिणम् । **भामिनि** कुपिते । 'कोपना सैव भामिनी' इत्यमरः । 'भाविनि भावाभिज्ञे' इति शिवरामः । **मुक्ताचूर्णं** मौक्तिक-

निकरम् । रागिणि रागलेखे, स्थगय नलिनीदलनिचयेन पयोधरभारम् । सुकान्ते कान्तिमति, मन्दं मन्दमपनय बाष्पबिन्दून् । यूथिकालंकृते यूथिके, संचारय नलिनीदलतालवृन्तेनार्द्रवातान् । एहि, भगवति निद्रे, अनुगृहाण माम् । धिक्, इन्द्रियैरपरैः, किमिति लोचनमयान्येव न कृतान्य-

क्षोदः । **विक्षिप** विकिर । **स्थगय** आच्छादय । **दलानि** पत्राणि । **अपनय** मार्जय । **बाष्पबिन्दून्** अश्रुकणान् । बिन्दूनिति बहुवचनेन तेषामविच्छिन्नधारत्वमनवरतप्रसृतत्वं च द्योत्यते । 'तथा च भरतः । बाष्पो नामाश्रुणः पूर्वमसौ संजायते त्रिधा । निमित्तत्रयसंबन्धादानन्देर्ष्यार्तिसंभवः । आनन्दे विलुठन्भवतीर्ष्यायां सतरङ्गितायासः । आर्तावजस्राविकलबद्धवहुलबिन्दुसन्दर्भः । इति ' इति शिवरामः । **यूथिकालंकृते** मागधीकुसुमभूषिते । **नलिनीति** । नलिनीदलं कमलिनीपत्रमेव तालवृन्तं व्यजनं तेन । **आर्द्रवातान्** शीतलपवनान् । **संचारय** उत्पादय, तेन वीजयेत्यर्थः । 'किं शीतलैः क्लमविनोदिभिरार्द्रवातान्संचारयामि नलिनीदलतालवृन्तैः ।' इति शाकुन्तलम् । अत्र 'कदलीदलतालवृन्तेन' इति पाठान्तरम् । **अनुगृहाण** प्रसीद । पूर्वं तत्संबन्धादेव कन्दर्पकेतुदर्शनमिति पुनरपि निद्राप्रार्थनमिति बोध्यम् । **धिगिति** । अस्याध्याहृते तमित्यत्रान्वयः । येन विधिना ममाङ्गानि लोचनमयान्येव न कृतानि, तं विधिं धिक् तस्य निन्द्यता स निन्द्य इत्यर्थः । इन्द्रियैरपरैरित्यनन्तरं च अलमिति शेषः । अपरैरिन्द्रियैरलं अपरैरिन्द्रियैः साध्यं न किमप्यस्ति, अपराणीन्द्रियाणि मा सन्त्वित्यर्थः । 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' इति साधनक्रियापेक्षं कर्तृत्व-

ङ्गानि विधिना। भगवन्कुसुमायुध, तवायमञ्जलिः, अनुवशो भव भाववति मादृशे जने । मलयानिल सुरतमहोत्सवदी-

---

मादाय तृतीया। ये तु धिक्छब्दस्य इन्द्रियैरपरैरित्यत्रान्वयमभ्युपगम्य, लोचनव्यतिरिक्तानामिन्द्रियाणां निष्फलत्वात्तेषां निन्द्यतेत्यर्थ इति व्याकुर्वन्ति, तेषां 'उभसर्वतसोः—' इति प्रमाणलङ्घनम्, इन्द्रियैरित्यत्र तृतीयोपपत्तिदौस्थ्यं च दुर्निवारम्। 'निरङ्कुशाः कवयः' इति वा समाधेयम्। **किमिति** कुतः। विधिशब्दश्च तस्य तथा कर्तुं शक्तिरस्तीति द्योतयति। अनेन च तदालिङ्गनाद्यभजमानानां भुजादीनां निन्दा, आलिङ्गनाद्यभिलाषश्च सूच्यते। **भगवन्निति**। भगवन् षाड्गुण्यपरिपूर्ण। तत्प्रसादनाय सान्त्वनोक्तिरियम्। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा।' **अञ्जलिः** संयुतौ करौ। 'तौ युतावञ्जलिः पुमान्।' इत्यमरः। **भाववति** अभिप्रायवति अनुरक्त इत्यर्थः। 'रागाविष्टं मनोभावः' इति केचित्। **अनुवशः** अनुकूलः। भव, मादृशाननुरक्तान् जनान्मा प्रहार्षीरित्यर्थः। 'अनुकूलस्त्वनुवशो विधेयोऽनुगुणोऽपि च।' इति वैजयन्ती। शिवरामस्तु 'अनुचरो भव भाववति तादृशे जने' इति पाठमभ्युपेत्य 'भाववति अभिप्रायाभिज्ञे तादृशे जनेऽनुचरो भव तस्य सेवको भवेत्यर्थः। यथा मां पीडयसि तथा तमपि पीडयेति त्वतिवात्सल्यादयोग्यत्वाच्च नाभ्यधायि। संबन्धं विना गुणाविष्काराभावेन अल्परूपत्वेन हीनत्वादनुचरत्वोक्तिः' इति व्याचष्टे। 'अञ्जलिः रूपशोभां भावयेति मादृशे जने' इति क्वचित्तालपत्रपुस्तके पाठः। **मलयेति**। सुरतमेव महोत्सवः हर्षजनकत्वात् तस्य दीक्षा व्रतं नियमेनानुष्ठानमित्यर्थः। तत्र गुरो पुरोहित तत्प्रवर्तके-

क्षागुरो, वह यथेष्टम्, अपगता मम प्राणाः ।' इति बहुविधं भाषमाणा वासवदत्ता सखीजनेन समं संमुमूर्च्छे ।

**अनन्तरं परिजनप्रयत्नोच्छ्वसितजीविता सती; क्षणमति-शिशिरघनसाररसाकुलनिम्नगाकूलपुलिने, क्षणमतितुहिनम-**

---

त्यर्थः । मलयानिल दक्षिणमारुत । यथेष्टं वह स्वच्छन्दं वाहि मत्प्राणाप-हाररूपप्रयोजनस्य सिद्धत्वात्त्वद्वानं सफलमेवेति कृतार्थतामनुभवन् यथे-च्छं प्रसरेति भावः । आमन्त्रणे लोट् । 'सुरत समुत्कण्ठादीक्षागुरो' इति शिवरामपाठः । 'यथेच्छं वह । यथेष्टवहनात्सोऽप्युत्कण्ठितो भविष्यतीत्य-भिप्रायात्प्रार्थना । प्रार्थनायां लोट्' इति शिवरामस्तूत्तरवाक्यानतुगुणः । 'अपगतदाक्षिण्य दक्षिणानिलहतक पूर्णास्ते मनोरथाः । कृतं कर्तव्यम् । वहेदानीं यथेष्टम्' इति कपिञ्जलविलापे कादम्बरी । अपगता इत्यत्र वर्तमाने क्त इति शिवरामः । 'मा वह यथेष्टम्' इति पाठस्तालपत्रपुस्तके-षूपलभ्यते, स तु नातीव हृद्यः । **संमुमूर्च्छे** संमूर्च्छितवती ।

**अनन्तरमिति** । परिजनप्रयत्नेन परिचारिकाणां शैत्योपचारादिरूपेणो-द्यमेन उच्छ्वासितं उत्पन्नं जीवितं यस्याः सा तादृशी सती । **क्षणमिति** । क्षणं अतिशिशिरघनसाररसाकुलनिम्नगाकूलपुलिन इत्येवं सखीजनेन नी-यमानेति संबन्धः । पूर्वपूर्वेषु संतापानिवृत्तेरुत्तरोत्तरस्वीकरणम् । तत्र सर्वत्रापि संतापानिवृत्तिरिति संतापातिशयस्य परा काष्ठा प्रतिपादिता भवति । अत एव च वक्ष्यति 'प्रलयकालोदित' इत्यादि । क्षणमित्यत्र अत्यन्तसंयोगे द्वितीया । **अतिशिशिरेति** । अतिशिशिरेण घनसार-रसेन कर्पूररसेन आकुलायाः संपूर्णायाः निम्नगायाः नद्याः कूलपुलिने

लयजरससारसरित्परिसरे, क्षणमालोहितकनकारविन्दकदम्बपरिवारितसरस्तटीचन्दनविटपिच्छायासु, क्षणमनिलोल्लसितदलेषु कदलीकाननेषु, क्षणं कुसुमप्रवालशय्यासु, क्षणं नलिनीदलसंस्तरेषु, क्षणं तुषारसंघातशिशिरिताशिलातलेषु परिजनेन नीयमाना; प्रलयकालोदितद्वादशरविकिरणकला-

---

तीरसैकतप्रदेशे । **अतितुहिनेति** । अतितुहिनः अतिशीतलः मलयजरसः चन्दनद्रवः तेन साराया श्रेष्ठायाः सरितः नद्याः परिसरे समीपे । **आलोहितेति** । आलोहितानि आरक्तानि । परिवारिता व्याप्ता । विटपिनः वृक्षाः । **अनिलेति** । अनिलेन वायुना उल्लसितानि कम्पितानि दलानि पत्राणि येषां तेषु तथोक्तेषु । **प्रवालाः** पल्लवाः । **संस्तराः** आस्तरणानि । **तुषारसंघातः** हिमसमूहः, कठिनीभूय घटितं हिमं वा । एतत्समानतात्पर्यकाणि वाक्यानि उत्तरकादम्बर्यां द्रष्टव्यानि, विस्तरभिया न लिखितानि । **प्रलयेति** । प्रलयकाले कल्पान्तकाले उदिताः ये द्वादश रवयः सूर्याः तेषां किरणकलापः किरणसमूहः तद्वत् तीव्रः दुःसहः यः विरहानलः तेन दह्यमानां ताप्यमानाम् । द्वौ च दश चेति, द्व्यधिका दशेति वा विग्रहे 'द्व्यष्टनः संख्यायाम्...' इति आत्वम् । 'अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः । ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत । धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंशुरेव च । भगो विवस्वान्पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।' इति भारतम् । विष्णुपुराणादौ दृश्यमानो नामभेदस्तु कल्पभेदात्समाधेयः । 'यावत्प्राणिमि, तावदस्य कल्पान्तोदितद्वादशदिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि' इति कादम्बरी ।

पतीव्रविरहानलदह्यमानामतिकृशां विप्राणामिव तनुं बिभ्रती सा, 'प्रचलदमन्दमन्दरान्दोलितदुग्धसिन्धुतरलतरङ्गच्छटाधवलहासच्छुरिताधरपल्लवं तन्मुखारविन्दम्, द्विजकुलमिव श्रुतिप्रणयि तदीक्षणयुगलम्, सहजसुरभिमुखपरिमलमाघ्रातुकामेव दूरविनिर्गता तन्नासावंशलक्ष्मीः, कलङ्कमुक्ते-

---

'प्रलय...दह्यमाना' इति पाठान्तरे तु वासवदत्ताया विशेषणं तत्। तालपत्रादर्शेषु तु 'दह्यमानां' इत्येव दृश्यते। **विप्राणामिव** प्राणरहितामिव। 'अतिकृशप्राणामिव' इति पाठान्तरं तु इवकारस्वारस्यरहितम्। **तनुं** शरीरम्। **प्रचलदिति**। तन्मुखारविन्दं तस्य कन्दर्पकेतोः मुखपङ्कजम्। प्रचलन् परिभ्रमन् यः अमन्दः महान् मन्दरः मन्दरपर्वतः तेन आन्दोलितस्य मथितस्य दुग्धसिन्धोः क्षीरसमुद्रस्य तरलतरङ्गच्छटावत् चञ्चलवीचिनिचयवत् धवलेन हासेन स्मितेन च्छुरितं रूषितं अधरपल्लवं किसलयसदृशः अधरः यस्मिंस्तत् तादृशम्। हासस्याधरच्छुरणमात्रोक्तेरस्योत्तमत्वं व्यज्यते। तथा च भरतः। 'ईषद्विहसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः। अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्।' इति। **द्विजकुलं** ब्राह्मणसमूहः, ब्राह्मणवंशो वा। **श्रुतीति**। श्रुत्योः कर्णयोः प्रणयि परिचितं कर्णान्तविश्रान्तमित्यर्थः। पक्षे श्रुतौ वेदे प्रणयि आसक्तम्। 'श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्।' इति मेदिनी। **सहजेति**। सहजसुरभि निसर्गसौरभ्यवत् यत् मुखं वदनं तस्य परिमलं सुगन्धम्। सहजत्वस्य सौरभ्यान्वयेऽपि महाकवीनामेवं प्रयोगो बहुश उपलभ्यते। **आघ्रातुकामा** आघ्रातुं कामः अभिलाषो यस्याः सा। 'तुं काममनसोरपि' इति तुमो मकारस्य लोपः। **नासावंशः** नासा-

न्दुकलांकलापकोमला पीयूषफेनपटलपाण्डुरा तद्विजपङ्क्तिः, अदृष्टचरमनङ्गातिशायि तद्रूपम्, तानि धन्यानि स्थानानि, ते जनपदाः पुण्याः, तानि नामाक्षराणि सुकृतभाञ्जि, यान्यमुना परिष्कृतानि' इति मुहुर्मुहुः परिभावयन्ती; दिक्षु विलिखितमिव, नभस्युत्कीर्णमिव, लोचने प्रतिबिम्बितमिव, चित्रपटे पुरो दर्शितमिव, तमितस्ततो विलोकयन्ती व्यतिष्ठत ॥

---

दण्डः । **कलङ्केति** । कलङ्केन मुक्ता या इन्दुकला तस्याः कलापः पङ्क्तिः तद्वत् कोमला मनोहरा । किंचिदप्रवक्रिमतानवादिसिद्ध्यर्थं कलापरिग्रह इति बोध्यम् । **पीयूषफेनपटलपाण्डुरा** अमृतडिण्डीरपिण्डधवला । **द्विजाः** दन्ताः । 'दन्तविप्राण्डजा द्विजाः ।' इत्यमरः । **अदृष्टेति** । पूर्वं दृष्टं दृष्टचरं न दृष्टचरं अदृष्टचरम् । 'भूतपूर्वे चरट्' । **अनङ्गेति** । अनङ्गं मन्मथं तद्रूपमित्यर्थः अतिशेते अतिक्रामतीति तादृशम् । **जनपदाः** जनानां पदानि निवासस्थानानि देशा इत्यर्थः । **नामाक्षराणि** नामधेयघटका वर्णाः । सुकृतं पुण्यं भजन्तीति सुकृतभाञ्जि । **परिष्कृतानि** भूषितानि । 'संपरिभ्यां करोतौ भूषणे' इति सुटि 'परिनिविभ्यः—' इति षत्वम् । यान्यमुना परिष्कृतानीत्यस्य 'धन्यानि तानि स्थानानि' इत्यादौ सर्वत्र यथायथं लिङ्गविपरिणामेनान्वयः । **परिभावयन्ती** चिन्तयन्ती । **नभसि** आकाशे । **उत्कीर्णं** प्रतिमारूपेण टङ्कितम् । कीर्णमिति पाठान्तरे विक्षिप्तमित्यर्थः । **प्रतिबिम्बितं** प्रतिफलितम् । **चित्रेति** । चित्रपटे विलिख्य पुरो दर्शितं पुरस्ताद्दर्शितमिव । **इत-**

**स्ततः** पुरतः पश्चात् पृष्ठतः अन्तर्बहिश्चेत्यर्थः । एष हि भावनाप्रकर्षस्य महिमा, यच्चिन्त्यमानं रूपं साक्षादेव भावयितुः पुरस्तादुपस्थाप्यत इति भावुकाः । तथा च भवभूतिः । 'पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् ।' इति । अन्योऽपि कश्चित् 'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा' इति । 'अननुभूतमपि संकल्पेनावलोक्यते । तदुक्तम् । कामक्रोधभयोन्मादाच्चौरसर्पाद्युपद्रवात् । असत्यानपि पश्यन्ति पुरतोऽवस्थितानिव । इति' इति शिवरामः । **व्यतिष्ठत** स्थितवती । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ।

अत्रेदमवधेयम् । 'रात्रौ स्वप्ने कंचिद्युवानं ददर्श' इत्येतदारभ्य 'विलोकयन्ती व्यतिष्ठत' इत्यन्तेन पूर्वरागविप्रलम्भशृङ्गारस्य अङ्कुरितत्वपल्लवितत्वकुसुमितत्वफलितत्वहेतवो मतभेदेन दश द्वादश वा मन्मथावस्था यथासंभवमत्र निरूपिताः । तथा हि । 'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते । श्रवणं तु भवेत्तत्र दूतवन्दिसखीमुखात् । इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ।' इत्युक्तरीत्या स्वप्नदर्शनवर्णनेन चक्षुःप्रीतिः, तन्मूलको मनःसङ्गश्च कथितौ । अनुमेयौ चैतावुत्तरदशानुरूपवर्णनेन । चक्षुःप्रीतिर्हि प्रथमं मूलमुत्तरावस्थानाम् । तथा चोच्यते । 'चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापचापलानि' इति । 'अहो' इत्यादिना प्रलापः । 'विरहमुर्मुर—' इत्यादिना संज्वरः, 'हृदये विलिखितमिव' 'प्रचलद—' इत्यादिना संकल्पः, 'सख्यनङ्गलेखे' इत्यादिना लज्जात्यागः, 'भगवति निद्रे' इत्यादिना जागरः, 'मलयानिल वह यथेष्टम्' इत्यादिना अरतिः, मरणं च, अनेन 'उन्मत्तेव' इत्यादिना च उन्मादः, 'सखीजनेन संमुमूर्च्छे' इत्यनेन मूर्च्छा, ततश्च

मरणदशासध्रीचीना मरणपदाभिधेया अवस्था, 'अतिकृशाम्' इत्यनेन कार्श्यं च प्रतिपाद्यते। क्रमस्तु न विवक्षितः। अत एव च कासांचन दशानां पुनः पुनरप्युपन्यासः। तत्रापि काश्चन स्वशब्दोपात्ताः, अन्याश्चानुभावमुखेन निबद्धाः। द्वादशावस्थाश्चैवं विद्यानाथेन निरूपिताः। 'चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽथ प्रलापिता। जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः। उन्मादो मूर्च्छनं चैव मरणं चरमं विदुः। अवस्था द्वादश मताः कामशास्त्रानुसारतः।' इति। एतासां लक्षणान्यपि तेनैवोक्तानि। 'आदराद्दर्शनं चक्षुःप्रीतिरित्यभिधीयते। मनःसङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः। संकल्पो नार्थविषयो मनोरथ उदाहृतः। प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः। जागरस्तु विनिद्रत्वं कार्श्यमङ्गस्य तानवम्। अन्यत्राप्रीतिररतिः। व्रीडात्यागोऽथ निर्लज्जा तापाधिक्यं ज्वरो मतः। उन्मादस्तुल्यवर्तित्वं चेतनाचेतनेष्वपि। मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः।' इति। भावप्रकाशकारस्तु 'दशधा मन्मथावस्था भवेद्द्वादशधापि वा। इच्छोत्कण्ठाभिलाषश्च चिन्तास्मृतिगुणस्तुती। उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च। जाड्यं मरणमित्याद्ये द्वे कैश्चिद्वर्जिते बुधैः।' इत्याह। 'अभिलाषः स्पृहा, चिन्ता प्राप्त्युपायादिचिन्तनम्। द्वेषो यत्रान्यकार्येषु तदंकाग्रं च मानसम्। श्वासैर्मनोरथैश्चापि चेष्टास्ताः स्मृतिरुच्यते। सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा। इति वाणी भवेद्यत्र तदुक्तं गुणकीर्तनम्। यस्मिन्रम्यमरम्यं वा न च हर्षाय जायते। प्रद्वेषः प्राणितव्येऽपि स उद्वेगोऽभिधीयते। अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम्। उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि। व्याधिस्तु दीर्घनिश्वासपाण्डुताकृशतादयः। जडता हीनचेष्टत्वमङ्गानां मनसस्तथा। स्मरोत्था मरणेच्छा चेन्मृतिरित्यभिधीयते।' इत्येषां लक्षणानि। एतेषामनुभावादिकं च सुधाकरतोऽवसेयम्। यथासंभवं च का-

अथ तस्यास्तमालिका नाम शारिका तत्प्रियसखीभिः समं समालोच्य कन्दर्पकेतुभावमाकलयितुं प्रेषिता । सापि मया सार्धं प्रस्थितागता चात्रैव तरोरधस्तात्तिष्ठति ।' इत्युक्त्वा विरराम ।

अथ तच्छ्रुत्वा सहर्षं समुत्थाय मकरन्दस्तां तमालिकामाहूय विदितवृत्तान्तामकरोत् । सा तु तस्मै कृतप्रणामा तां

---

र्यमुखेनैतत्पक्षेऽपि कामदशा उन्नेयाः । परे तु 'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ।' इति पठन्ति । सर्वं चेदं सूक्ष्मया दृशा कलनीयम् ।

**अथेति** । तस्याः वासवदत्तायाः । **शारिका** पक्षिविशेषः । शुकीति केचित् । **समं** सह । सममित्यव्ययम् । समालोच्य सम्यक् बुद्ध्या निश्चित्य । 'आलोचनं तु तत्प्राहुर्यत्र बुद्ध्या निरीक्षणम् ।' इति वैजयन्ती । **भावः** अभिप्रायः, मनो वा । **आकलयितुं** ज्ञातुम् । 'कन्दर्पकेतुमालोकयितुम्' इति पाठान्तरम् । सार्धमित्यव्ययं सहार्थकम् । **अधस्तात्** अधःप्रदेशे । 'दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यः—' इत्यनेन सप्तम्यन्तादधरशब्दादस्तातिप्रत्यये 'अस्ताति च' इत्यनेन अधरशब्दस्य 'अध्' इत्यादेशः । 'षष्ठ्यतसर्थप्रत्ययेन' इति तरोरित्यत्र षष्ठी । **विरराम** विरतोऽभूत् । 'व्याङ्परिभ्यो रमः' इति तङ् । 'अस्ति मन्दर' इत्यारभ्य 'तिष्ठति' इत्यन्तं शुकस्य वचनम् ।

**अथेति** । समुत्पूर्वकात् स्थाधातोर्ल्यपि 'उदःस्था—' इति पूर्वसवर्णे

पत्रिकामुपानयत् । अथ मकरन्दस्तामादाय पत्रिकां विस्रस्य स्वयमेवावाचयत् ।

'प्रत्यक्षदृष्टभावाप्यस्थिरहृदया हि कामिनी भवति ।
स्वप्नानुभूतभावा द्रढयति न प्रत्ययं युवतिः ॥'

---

समुत्थायेति रूपम् । **पत्रिकां** वासवदत्तया लिखितप्रेषितं संदेशपत्रम् । 'निसृष्टार्था, परिमितार्था, पत्रहारी, स्वयंदूती, मूढदूती, भार्यादूती, मूकदूती, वातदूती' इत्येवं परिगणितेषु दूतीविशेषेषु इयं पत्रहारी । तदुक्तम् । 'कामिन्याः कामिनश्चापि संदेशार्थां तु पत्रिकाम् । प्रापयत्यचिरेणैतामाहुः पत्रस्य हारिकाम् ।' इति । **अवाचयत्** पठितवान् । चौरादिको वाचयतिः । 'मयि सत्येतावन्मात्रमपि प्रयासोऽस्य माभूदित्यभिप्रायात्स्वयमेवावाचयत्' इति शिवरामः ।

**प्रत्यक्षेति** । कामिनी कामयमाना तरुणी । प्रत्यक्षं यथा तथा दृष्टः ज्ञातः भावः स्वाभिलाषविषयीभूतपुरुषाभिप्रायः यया सा तादृशी सत्यपि । 'भावः मानसो विकारः । विकारो मानसो भाव इति वैजयन्ती' इति केचित् । अस्थिरं अदृढं चञ्चलं हृदयं मनः यस्याः सा तादृशी, प्रत्यक्षदृष्टोऽयं भावः किं तात्विकः, उत कापटिक इति डोलायमानहृदयेत्यर्थः । भवति । हीति प्रसिद्धौ । 'कामी स्वतां पश्यति' इति न्यायेन, अन्यविषयाणामपि चेष्टाविशेषाणां स्वोद्देश्यकत्वसंभावना न खलु न भवतीति युज्यत एव विमर्शकाले हृदयस्य डोलायितमित्येतत्तात्पर्येण कामिनीपदं प्रयुक्तम् । अत एव परिकराङ्कुरः । 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।' इति लक्षणात् । प्रत्यक्षदृष्टभावाप्येवं, किं पुनरदृष्टभावेति काव्यार्थापत्तिर्व्यज्यते । 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति तल्लक्षणम् ।

स्वप्ने अनुभूतः 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्तरीत्या तत्तरुणदर्शनेन ज्ञातः भावः यस्याः सा तादृशी । युवतिः तरुणी । प्रत्ययं विश्वासम् । न द्रढयति न दृढीकरोति । 'प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु । प्रथितत्वे च सन्नादावधीनज्ञानयोरपि ।' इति विश्वः । दृढं करोतीति विग्रहे दृढशब्दात् 'तत्करोति—' इति णिचि 'प्रातिपदिकात्—' इति इष्ठवद्भावातिदेशेन 'र ऋतो हलादेर्लघोः' इति रादेशः । अत्र बहवो भावाः प्रतीयन्ते । तथा हि । स्वप्नानुभूतभावेति स्मरणं व्यज्यते । स्वप्नानुभूतभावा युवतिरहं प्रत्ययं न द्रढयामि, परं तु वियत एव मम प्रत्ययः, स च त्वया दृढीकार्य इति प्रार्थना गम्यत इति चपलता । कुतस्त्वया न दृढीक्रियत इति विषादः । प्रत्ययदृढीकरणहेतुपरिज्ञानाभावाद्भयम् । एवं सत्यपि लेखः कथं प्रेष्यत इति शङ्का । कन्दर्पकेतुवासवदत्तादिपदप्रयोगाभावेन युष्मदस्मच्छब्दानुपादानेन चावहित्थम् । न प्रत्ययं द्रढयतीति, तद्दार्ढ्यकरणोपयोगितया न किमपि तेन कृतम् । अतश्च तच्चित्तपरिज्ञानाभावात्कथं वा तत्प्राप्तिर्भविष्यतीति चिन्ता । द्रढयति न प्रत्ययं युवतिरित्यनेन त्वया यद्यपि न प्रत्ययदार्ढ्यं कृतम् , अतस्तव हृदयं न ज्ञायते, मम तु हृदयं त्वयि साभिलाषमिति प्रतीत्या तस्यार्थस्य साक्षादनुपादानेन व्रीडा । युवतिपदेन सर्वस्यास्यानर्थस्य मूलमिदं यौवनमेवेति तदलाभदशायां यौवनं प्रत्यसूया । द्रढयति न प्रत्ययं युवतिरित्यनेन मम हृदयं साभिलाषं तव हृदयं कथमिति जिज्ञासायामौत्सुक्यम् । पुरुषहृदयपरिज्ञानाभावेऽपि, युवतिः प्रत्ययं न दृढयतीत्येव न तु शिथिलयतीति विस्मयो हासश्च । एवमन्येऽपि भावाः सुधीभिरुन्नेयाः । अत्र कन्दर्पकेतुना विभावितः, स्वप्नपदावगमितरात्रिचन्द्रोदयविजनस्थानादिभिः प्रकरणावगतवसन्तकालेन दर्शनक्रोडीकृततत्सौन्दर्यादिभिश्च उद्दीपितः, पत्रप्रेषणतदवबोधितनिश्वासादिभिरनुभावितः, विषादादिभि-

तच्छ्रुत्वा कन्दर्पकेतुरमृतार्णवनिमग्नमिव, सर्वानन्दानामुपरि वर्तमानमिवात्मानं मन्यमानो मन्दं मन्दमुत्थाय प्रसारितबाहुयुगलस्तमालिकामालिलिङ्ग । अथ तयैव च सार्धं समासीनः, 'किं करोति, किं वदति, कथमास्ते' इत्यादि सकलं वासवदत्तावृत्तान्तमपृच्छत् । तं च दिवसं तत्रैवातिवाह्य तस्मात्प्रदेशात्तया सहोच्चचाल ससुहृत्कन्दर्पकेतुः । अत्रान्तरे भगवानपि मरीचिमाली वृत्तान्तमिमं कथयितुमिव मध्यमं लोकमवततार ।

---

र्व्यभिचारितो वासवदत्तागतः पूर्वानुरागविप्रलम्भश्रृङ्गारो व्यज्यते ।

**तदिति** । अमृतार्णवः सुधापूर्णः समुद्रः । अर्णांसि जलानि अस्मिन् सन्तीत्यर्णवः । 'अर्णसो लोपश्च' इति मत्वर्थीयो वः, सकारलोपश्च । **सर्वेति** । सर्वे ये आनन्दाः तेषाम्, उपरि ऊर्ध्वभागे वर्तमानमिव सर्वविधमप्यानन्दमनुभवन्तमिवेत्यर्थः । 'प्रमोदाद्वैतस्याप्युपरि परिवर्तामह इमे ।' इति वीरचरितम् । इदं विशेषणं तालपत्रपुस्तकेषु नास्ति । 'आत्मानं कृतकृत्यं मन्यमानः' इति पाठान्तरम् । 'मग्न इव सर्वानन्दानामुपरि वर्तमानः' इति शिवरामीयः पाठः । **अतिवाह्य** यापयित्वा । **उच्चचाल** प्रस्थितवान् । **भगवानिति** । 'उत्पत्तिं च विपत्तिं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।' **मरीचिमाली** सूर्यः । **मध्यमं लोकं** भूलोकम्, भूलोकस्य स्वर्गपातालमध्यवर्तित्वान्मध्यमत्वम् । अवततार अवतीर्णः । अस्तमयसमये सूर्यस्याकाशाधोभागलम्बनं मध्यमलोकावतरणत्वेन संभाव्यते । कथयितुमिवेति फलोत्प्रेक्षा ।

अथ वासरताम्रचूडचूडाचक्राकारः, चक्रवाकहृदयसंक्रामितसन्तापतयेव मन्दिमानमुद्वहन्, अस्तगिरिमन्दारस्तबकसुन्दरः, सिन्दूरराजिरञ्जितसुरराजकुम्भिकुम्भविभ्रमं बिभ्रा-

---

**अथेति** । एतादृशः दिनमणिः अपराकूपारपयसि ममज्जेति संबन्धः । 'वासरताम्र—' इत्यादीनि दिनमणेर्विशेषणानि । **वासरेति** । वासरः दिवस एव ताम्रचूडः कुक्कुटः तस्य यत् चूडाचक्रं शिरसि स्थितश्चक्राकारो मांसखण्डः तस्य आकार इव आकारो यस्य स तथोक्तः । सूर्यस्य दिवसप्रकाशकत्वादेवं रूपकसंकीर्णोत्प्रेक्षा । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ।' इत्यमरः । 'चूडाकारः' इति, 'चूडाकारचक्रः' इति च पाठान्तरम् । **चक्रेति** । चक्रवाकानां पक्षिविशेषाणां हृदये मनसि संक्रामितः प्रापितः संतापः येन, तस्य भावेनेव । 'वा चित्त—' इति सूत्राद्वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात्संक्रामयतीत्यत्र मितां ह्रस्वो नेति वृत्तिकारः । **मन्दिमानं** अल्पतेजस्कत्वं संतापशान्तिमिति यावत् । मन्दशब्दात् 'पृथ्वादिभ्य इमनिज्वा' इति भावार्थे इमनिच् । चक्रवाकमिथुनं सायं विश्लिष्यति, आप्रभातं च विरहदुःखेन क्रन्दतीति कविसमयः । तथा च संध्यावर्णनावसरे मुरारिः । 'चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः ।' इति । भारविश्च । 'आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ।' इति । **अस्तेति** । अस्तगिरिः अस्तपर्वत एव मन्दारः तन्नामा देवतरुः तस्य स्तबकवत् गुच्छवत् सुन्दरः रम्यः । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।' इत्यमरः । **सिन्दूरेति** । सिन्दूरराजिभिः सिन्दूररेखाभिः रञ्जितः रक्ततामापादितः यः सुरराजकुम्भिनः देवेन्द्रगजस्य ऐरावतस्य

णः, ताण्डवचण्डवेगोच्चलितधूर्जटिजटाजूटमकुटबद्धबन्धुरवि-

कुम्भः शिरःपिण्डः तस्य विभ्रमं विलासं विशेषेण भ्रमं वा । **बिभ्राणः** धारयन्, तद्वद्भासमान इत्यर्थः । 'दन्तावलः करटिकुञ्जरकुम्भिपीलवः ।' इत्यभिधानचिन्तामणिः । 'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः । **ताण्डवेति** । ताण्डवे नटने यः चण्डवेगः उग्रवेगः अधिकवेग इत्यर्थः तेन उच्चलितः विश्लथः यः धूर्जटेः शिवस्य जटाजूटः जटाबन्ध एव मकुटः तस्मिन् बद्धः चूडामणित्वेन धृतः बन्धुरः मनोहरः विकटः विशालः बृहन्नित्यर्थः यः वासुकेः तन्नाम्नः सर्पस्य भोगमणिः फणारत्नं सः ताटङ्कं कर्णभूषणमिव स एव ताटङ्कमिति वा तस्य सनाभि दायादं सदृशमित्यर्थः तादृशं मण्डलं यस्य स तथोक्तः । ताण्डवचण्डवेगोच्चलितजटाजूटमकुटे बद्धः बन्धुरः विकटश्च यः वासुकिः तस्य भोगमणिताटङ्केन सनाभिमण्डलं यस्येति वा । सांप्रदायिकास्तु तादृशभोगमणेः ताटङ्कः परिणाहः । ताटङ्कोऽस्त्री परीणाहे विटङ्के कर्णवेष्टने । इत्यजय इति वदन्ति । शिवरामस्तु 'ताण्डवचण्डवेगेनोच्छलितेन जटाजूटकूटबन्धेन बन्धुरः उन्नतानतः अत एव विषमविन्यासो वासुकिस्तस्य भोगमणिः फणामणिः स एव ताटङ्कः स्त्रीणां कर्णवेष्टनं तत्सनाभिः तत्तुल्यरूपो मण्डलो यस्य सः । वर्तुलत्वार्थं ताटङ्करूपकम् । बन्धुरं तून्नतानतमित्यमरः ।' इति व्याचष्टे । 'धूर्जटिः महेश्वरः । जटाजूटः जटाबन्धः । बन्धुरं सुन्दरम् । वासुकिः नागराजः । भोगः शरीरम् । ताटङ्कं कर्णभूषणम् । सनाभि तुल्यम् ।' इति पदार्थमात्रं कश्चिद्विलिखति । वाक्यतात्पर्यं तु स एव वेद । 'भोगराजिमणिताटङ्क' इति क्वचिद्दृश्यते । 'ताण्डवं नटनं नाट्यम्' 'धूर्जटिर्नीललोहितः' 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।' इत्यमरः । 'बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः ।' इति विश्वः । समानः नाभिः

कटवासुकिभोगमणिताटङ्कसनाभिमण्डलः, सन्ध्यासंधिनी-सरसयावकपत्रचारुः, वरुणवारविलासिन्यरुणमणिकुण्डल-

---

मूलपुरुषः यस्येति विग्रहे 'ज्योतिर्जनपद—' इति समानशब्दस्य सभावे सनाभिशब्दो निष्पन्नः । **संध्येति** । संध्यैव संधिनी संधानकुशला दूती तस्याः सरसं आर्द्रं यत् यावकपत्रं लाक्षाकृता पत्रलेखा तद्वत् चारुः रमणीयः । यद्वा संध्यैव संधिनी गौः तस्याः यत् सरसयावकपत्रं मङ्गलार्थतया ललाटतटे क्रियमाणं लाक्षालेपनं तद्वत् चारुः । संधिनीपदस्य गोविशेषपरत्वेऽपि विशेषस्यानुपयोगात्प्रकृते सामान्यपरत्वम् । दक्षिणापथे हरिद्रालेपवत् यावकपत्ररचना देशविशेषाचारः । संध्यैव संधिनी वेश्या तस्याः सरसं मनोहरं यत् यावकपत्रं लाक्षाकृतं तिलकं तद्वत् चारुः रमणीयः । 'सन्धिनी गलदावर्ता (गलदार्तवा) वेश्या नगरमण्डना ।' इति वैजयन्ती । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमर इति सांप्रदायिकाः। 'संध्यासीमन्तिनी' इति क्वचित्पाठः । शिवरामस्तु 'संध्यैव संधिनी अकालदुग्धा वृषाक्रान्ता वा गौः तस्याः सरसयावकपटवत् चारुः । पीनायाश्चातिदुग्धाया गोः शृङ्गाराय मानवाः । रञ्जयन्ति शिरोदेशमन्यच्च बहुधा किल । क्वचित् यावकपटलेति पाठः । अस्मिन् पाठे यावकपटलशब्देन यावकपटलमिव यावकपटलं लोकप्रसिद्धमेहदीति पत्रविशेषं रञ्जनतिलकं विवक्षितम् । संधिनी तु वृषाक्रान्ताकालदुग्धगवोः स्मृता । इति विश्वप्रकाशः । संध्यापुरन्ध्रीति पाठः सुगमः ।' इत्याह । **वरुणेति** । वरुणस्य या वारविलासिनी वेश्या तस्याः अरुणमणिकुण्डलस्य पद्मरागमयकर्णवेष्टनस्य कान्तिरिव कान्तिर्यस्य स तथोक्तः । 'वारुणीवारविलासिनी' इति पाठे वारुणी वरुणसंबन्धिनी पश्चिमा दिक् सैव वारविलासि-

कान्तिः, कालकरवालकृत्तवासरमहिषस्कन्धचक्राकारः, मधुरमधुपूर्णकपाल इव गगनकपालिनः, अम्लानकुसुमस्तबक इव नभःश्रियः, पुष्पगुच्छ इव गगनाशोकतरोः, कनकदर्पण इव प्रतीचीविलासिन्याः, बलभद्र इव वारुणीसंगतः सरागश्च,

---

नीति व्याख्येयम् । **कालेति** । काल एव करवालः खड्गः तेन कालस्य करवालेन वा कृत्तं खण्डितं यत् वासरः दिवस एव महिषः सैरिभः तस्य स्कन्धचक्रं चक्राकारः अंसप्रदेशः तस्य आकार इवाकारः आकृतिः स्वरूपं यस्य स तथोक्तः । **मधुरेति** । गगनं आकाशमेव कपाली कापालिकः तस्य, मधुरेण मधुना मद्येन पूर्णः कपालः भिक्षाद्यर्थमुपयुज्यमानं कर्परपात्रं स इव । 'रुधिरमधुपूर्ण' इति क्वचित्पाठः । **अम्लानेति** । नभःश्रियः आकाशलक्ष्म्याः, अम्लानकुसुमस्तबकः महासहापुष्पमञ्जरी तद्रचितः तद्रूपो वा अवतंसः शिरोभूषणं स इव । नभःश्रीशब्देन स्त्रीलिङ्गात्काचिन्नायिकेति प्रतीयते । 'अम्लानस्तु महासहा ।' इत्यमरः । यद्वा अम्लानः अग्लान इति व्याख्येयम् । **पुष्पेति** । गगनं आकाशमेव अशोकतरुः कङ्केलिवृक्षः तस्य, पुष्पगुच्छः कुसुमस्तबक इव । क्वचित् 'अम्लानः कुसुमस्तबक इव गगनाशोकतरोः' इति परं दृश्यते । **कनकेति** । प्रतीची वारुणी दिगेव विलासिनी रमणी तस्याः, कनकदर्पणः सुवर्णमयादर्श इव । अत्र प्रायेण रूपकसंकीर्णा उत्प्रेक्षा । **बलेति** । बलभद्रः बलरामः । 'बलभद्रः प्रलम्बघ्नः' इत्यमरः । 'भद्र इव' इति पाठमभ्युपगम्य 'भद्रः बलदेवः' इति कश्चित् । तालपत्रकोशेषु तु 'बलभद्र इव' इत्येव दृश्यते । **वारुणी** पश्चिमा दिक्, मदिरा च । 'वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि ।' इति मेदिनी । **सरागश्चेति** ।

दुर्विध इव परित्यक्तवसुः सविषादश्च, शाक्य इव रक्तांशुकधरः, सूरिरिव संज्ञोपेतः, भगवान् दिनमणिरपराकूपारपयसि

---

सूर्यपक्षे रागः रक्तिमा, अन्यत्र रागः अनुरागः मधुपानप्रीतिर्वा मदलौहित्यं वा । **दुर्विधः** दरिद्रः । 'निःस्वस्तु दुर्विधो दीनः' इत्यमरः । एवमेव पाठस्तालपत्रपुस्तकेषु समुपलभ्यते । कश्चित्तु 'दुर्विदग्ध इव' इति पाठमभ्युपगम्य 'दुर्विदग्धः दरिद्रः' इति व्याचष्टे । दुर्विदग्धपदस्य दरिद्रपरत्वं मृग्यम् । दुर्विदग्धः मिथ्यारसिकः असमर्थो वेति तु न्याय्यं व्याख्यानम् । **परीति** । वसवः किरणाः, पक्षे वसूनि धनानि । 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।' इत्यमरः । 'निरकासयद्रविमपेतवसुं वियदालयादपरादिग्गणिका ।' इति माघः । **सविषादश्चेति** । विषं जलं आ समन्तात् ददतीति विषादाः मेघाः तैः सहितः । पक्षे विषादः व्यसनम् । 'विषं तु गरले तोये' इति विश्वः । **शाक्यः** बौद्धः । **रक्तेति** । अंशवः किरणा एव अंशुकाः । पक्षे अंशुकं वस्त्रम् । बौद्धभिक्षवो हि काषायवस्त्रं वसत इति प्रसिद्धम् । 'किरणोस्रमयूखांशु—' इति 'चेलं वसनमंशुकम् ।' इति चामरः । **सूरिः** विद्वान् । 'धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।' इत्यमरः । **संज्ञा** सूर्यस्य पत्नी, पक्षे बुद्धिः । 'संज्ञा नामनि गायत्र्यां चेतानारवियोषितोः ।' इति मेदिनी । **भगवान्** भूतोत्पत्त्यादिज्ञानवान् । 'उत्पत्तिं च विपत्तिं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।' दिनमणिः सूर्यः । 'दिनमणिहरिहेलिब्रध्नभाकोषभानु—' इति त्रिकाण्डशेषः । **अपरेति** । अपरः पश्चिमः यः अकूपारः समुद्रः तस्य पयसि जले । 'समुद्रोऽब्धिरकूपारः' इत्यमरः । 'कं पृथ्वीं पिपर्ति । पॄ पालनपूरणयोः । कर्मण्यण् । अन्येषामपीति दीर्घः । नञ्समासः । यद्वा न कूपमृच्छति ।

तरलतरङ्गवेगोच्चलितविद्रुमविटपाकृतिर्ममज्ज ।

ततः क्रमेण च रजोलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकलकलवाचालशिखरेषु शिखरिषु, वसतिसाकाङ्क्षेषु ध्वाङ्क्षेषु, अनवरतदह्यमानकालागरुधूपपरिमलो-

ऋ गतौ । अगाधत्वात्खनितुमशक्यः । कुश्च उश्च कौ पिपर्ति । पृ पालनपूरणयोः । कर्मण्यण् । तद्भिन्नः ।' इति तत्र सुधा । **तरलेति** । तरलानां चञ्चलानां तरङ्गाणां वीचीनां वेगेन उच्चलितस्य परिवर्तितस्य विद्रुमविटपस्य प्रवालशाखायाः आकृतिरिवाकृतिः यस्य स तथोक्तः । 'विटपः पल्लवे षिद्गे विस्तारे स्तम्बशाखयोः ।' इति विश्वः । **ममज्ज** मग्नवान् ।

**तत इति** । ततः अनन्तरम् । क्रमेण च, भगवती संध्या, समदृश्यत दृष्टा इत्यन्वयः । **रज इति** । शिखरिषु वृक्षेषु, रजस्सु धूलिषु लुठिताः परिवर्तितशरीराः तत उत्थिताश्च ये कुलायार्थिनः नीडापेक्षिणः परस्परकलहविकलाः अन्योन्यकलहरहिताः स्वावासवृक्षप्रथमप्रवेशायाहमहमिकया परस्परकलहेन विह्वला वा कलविङ्काः चटकपक्षिणः तेषां कुलस्य समूहस्य कलकलेन कलकलध्वनिना वाचालानि सशब्दानि शिखराणि अग्रभागाः येषां तेषु तथोक्तेषु सत्सु । 'शिखरी स्यादपामार्गे शैलपादपयोः पुमान् ।' इति विश्वः । 'कुलायो नीडमस्त्रियाम् ।' इत्यमरः । 'शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः ।' इति मेदिनी । **वसतीति** । ध्वाङ्क्षेषु काकेषु, वसतौ स्वावासस्थानविषये साकाङ्क्षेषु साभिलाषेषु स्वावासपादपोन्मुखेषु सत्स्वित्यर्थः । 'ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि' इत्यमरः । **अनवरतेति** । वासागारेषु भोगगृहेषु, अनवरतं सततं दह्यमानानां कालागुरूणां कृष्णागुरूणां धूपस्य वासितधूमस्य यः परिमलः सुगन्धः

द्वारेषु वासागारेषु, दूर्वाञ्चिततटिनीतटनिविष्टविदग्धजनप्रस्तूयमानकथाश्रवणोत्सुकशिशुजनकलकलरवनिवारणश्रद्धेषु वृद्धेषु, आलोलिकातरलरसनाभिः कथितबहुकथाभिर्जरतीभि-

---

तस्य उद्गारः वमनं प्रसारणमिति यावत् येषु तेषु तथाभूतेषु सत्सु । 'वासागारजालविवरेषु' इति पाठान्तरे, वासागारस्य जालविवरेषु वातायनच्छिद्रेषु इति व्याख्येयम् । 'वासागारं भोगगृहम्' इति त्रिकाण्डशेषः । 'धूमस्तरिमेघवाही धूपः सौगन्ध्यवासितः ।' इति वैजयन्ती । **दूर्वेति** । वृद्धेषु, दूर्वाभिः तृणविशेषैः अञ्चिते रमणीये तटिनीतटे नदीतीरे निविष्टाः उपविष्टाः ये विदग्धजनाः पण्डितजनाः कथाकथनसमर्थरसिकजना वा तैः प्रस्तूयमानायाः कथ्यमानायाः कथायाः श्रवणे आकर्णने उत्सुकाः साभिलाषाः ये शिशुजनाः तेषां कलकलरवस्य कोलाहलध्वनेः निवारणे शमने श्रद्धा येषां तेषु तथोक्तेषु सत्सु । 'निवारणक्रुद्धेषु' पाठान्तरम् । 'तटनिविष्टगोष्ठीविदग्धजन' इति, 'कलकलरवोत्कुपितसमृद्धेषु' इति च ग्रन्थाक्षरमुद्रितपुस्तके पाठो दृश्यते । **आलोलिकेति** । आलोलिकया 'ओल्लुल्लुवायि' इति द्राविडैरारभ्यमाणया बालस्वापनोचितगीतिकया तरला चञ्चला रसना जिह्वा यासां ताभिस्तथोक्ताभिः । 'आलोलिकायां बालानां निद्रार्थं क्रियमाणे हूरलोल इति लोकप्रसिद्धे मुखध्वनिविशेषे तरला रसना जिह्वा यासां ताभिः । तदुक्तम् । आलोलिका मुकुलिला उल्लल्लमुखघण्टिका । इति' इति शिवरामः । आलोलिका शिशुरोदनशान्त्यर्थं कृतः अव्यक्तताळुरवः हेलिकेति लोके प्रसिद्धः । 'आलोलिका ताळुरवः शिशुरोदनशान्तिकृत् ।' इति वैजयन्ती इति केचित् । 'मणिमञ्चसमञ्चितोऽथ धात्र्या मधुरालोलिकयाजनिष्ट हृष्टः' इत्यच्युतरायाभ्युदयम् ।

रतिलघुकरताडनजनितसुखे ताभिरनुगते शिशयिषमाणे शिशुजने, विरचितकन्दर्पमुद्रासु क्षुद्रासु, कामुकजनानुबद्ध्यमानदासीजनविविधाश्लीलवचनशतविरसीकृतश्रुतिषु सन्ध्यावन्दनोपविष्टेषु शिष्टेषु, रोमन्थमन्थरकुरङ्गकुटुम्बकाध्यास्यमान-

---

कथिताः उक्ताः बह्वः कथाः याभिस्ताभिस्तथोक्ताभिः। **जरतीभिः** वृद्धाभिः । **अतीति**। अतिलघु अत्यन्तं मृदु यत् करताडनं पृष्ठस्थले हस्ताघातः तेन जनितं उत्पादितं सुखं यस्य तस्मिन् तथोक्ते । 'अतिलघु अत्यन्तं इष्टम्। लघु त्वसारगुरुणोरिष्टे क्षिप्रमनोज्ञयोरिति वैजयन्ती' इति केचित्। **ताभिः** जरतीभिः। **अनुगते** सहिते । 'जनितसुखाभिरनुगते' इति पाठे जनितसुखाभिरिति जरतीविशेषणम् । **शिशयिषमाणे** शयितुमिच्छति सति । शीङः सन्नन्तात्कर्तरि शानच् । **विरचितेति** । क्षुद्रासु वेश्यासु, कन्दर्पमुद्रा स्मरचिह्नं मन्मथचेष्टेत्यर्थः सा विरचिता याभिस्तासु तथोक्तासु सतीषु । 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।' इत्यमरः । 'स्मरमुद्रा तु दृग्भ्रूभ्यामाह्वानं यत्तु योषिताम् ।' इति वैजयन्ती । 'कन्दर्पमुद्रा प्रसाधनम्' इति शिवरामः । **कामुकेति** । संध्यायाः सायं संध्यादेव्याः वन्दनाय उपविष्टेषु । शिष्टेषु वैदिककर्मानुष्ठानतत्परेषु महत्सु, कामुकजनैः विटपुरुषैः अनुबध्यमानाः अनुस्रियमाणाः ये दासीजनाः तेषां विविधानां अश्लीलानां ग्राम्याणां वचनानां शतैः विरसीकृते कदर्थिते श्रुती कर्णौ येषां तेषु तथोक्तेषु सत्सु । 'अश्लीलवचःश्रुतिविरसीकृतासु कामिनीषु' इति क्वचित्पाठः। तदा अश्लीलवचसां श्रुत्या आकर्णनेन विरसीकृतासु कदर्थितासु संकोचमापन्नास्वित्यर्थ इति व्याख्येयम्। **रोमन्थेति**। रोमन्थो नाम चर्वितस्य पुनराकृष्य चर्वणम्, तत्र मन्थराः मृदुप्रवृत्तिकाः

म्रदिष्ठगौष्ठीनपृष्ठासु अरण्यस्थलीषु, निद्राविद्राणद्रोणकाककुल-कलितकुलायेषु ग्रामतरुनिचयेषु, कापेयविकलकपिकुलकलि-

---

ये कुरङ्गाः हरिणाः तेषां कुटुम्बकेन संतत्या समूहेनेति यावत् अध्यास्यमानं अधिष्ठीयमानं म्रदिष्ठं मृदुतमं श्लक्ष्णतममित्यर्थः गौष्ठीनानां भूतपूर्वगोस्थानानां पृष्ठं उपरिभागः तलमिति यावत् यासु तासु तादृशीषु सतीषु । अरण्यानां वनानां स्थलीषु अकृत्रिमप्रदेशेषु । 'रोमन्थः स तु विज्ञेयश्चर्वणं चर्वितस्य यत् ।' इति वैजयन्ती । 'मन्थरः कोषफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत् ।' इति मेदिनी । मृदुशब्दादिष्ठनि 'र ऋतः—' इति रादेशः । 'गावः तिष्ठन्ति यत्र गोष्ठं घञर्थे कः' भूतपूर्वं गोष्ठं गौष्ठीनम् । 'गोष्ठात्खञ्भूतपूर्वे' इति खञ् । 'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ।' इत्यमरः । अकृत्रिमार्थे स्थलशब्दात् 'जानपदकुण्ड' इत्यादिना ङीष् । 'गौष्ठीनं शर्कराञ्चितस्थलं वा' इति कश्चित् । **निद्रेति** । निद्रार्थं विद्राणाः पलायमानाः ये द्रोणकाकाः काकविशेषाः तेषां कुलेन समूहेन कलिताः विरचिताः कुलायाः नीडानि येषु तेषु तादृशेषु सत्सु । 'निद्राविद्राणं निद्राधीनम् । विद्राणो विवशो निघ्न इति वैजयन्ती' इति केचित् । 'द्रोणो ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि ।' इति रुद्रः । ग्रामतरुनिचयेषु ग्रामे वीथ्यां विद्यमानानां वृक्षाणां समूहेषु । 'नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः' इति मेघसंदेशः । 'चैत्यानि रथ्यावृक्षाः' इति तत्र मल्लिनाथः । 'कुलायेषु काननिकायेषु' इति पाठान्तरम् । **कापेयेति** । कापेयेन कपिकर्मणा मर्कटचेष्टयेत्यर्थः विकलानि दृप्तानि विह्वलानि वा यानि कपिकुलानि वानरसमूहाः तैः कलिलेषु

लेषु आरामतरुषु, निर्जिगमिषति जरत्तरुकोटरकुटीरकुटु-म्बिनि कौशिककुले, तिमिरतर्जननिर्गतासु दहनप्रविष्टदि-नकरकरशाखास्विव प्रस्फुरन्तीषु दीपलेखासु, मुखरितधनुषि

---

निबिडेषु आरामतरुषु उद्यानवृक्षेषु। कपेः कर्म भावो वा कापेयम्। 'कपिज्ञा-त्योर्ढक्' इति ढक्। 'कपिकुलकलिलेष्वाश्रमद्रुमेषु' इति पाठस्तु नातीव प्रकृ-तोपयोगी। एतदनन्तरं 'कलकलविकलबककुलेष्वारामतरुषु' इति ग्रन्था-क्षरमुद्रितपुस्तके दृश्यमानः पाठस्तु बहुषु तालपत्रपुस्तकेषु न दृश्यते। **नि-र्जिगमिषतीति**। जरत्तरूणां जीर्णवृक्षाणां कोटरं विवरमेव कुटीरः अ-ल्पा कुटी तस्मिन् कुटुम्बिनि वास्तव्ये। कौशिककुले उलूकसमूहे। निर्जिग-मिषति निर्गन्तुमिच्छति सति, रात्रावेव तेषां संचारात्। 'निष्कुहः कोटरं वा ना' इत्यमरः। कुटीशब्दात् अल्पार्थे 'कुटीशमीशुण्डाभ्यो रः' इति प्रत्ययः। 'कुटीरः क्षुद्रवेश्मनि' इति वैजयन्ती। 'महेन्द्रगुग्गुलूलूकव्याल-ग्राहिषु कौशिकः।' इत्यमरः। **तिमिरेति**। तिमिरतर्जनाय अन्धकार-संत्रासनार्थं निर्गतासु निष्क्रान्तासु। दहनं अग्निं प्रविष्टस्य दिनकरस्य सूर्यस्य करशाखासु अङ्गुलीष्विव स्थितासु। 'अङ्गुल्यः करशाखाः स्युः' इत्यमरः। उत्प्रेक्षालङ्कारः। दीपलेखासु दीपराजिषु। प्रस्फुरन्तीषु ज्वलन्तीषु सतीषु। 'सौरं तेजः सायमग्निं संक्रमते।' 'आदित्यो वा अस्तं यन्नग्निमनुप्रविशति।' 'अग्निं वा आदित्यः सायं प्रविशति।' इति श्रुतिः। 'दिनकरकरशिखास्विव' इति पाठान्तरम्। **मुखरितेति**। अशे-षाणां समस्तानां सांसारिकाणां संसारिणां जनानां शेमुषीं बुद्धिं विवे-कमिति यावत् मुष्णाति चोरयति अपहरतीति तादृशे। मकरध्वजे मन्मथे। मुखरितं मौर्वीटंकारवत् धनुः चापं यस्य तस्मिन्। समासान्त-

वर्षति शरनिकरमशेषसांसारिकशेमुषीमुषि मकरध्वजे, सुरतारम्भाकल्पशोभिनि शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने, सैरन्ध्रीवध्यमानरशनाकलापजल्पाकजघनस्थलासु जनीषु, विश्रान्तकथानुवन्धतया प्रवर्तमानानेककथकजनगृह-

---

विधेरनित्यत्वात् 'धनुषश्च' इति अनङ् न। शरनिकरं बाणसमूहम् । वर्षति मुञ्चति सति। 'अशेषसंसार' इति पाठान्तरम्। **सुरतेति**। सुरतारम्भस्य उचितः यः आकल्पः वेषः तेन शोभिनि। शम्भलीनां कुट्टनीनां भाषितं वचनं भजति अनुसरतीति तस्मिन्। भुजिष्याजने प्रेष्याजने स्वतन्त्रस्त्रीजने वा। भूषां आभरणम्। भजति धारयति सति । 'आकल्पवेषौ नैपथ्यम्' 'कुट्टनी शम्भली समे' 'नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः।' इत्यमरः। 'भुजिष्या प्रैष्यमात्रे स्यात्स्वतन्त्रायामपि स्मृता।' इति धरणिः। शम्भली कुट्टनी च परनारीं पुंसा संयोजयित्र्याः संज्ञेति सुधा। 'शम्भली गणिकानामुपदेशदायिनी कुट्टनी' इति कश्चित्। **सैरन्ध्रीति**। जनीषु स्नुषाजनेषु, सैरन्ध्रीभिः प्रसाधिकाभिः बध्यमानेन योज्यमानेन रशनाकलापेन काञ्चीभूषणेन जल्पाकं सशब्दं जघनस्थलं कटिप्रदेशः कटिपुरोभागो वा यासां तासु तादृशीषु सतीषु । 'जनी आसन्नपाणिग्रहणा वा' इति कश्चित्। 'समाः स्नुषाजनीवध्वः' 'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका' 'स्याज्जल्पाकस्तु वाचालः' इत्यमरः। 'जघनं स्यात्स्त्रियाः श्रोणिपुरोभागे कटावपि।' इति मेदिनी । 'चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी। प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता।' इति कात्यः। जल्पाकेत्यत्र 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' इति षाकन्प्रत्ययः। **विश्रान्तेति**। विश्रान्तः उपरतः कथानां अनुबन्धः

गमनत्वरेषु चत्वरेषु, समासादितकुक्कुटेषु किरातगृहनिष्कुटेषु, कृतयष्टिसमारोहणेषु बर्हिणेषु, विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु, सपदि संकोचोदञ्चदवाञ्चदुच्चकेसरकोटिसंकट-

---

अविच्छेदप्रवृत्तिः येषां तेषां भावेन । प्रवर्तमाना उत्पद्यमाना अनेककथककजनानां गृहगमने स्वावासं प्रति प्रस्थाने त्वरा संभ्रमः येषु तेषु तथोक्तेषु सत्सु । चत्वरेषु तत्तन्मार्गसंगमस्थलेषु चतुष्पथेषु, अङ्गणेषु वा । 'चत्वरं स्यात्पथां श्लेषे स्थण्डिलाङ्गणयोरपि ।' इति हैमः । 'चत्वरं तु चतुष्पथम्' इति हलायुधः । **समासादितेति** । किरातानां शबराणां गृहनिष्कुटेषु गृहसमीपस्थवनेषु गृहसमीपस्थकेदारेषु वा । यद्वा गृहाणां सदनानां निष्कुटेषु कवाटेषु । 'निष्कुटस्तु गृहोद्याने स्यात्केदारकवाटयोः ।' इति मेदिनी । 'किरातजन' इति पाठान्तरम् । समासादिताः प्राप्ताः कुक्कुटाः कृकवाकवः यैस्तेषु तथोक्तेषु सत्सु । 'समावासितकुक्कुटेषु निष्कुटेषु' इति पाठान्तरम् । **कृतेति** । बर्हिणेषु मयूरेषु, कृतं यष्टिसमारोहणं स्वावासदण्डारोहः यैस्तेषु तथोक्तेषु सत्सु । 'उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणः' इति संध्यावर्णने विक्रमोर्वशी । मयूरो बर्हिणो बर्ही' इत्यमरः । **विहितेति** । गृहस्थेषु द्वितीयाश्रमिषु, विहिता कृता संध्यासमयव्यवस्था संध्याकालकर्तव्यकृत्यनिश्चयः यैस्तेषु तादृशेषु सत्सु । 'व्यवस्था कृत्यनिर्णये' इति हरिः । 'अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् । गृहस्थस्य समासेन धर्मोऽयं द्विजसत्तमाः ।' इति गारुडे । **सपदीति** । षट्चरणानां भ्रमराणां चक्रे समूहे, सपदि तत्क्षणे, संकोचाय उदञ्चन्तः प्रवर्तमानाः अत एव अवाञ्चन्तः अधोमुखीभवन्तश्च ये उच्चाः उन्नताः केसराः किञ्जल्काः तेषां कोटिभिः अग्रैः संकटाः निबि-

कुशेशयोदरकोटरकुटीरकुटिलशायिनि षट्चरणचक्रे, अनेनैव पथा भगवता भास्वता गन्तव्यमिति सर्वतः पट्टमयैर्वसनैः परिवृता मणिकुट्टिमालिरिव विरचिता वरुणेन रवेः, कालकरवालकृत्तस्य दिवसमहिषस्य रुधिरधारेव, विद्रुमलतेव

---

डाः ये कुशेशयानां तामरसपुष्पाणां उदरकोटराः मध्यरन्ध्राणि त एव कुटीराः क्षुद्रसदनानि तेषु कुटिलं भुग्नं क्लिष्टं यथा तथेत्यर्थः शेत इति तस्मिन् तादृशे सति । 'षट्पदभ्रमरालयः ।' 'किञ्जल्कः केसरोऽस्त्रियाम् ।' 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।' 'आविद्धं कुटिलं भुग्नम्' इत्यमरः । क्वचिन्मुद्रितपुस्तके दृश्यमानः 'स्वपतिसंकोच' इति पाठस्त्वर्थविधुरत्वादशुद्धः । **अनेनैवेति** । भगवता । भास्वता सूर्येण । अनेनैव । पथा मार्गेण । गन्तव्यम् । इति इत्युद्दिश्य, इति प्रार्थ्य वा । रवेः सूर्यस्य तदर्थमित्यर्थः । वरुणेन पश्चिमदिक्पालकेन । विरचिता निर्मिता । सर्वतः सर्वास्वपि दिक्षु । पट्टमयैः पट्टतन्तुविकारैः तद्रचितैरित्यर्थः । वसनैः वस्त्रैः पीताम्बरैरित्यर्थः । परिवृता आच्छादिता । मणिकुट्टिमालिः रत्नखचितनिबद्धभूमिपङ्क्तिरिव । अतिलौहित्यफालफल्यादिभिरेवं विशिष्टोत्प्रेक्षणम् । केषुचित्कोशेषु तु 'परिवृता' इति पदं न दृश्यते । तदा पट्टमयैर्वसनैर्विरचिता मणिकुट्टिमालिरिवेति व्याख्येयम् । इष्टकास्थानीयानि पट्टवसनानीति तदा बोध्यम् । 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः । केचित्तु 'कुट्टिमालिः निबद्धभूमिः । कुट्टिमशब्दः करिकलभन्यायेन निबद्धमात्रपरः । आलिशब्दश्च भूवाचकः । तथा च वैजयन्ती । आलिः सख्यां भूमिपङ्क्त्योरिति' इति व्याचक्षते । 'विरचितारुणेन' इति क्वचित्पाठः । **रुधिरं** रक्तम् । **विद्रुमेति** । चरमार्णवस्य पश्चिमपयोधेः, विद्रुमलता

चरमार्णवस्य, रक्तकमलिनीव गगनतटाकस्य, काञ्चनकेतुरिव कन्दर्परथस्य, मञ्जिष्ठारागारुणपताकेव गगनहर्म्यस्थलस्य, लक्ष्मीरिव स्वयंवरगृहीतपीताम्बरा, भिक्षुकीव तारा-

---

प्रवालवल्लिरिव । **रक्तेति** । गगनं आकाशमेव तटाकः पद्मसरः तस्य रक्तकमलिनीव । 'पद्माकरस्तटाकोऽस्त्री' इत्यमरः । **काञ्चनेति** । कन्दर्परथस्य मन्मथस्यन्दनस्य, काञ्चनकेतुः सुवर्णमयध्वज इव । 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि ।' इति मेदिनी । **मञ्जिष्ठेति** । गगनं आकाशमेव हर्म्यस्थलं सौधप्रदेशः तस्य, मञ्जिष्ठा नाम विकसाख्यं किंचिद्रञ्जनद्रव्यम् । मञ्जिष्ठायाः रागेण अरुणा रक्ता पताका वैजयन्तीव । 'हर्म्यादि धनिनां वासः' इत्यमरः । **स्वयंवरेति** । स्वयं आत्मना वरं सम्यक् यथा तथा परिगृहीतं स्वीकृतं पीतं हरिद्राभं अम्बरं आकाशं यया सा तादृशी । पक्षे स्वयंवरेण स्वयंवरे वा परिगृहीतः पीताम्बरः विष्णुः यया सा तथोक्ता । 'पीताम्बरोऽच्युतः शार्ङ्गी' इत्यमरः । 'अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः ।' इति मेदिनी । सन्ध्यापक्षे, रलयोर्वबयोश्चाभेदात् वरशब्दः बलपरः । स्वयं बलगृहीतपीताम्बरेति केचिद्व्याचक्षते । **भिक्षुकी** बौद्धसन्यासिनी । **तारेति** । ताराणां नक्षत्राणां अनुरागं रक्तिमानम्, रक्तं अम्बरं आकाशं च धारयतीति तादृशी । पक्षे तारा नाम काचिद्बुद्धदेवता, तस्यां अनुरागं प्रीतिं भक्तिमित्यर्थः, रक्ताम्बरं काषायवसनं च धारयतीति तथोक्ता । 'रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च ।' 'तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम् । स्त्री बुद्धदेवताभेदे वालिसुग्रीवपतिभार्ययोः ।' इति मेदिनी । 'तारानुरक्ता'

नुरागरक्ताम्बरधारिणी, वारमुख्येव पल्लवानुरक्ता, कामिनीव कालेयाताम्रपयोधरा, बभ्रुरिव कपिलतारका, भगवती सन्ध्या समदृश्यत ।

---

इति पाठं स्वीकृत्य 'तारा नक्षत्राणि अनुरक्ता यस्याम् । आहिताग्न्यादिः ।' इति शिवरामः । **वारमुख्या** श्रेष्ठा गणिका । 'वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः । सत्कृता वारमुख्या स्यात्' इत्यमरः । **पल्लवेति** । पल्लववत् किसलयवत् अनुरक्ता लोहिता । पक्षे पल्लवेषु विटेषु अनुरक्ता । 'पल्लवोऽस्त्री किसलयम्' 'षिद्गः पल्लवको विटः ।' इत्यमरः । **कालेयेति** । कालेयवत् कुङ्कुमवत् आताम्राः रक्ताः पयोधराः मेघाः यस्यां सा तथोक्ता । पक्षे कालेयेन आताम्रौ पयोधरौ स्तनौ यस्याः सा तादृशी । 'कालेयकं कुङ्कुमं स्यात्काश्मीरं घुसृणं समे ।' इत्यजयः । 'पयोधरः कुचे मेघे' इति हैमः । कालेयकं रक्तचन्दनमिति केचित् । पीतवर्णसुगन्धिकाष्ठमित्यमरटीका सारसुन्दरी । संध्यापक्षे 'कालेयाः वर्तमानाः पयोधराः मेघाः यस्याः सा तथा' इति कश्चित् ? **बभ्रुः** नकुली 'बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु ।' इति बलशर्मा । उपमानोपमेययोः समानलिङ्गत्वसिद्ध्यर्थं नकुलीपरतया प्रकृते व्याख्यातम् । **कपिलेति** । कपिलाः पिशङ्गाः तारकाः नक्षत्राणि यस्यां सा तथोक्ता । पक्षे तारका अक्ष्णः कनीनिका । केषुचित्तालपत्रपुस्तकेषु 'हरिरिव कपिलतारका' इति दृश्यते । परे तु, बभ्रुः विष्णुः स इव । उपमानपक्षे कपिलतारक इति लिङ्गविपरिणामेनान्वेतव्यम् । कपिलतां कपिलमहर्षिरूपतां अरति गच्छतीति तादृशः । कपिलमहर्षिरूपेणावतीर्ण इत्यर्थः । लिङ्गभेदस्तु सहृदयानुद्वेजकत्वान्न दोषाय । तदुक्तं काव्यादर्शे । 'न लिङ्गवचने भिन्ने न

ततः क्षणेन क्षणदानुरागरचनाचतुरासु सन्ध्यास्विव

न्यूनाधिकते अपि । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ।' इति । भगवान्नारायणः कर्दमप्रजापतेर्देवहूतौ कपिलमहर्षितया अवतीर्य मातुरुपदेशव्याजेन पातञ्जलमतत्वेन प्रसिद्धं सेश्वरसांख्यमतं लोके प्रवर्तयामास । स्पष्टं चेदं श्रीभागवते । कापिलमतप्रवर्तकः सांख्याचार्यः कपिलस्तु अग्न्यवतारभूतोऽस्माद्भिन्न एव । सर्वमिदमन्यत्र स्फुटमिति वदन्ति ।

**तत इति** । ततः अनन्तरम् । क्षणेन । एतादृशं तिमिरं अन्धकारः । उदजृम्भत उज्जृम्भते स्म अवर्धतेत्यन्वयः । **क्षणदेति** । वेश्यासु गणिकासु । संध्यास्विव, क्षणदानुरागरचनाचतुरासु क्षणं उत्सवं ददातीति क्षणदः संतोषप्रद इत्यर्थः तादृशस्य अनुरागस्य प्रेम्णः रचनायां करणे चतुरासु निपुणासु सतीषु । क्षणदः क्षणमात्रकर्तव्यः न तु स्थिर इत्यर्थ इति संप्रदायः । केचित्तु क्षणदानुरागरचना जललिखितानुरागसूचकवर्णग्रथनं तत्र चतुरासु अतात्त्विकमनुरागमभिनयन्तीष्वित्यर्थः । 'जललिपिरिति कामं संगिरन्तां गिरं ताम्' इति भोजः । 'क्षणदो गणके रात्रौ क्षणदा क्षणदं जले' इति मेदिनीत्याहुः । पक्षे क्षणदायाः रात्रेः रागरचनायां रञ्जने चतुरासु । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।' इत्यमरः । उपमाने बहुवचनमुपमेयानुरोधात् । इयं च कापि सरणिर्महाकवीनाम्, यद्वर्णनीययोर्द्वयोरेकस्य उपमानत्वमन्यस्योपमेयत्वं च परिकल्प्य उपमालंकारघटनद्वारा द्वयोरपि वर्णनमिति । एवमेवोत्तरत्रापि । तथा च संध्या वेश्येति द्वयमप्येवंविधमासीदिति तात्पर्यम् । अयं च पाठोऽस्मत्संपादितेषु कोशेषु कस्मिंश्चित्तालपत्रपुस्तकेऽतिप्राचीनतया विभाव्यमाने दृश्यत इत्यस्माभिरादृतः । उत्तरवाक्यानुगुणश्चायं पाठः । क्वचित्तु

**वेश्यासु, तुलाधारशून्यायां पण्यवीथिकायामिव दिवि, घनघटमानदलपुटासु पुटकिनीषु, तिमिरप्रतिहतेष्विव तत्र**

---

'संध्याशिष्यास्विव' इति पाठो दृश्यते । तदा उपमाप्रयोजकेण श्लेषैकीकृतेन धर्मेण वेश्यासु संध्याशिष्यात्वमुत्प्रेक्ष्यत इति बोध्यम् । शिवरामस्तु 'क्षणदाराग' इति पाठं स्वीकृत्य क्षणदा रात्रिस्तस्या रागरचना तत्र चतुरासु संध्याशिष्यास्विव वेश्यासु, पक्षे क्षणदाः आ साकल्येन रागा भैरवादयः तेषां रचना यथायथं स्वरग्राममूर्च्छनासहितं गानं तत्र चतुरासु । यद्वा क्षणदानां स्वसुखप्रदानां आ साकल्येन रागरचना प्रीतिरचना तत्र चतुरासु' इति व्याचष्टे । 'क्षणदानुरागचतुरासु वेश्यास्विव संध्याशिष्यास्विव स्फुरन्तीषु दीपलेखासु' इति ग्रन्थलिपिमुद्रितकोशपाठस्तु नातीव स्वरसः । दीपलेखास्फुरणस्य संध्यावर्णने वर्णितत्वात् तमोविजृम्भणात्पूर्वं संध्यायामेव दीपारोपणस्यैव न्याय्यत्वाच्च । **तुलेति** । दिवि आकाशे । पण्यवीथिकायां विपणाविव । तुला सप्तमराशिः आधारः यस्य सः तुलाधारः आदित्य इत्यर्थः तेन शून्यायां रहितायां सत्याम् । पक्षे तुलां धटं धारयन्तीति तुलाधाराः वणिजः तैः शून्यायाम् । 'तुलाधारस्तु वणिजि सहस्रांशौ च तक्षणि ।' इत्यजयः । 'विपणिः पण्यवीथिका' इत्यमरः । शिवरामस्तु 'पक्षे तुलाराशिराधारो येषां ते चन्द्रादयः तैः शून्यायाम् । तथा च माघः । अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः । विगतोरुतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः । इति' इत्याह । **घनेति** । पुटकिनीषु पद्मिनीषु, घनं दृढं सान्द्रं वा यथा तथा घटमानानि संश्लिष्यन्ति दलपुटानि पुटसदृशानि पत्राणि यासां तासु तादृशीषु सतीषु । 'पद्मिनी फुटकिनी बिसिनी च' इति वैजयन्ती । 'राजादेर्योग्यस्यापदि विपणिनी विपणमपसारयन्ति, स-

**इतः परिभ्रमत्सु कमलसरसि मधुकरनिकरेषु, विकलकुररीकूजितच्छलेन रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु, प्रतिफलितसन्ध्यारागरज्यमानसलिलस्थितासु पतिवि-**

---

श्रीकाश्च स्वद्वारपिधानमाचरन्तीति लोकव्यवहारो ध्वनितः ।' इति शिवरामः । **तिमिरेति** । मधुकरनिकरेषु भृङ्गसमूहेषु, तिमिरेण तिमिराख्येन नेत्ररोगेण अन्धकारेण च प्रतिहतेषु अभिभूतेषु आक्रान्तेष्विवेत्यर्थः । कमलसरसि । तत इतः सर्वतः । परिभ्रमत्सु स्खलद्गतिकतया संचरत्सु सत्सु । तिमिरोपहतनेत्राणां पदव्यपरिज्ञानेन तत इतो भ्रमणमेव भवतीति तथोत्प्रेक्षा । 'तिमिरं तु दृष्टिरोगान्धकारयोः ।' इति हैमः । शिवरामस्तु 'तिमिरप्रतिहस्तकेष्विव' इति पाठमादृत्य 'प्रतिहस्तकोऽपरहस्तकः । संज्ञायां कन् । गुमास्ता इति भाषायाम् । मालिन्येन साम्यात्प्रतिहस्ततोत्प्रेक्षणम् । प्रभौ पराभूते क्षुद्रः परदारादीन्समया स्वभृत्यान् लक्ष्मीजिघृक्षया प्रेषयत्येवेति लोकप्रसिद्धिर्ध्वनिता ।' इति व्याचष्टे । **विकलेति** । रविविरहेण सूर्यवियोगेन विधुरासु सकष्टासु विगलितशोभास्वित्यर्थः । सरोजिनीषु पद्मिनीषु । विकला विह्वला या कुररी उत्क्रोशाख्यपक्षिस्त्री तस्याः कूजितं शब्दः तच्छलेन तद्व्याजेन । विलपन्तीषु पतिवियोगदुःखेन विलापं कुर्वतीष्विव सतीषु । 'नादस्तावद्विकलकुररीकूजितस्निग्धतारः' इति मालतीमाधवम् । **प्रतिफलितेति** । प्रतिफलितेन प्रतिबिम्बितेन संक्रान्तेनेत्यर्थः संध्यारागेण रज्यमाने रक्तीभवति सलिले स्थितासु । कमलिनीषु । पत्युः नायकस्य सूर्यस्य विनाशेन अस्तमयेन जाता या हृत्पीडा मनोव्यथा तया । दहनप्रविष्टासु जीवितनैराश्येन अग्निप्रवेशं कृतवतीष्विव स्थितासु । इदं केषुचित्पुस्तकेषु न दृश्यते ।

नाशहृत्पीडया दहनप्रविष्टास्विव कमलिनीषु, गणक इव नक्षत्रसूचके प्रदोषे, हरकण्ठकालिमसनाभि, दैत्यबलमिव प्रकटतारकम्, भारतसमरमिव वर्धमानोलूकशकुनिकलकलम्, धृष्टद्युम्नवीर्यमिव कुण्ठितद्रोणप्रभावम्, नन्दनवनमिव

---

**गणक इति** । प्रदोषे रजनीमुखे । गणके ज्योतिषिके इव । नक्षत्राणि सूचयति प्रकाशयतीति तस्मिन् तादृशे । पक्षे प्रष्टॄणां जनानां शुभाशुभकथनाय अश्विन्यादिनक्षत्रोच्चारके । 'प्रदोषो रजनीमुखम्' 'दैवज्ञगणकावपि ।' इत्यमरः । इतः परं तिमिरविशेषणानि । **हरेति** । हरस्य यः कण्ठः गलः तस्य कालिम्नः नैल्यस्य सनाभि तुल्यम् । **दैत्यबलं** असुरसैन्यम् । **प्रकटेति** । प्रकटाः आविर्भूताः प्रकाशमाना इत्यर्थः तारकाः नक्षत्राणि यस्मिंस्तत् तादृशम् । पक्षे प्रकटः प्रसिद्धः तारकः तदाख्योऽसुरः यस्य तत् तथोक्तम् । तमःपक्षे 'प्रकृष्टाः तारकाः भौमादिनक्षत्राणि यत्र । तथा च माघः । सवितुस्त्विषाहि ददृशेऽपि न यः स तमीं तमोभिरधिगम्य तताम् । द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः । इति' इति शिवरामः । **भारतेति** । भरताः भरतवंशजाः धर्मपुत्रदुर्योधनादयो योद्धारः अस्येति भारतम् 'संग्रामे प्रयोजनयोद्धृभ्यः' इत्यण् । तच्च तत्समरं च भारतसमरं भारतयुद्धमित्यर्थः । 'अस्त्रियां समरानीकरणाः' इत्यमरः । **वर्धमानेति** । वर्धमानः उलूकशकुनीनां घूकपक्षिणां कलकलः कोलाहलः यस्मिंस्तत् तथोक्तम् । पक्षे उलूकः शकुनेः पुत्रः । शकुनिः दुर्योधनस्य मातुलः । 'उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि ।' 'शकुनिः पुंसि विहगे सौबले करणान्तरे ।' इति मेदिनी । **धृष्टद्युम्नः** द्रुपदपुत्रः । **कुण्ठितेति** । कुण्ठितः व्याहतः

**संचरत्कौशिकम्, कृष्णवर्त्मेज्वलनमिव निखिलकाष्ठापहार-कम्, सगर्भमिव घनतरपाषाणकर्कशासु गिरितटीषु, सच-**

द्रोणानां काकविशेषाणां प्रभावः शक्तिः यस्मिंस्तत् तादृशम्, रात्रौ काकानां संचाराभावादिति भावः । केचित्तु प्रभावः तेजः वर्ण इति यावत् । 'प्रभावस्तेजसि शक्तौ' इति हैमः । स कुण्ठितो येन काकतोऽपि नीलवर्णमित्यर्थ इति व्याचक्षते । सांप्रदायिकास्तु 'कुण्ठितद्रोणप्रभावन-न्दनवनमिव' इत्यत्र तिमिरपक्षे 'कुण्ठितद्रोणप्रभावत्' इति पदच्छेदं कृत्वा कुण्ठितः द्रोणः काकः यया तादृशी प्रभा कान्तिः अस्यास्तीति कुण्ठत-द्रोणप्रभावत् इति व्याचक्षते । पक्षे द्रोणः अश्वत्थामपिता द्रोणाचार्यः । तस्य शक्तिश्च तदर्थमुत्पन्नेन धृष्टद्युम्नेन कुण्ठितेति स्पष्टं महाभारते । 'द्रोणः पार्थगुरौ काके माने' इति हैमः । **कौशिकः** उलूकः इन्द्रश्च । 'कौशिकः शक्रघूकयोः' इति हैमः । **कृष्णवर्त्मेति** । कृष्णवर्त्मनः अग्नेः ज्वलनमिव । **निखिलेति** । निखिलाः काष्ठाः दिशः अपहरतीति तादृशं सर्वदिगावारकमित्यर्थः । पक्षे काष्ठानि इन्धनानि । 'काष्ठं दारुणि काष्ठा तु प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ।' इति हैमः । 'कृष्णवर्त्मेवाखिलकाष्ठापहारकम्' इति शिवरामधृतः पाठः । उपमानोपमेययोर्भिन्नलिङ्गत्वदोषस्तु पूर्वोक्तरीत्या तदा परिहरणीयः । 'यद्वा कृष्णवर्त्मा दुराचार इव अखिलकाष्ठानां अखिलोत्कर्षाणां अपहा-रकं नाशकम् । कृष्णवर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे । इति विश्वप्र-काशः ।' इति शिवरामः । **सगर्भमिति** । घनतरैः बृहद्भिः दृढैः निबिडै-र्वा पाषाणैः उपलैः कर्कशासु कठिनासु । गिरितटीषु पर्वतनितम्बेषु । सगर्भं गर्भसहितमिव पुष्टमिति यावत् । **सचक्षुरिति** । सुप्ताः पश्चात्प्र-बुद्धाश्च ये सिंहाः तेषां नयनच्छविच्छटाभिः नेत्रकान्तिपुञ्जैः कपिलेषु

क्षुरिव सुप्तप्रबुद्धसिंहनयनच्छविच्छटाकपिलेषु सानुषु, सजीवमिव तमोमणिभिः, संवर्द्धितमिवाग्निहोत्रधूमलेखाभिः, मांसलितमिव कामिनीकेशपाशसंस्कारधूपपटलैः, उद्दीपितमिव घनतरनिलीनमधुकरपटलमेचकितपेचकिकपोलतलगलि-

---

पिशङ्गेषु । सानुषु प्रस्थेषु । सचक्षुः सनेत्रमिव । अत्र 'सुप्तसिंहेति पाठस्तु भ्रामकत्वादुपेक्षितः ।' इति शिवरामः । **सजीवमिति** । तमोमणिभिः खद्योतैः, सजीवं जीवसहितमिव । खद्योतानामितस्ततः संचारात्तथोत्प्रेक्षा । 'ज्योतिरिङ्गणखद्योतज्योतिष्कीटास्तमोमणिः ।' इति शब्दचन्द्रिका । तमोमणिभिः नीलमणिभिः । 'तमोमणिर्नीलमणिर्महानीलोऽञ्जनद्युतिः ।' इति वैजयन्तीति केचित् । अत्र पक्षे सजीवमिवेत्युत्प्रेक्षा न स्वरसवाहिनीति बोध्यम् । **लेखाः** राजयः । **मांसलितमिवेति** । कामिनीनां केशपाशसंस्काराय कचकलापाधिवासनाय उत्थापितः यः धूपः सौगन्ध्य वासितो धूमः तस्य पटलैः समूहैः, मांसलितं मांसलं पुष्टं कृतमिव । **उद्दीपितमिवेति** । घनतरं अतिनिबिडं यथा तथा निलीनानि संलग्नानि यानि मधुकरपटलानि भ्रमरपङ्क्तयः तैः मेचकितेभ्यः श्यामलितेभ्यः पेचकिनां गजानां कपोलतलेभ्यः गण्डस्थलेभ्यः गलितायाः स्रुतायाः दानधारायाः मदजलपातस्य मदजलसंततेर्वा शीकरैः कणैः, उद्दीपितमिव विराजितमिव वर्द्धितमित्यर्थः । 'प्रौढोक्तिः' इति शिवरामः । 'प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।' इति तल्लक्षणम् । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।' इत्यमरः । 'पेचकी द्विरदः पद्मी कुम्भी दन्तावलो द्विपः ।' इत्यजयः । 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु ।' इति मेदिनी । 'धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ । जलादिपाते संतत्याम्'

तदानधाराशीकरैः, पुञ्जीकृतमिव विततमालकाननच्छटाच्छायासु, लीयमानमिव कज्जलरसश्यामभोगिभोगेषु, प्रावरणमिव रजनीपांसुलायाः, पलितौषधमिव वृद्धवारयोषिताम्, अपत्यमिव रजन्याः, सुहृदिव कलिकालस्य, मित्रमिव दुर्जनहृदयस्य, बौद्धदर्शनमिव प्रत्यक्षद्रव्यमपह्नुवानं तिमिरमुदजृम्भत ।

---

इति हैमः । 'उद्दीपितमिव घनतरनीलमधुकरपटलैः मेचकितामिव पेचकि—' इति क्वचिद्दृश्यमानः पाठस्तु पूर्वोत्तरवाक्याननुगुणः । **पुञ्जीकृतमिति** । विततस्य विस्तृतस्य तमालकाननस्य तापिञ्छवनस्य छटायाः पङ्क्तेः छायासु अनातपेषु कान्तिषु वा, पुञ्जीकृतं समूहितमिव । **लीयमानमिति** । कज्जलरसवत् मषीजलवत् श्यामाः ये भोगिनः सर्पाः तेषां भोगेषु शरीरेषु, लीयमानं ऐक्यमापन्नमिव । निलीयमानमिति पाठे आत्मानं तत्र संवृण्वानमित्यर्थः । 'कज्जलासिश्याम' इति पाठान्तरम् । असिः खड्गः । **प्रावरणमिति** । रजनी रात्रिरेव पांसुला कुलटा अर्थाज्जारगृहं गच्छन्ती तमोभिसारिका तस्याः, प्रावरणं अवगुण्ठनार्थं नीलवसनमिव । 'स्वैरिणी पांसुला च स्यात्' इत्यमरः । **पलितेति** । वृद्धाः जरत्यः याः वारयोषितः गणिकाः तासाम्, पलितस्य जराशुक्लस्य केशस्य जराकृतकेशशौक्ल्यस्य वा औषधं शौक्ल्यनिवारकं भेषजमिव, तमसि जराशुक्लानामपि केशानां नीलतयैव प्रतिभासादिति भावः । 'पलितं पङ्कतापयोः । पक्वकेशे केशपाके' इति हैमः । **कलीति** । 'सदाचारनाशकत्वान्मालिन्याच्च साम्यात्सुहृत्त्वम्' इति शिवरामः । **बौद्धे-**

मुदितमिव मत्तमातङ्गमण्डलमनोहरगण्डस्थले, फलितमिवातिसान्द्रबहुलच्छदविततमालकानने, परिस्फुरितमिवाति-

---

ति । बौद्धदर्शनं बुद्धमतानुयायिनां शास्त्रं तत्सिद्धान्त इत्यर्थः । **प्रत्यक्षेति** । प्रत्यक्षं अक्ष्णः पुरस्तात्स्थितं तमोव्यापनात्पूर्वं चक्षुषा गृहीतं वा द्रव्यं पदार्थम् । अपह्नुवानं आच्छादयत्, पुरःस्थितमपि वस्तु तमसि न दृश्यत इति भावः । तथा च मुरारिः, 'विश्वं चाक्षुषमस्तम्' इति । पक्षे प्रत्यक्षं इन्द्रियगोचरमपि द्रव्यं समुद्रभूधरादिकं पदार्थजातम् । अपह्नुवानं अपलपत्, शून्यमेव तत्त्वमिति तेषां परमसिद्धान्तादिति भावः । 'प्रत्यक्षदृश्यम्' इति पाठान्तरम् । 'बौद्धसिद्धान्तमिव' इति त्वपपाठः, सिद्धान्तशब्दस्य पुल्लिङ्गत्वात् । अत्रेदमवधेयम् । बौद्धेषु वैभाषिकसौत्रान्तिकौ बाह्यार्थास्तित्ववादिनौ । योगाचारस्तु विज्ञानमात्रमेव तत्त्वम्, न बाह्यार्थोऽस्तीत्येवं विज्ञानमात्रास्तित्ववादी । माध्यमिकः पुनः सर्वशून्यवादी । विज्ञानं बाह्यार्थाश्च सर्वे न सन्ति । शून्यमेव तत्त्वम् । अभावापत्तिरेव च मोक्ष इत्येतदीयः सिद्धान्तः । शून्यवाद एव सुगतमतकाष्ठा । इति । 'सर्वं ज्ञानमयं जगदिति मन्यमानास्ते, सूर्याचन्द्रमसौ व्योम ताराचक्रं वसुन्धरा । सरितः सागराः शैलाश्चित्तस्यैव विभूतयः । इति प्रत्यक्षपरिकल्पितमप्यर्थमन्यथयन्ति ।' इति व्याकरोति । एतादृशं तिमिरं उदजृम्भत ।

**मुदितमिवेति** । तिमिरं एतादृशं अजायत जातमित्यन्वयः । **मत्तेति** । मत्तमातङ्गानां मत्तगजानां मण्डलस्य मनोहरे गण्डमण्डले, मुदितं हृष्टमिव । अत्र प्रायेण वर्णनानि पुनरुक्तप्रायाणि । **फलितमिति** । अतिसान्द्रं अत्यन्तनिबिडं बहुलच्छदं अधिकपर्णं विततं विस्तृतं च यत् तमालकाननं तस्मिन्, फलितं संजातफलमिव । **परीति** । अतिकान्ता

कान्तकान्ताघनतरकेशसंहतौ, उन्मीलितमिवेन्द्रनीलरश्मिषु, अतिशयमांसलितमिवावटतटेषु, साटोपमिव स्फुटपाटवोत्कटविशङ्कटानेकविटपिविटपोत्कटस्फुटकुसुमपुटपिहितपदषट्पदावलिषु, घनतरघोरदन्तिघस्मरविषधरभोगभासुरम्, म-

---

मनोहरतरा कान्तानां या घनतरा अतिनिबिडा केशसंहतिः कचकलापः तस्याम्, परिस्फुरितं प्रकाशमानमिव । **उन्मीलितमिवेति** । इन्द्रनीलानां रश्मिषु किरणेषु, उन्मीलितं उद्दीपितमिव संवर्धितमिवेति यावत् । 'मिलितमिवेन्द्रनीलरश्मिभिः' इति पाठान्तरम् । **अतिशयेति** । अवटतटेषु गर्तप्रदेशेषु, अतिशयेन अत्यन्तं मांसलितं पुष्टमिव । 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः । 'अवटः गर्तः । तटं तीरम्' इति कश्चित् । 'अवटतटाटवीषु, इति पाठमङ्गीकृत्य 'निम्नोन्नतेषु काननेषु' इति प्राञ्चः । **साटोपमिति** । स्पुटेन व्यक्तेन पाटवेन बलेन उत्कटाः अधिकाः दृढा इत्यर्थः तादृशाः विशङ्कटाः महान्तश्च ये अनेके विटपिनः वृक्षाः तेषां विटपेषु शाखासु विद्यमानैः उत्कटैः अधिकैः स्फुटैः विकसितैः कुसुमपुटैः पुटसदृशैः पुष्पैः पिहितानि अन्तर्गृहीतानि पदानि येषां तेषां षट्पदानां भ्रमराणां आवलिषु पङ्क्तिषु, आटोपेन आडम्बरेण सहितं साटोपं सगर्वं सावष्टम्भमिवेति यावत् । 'साटोपं ससंभ्रमम् । संरम्भः संभ्रमस्तथाटोपः । इति हरिः' इति केचित् । उत्कटपदं द्वितीयं मत्तार्थकं षट्पदविशेषणं वा । 'कुसुमपुटनिहितपद' इति, 'कुटजविटपिविटपोत्कटविनाटितषट्पदालिषु' इति च पाठान्तरम् । 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ।' इत्यमरः । 'उत्कटस्तीव्रमत्तयोः ।' इति मेदिनी । **घनतरेति** । घनतराः महाबलाः घोराः भयंकराः ये दन्तिघस्मराः गजभक्षकाः विषधराः महाभुजङ्गमाः

दभरमत्तदन्तिदन्तद्युतितर्जनजर्जरितम् , दिवाकरोदयारम्भण-मिव संकुचत्कुवलयम् , असतां महत्त्वमिव तिरस्कृतसकला-

---

तेषां भोगवत् कायवत् भासुरं उज्ज्वलम् । 'घोरघस्मर' इति पाठान्तरम् । 'घनतरं घोरं भयानकं घस्मरो भक्षको यो विषधरस्तद्भोगवत् भासुरम्' इति शिवरामः । 'घोरो भीमे हरेऽपि च ।' इति मेदिनी । 'भक्षको घस्मरोऽद्मरः ।' इत्यमरः । 'सृघस्यदः क्मरच्' इति घस्मरशब्दे क्मरच् । **मदभरेति** । दन्तिनः गजाः । द्युतिः कान्तिः । तर्जनं वित्रासनम् । जर्जरितं शिथिलितम् । 'मदभरमत्तविशेषणं गजानां तारुण्यद्योतनाय । तच्च दन्तयोः श्वैत्याय' इति शिवरामः । **दिवेति** । दिवाकरस्य सूर्यस्य उदयारम्भणं उदयारम्भः । **संकुचदिति** । संकुचत् ह्रसत् अन्धकाराक्रान्ततया स्वल्पमिव लक्ष्यमाणं कुवलयं भूमण्डलं यस्मिंस्तत् तादृशम् । पक्षे संकुचन्ति घटमानानि कुवलयानि उत्पलानि यस्मिंस्तत् तथोक्तम् । 'स्यादुत्पलं कुवलयम्' 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । 'मण्डलं वलयं समम् ।' इति हरिः । **असतामिति** । असतां दुर्जनानाम् , महत्त्वं उन्नतपदप्राप्तिः । **तिरस्कृतेति** । तिरस्कृतं अपनीतं सकलानामपि वस्तूनां अन्तरं विशेषः नीचोच्चभावः स्थूलाल्पभावः संस्थानभेदो वा येन तत् तादृशम् । तमसि स्पर्शेन पदार्थमात्रमवगम्यते, न त्विदंतयेति भावः । 'शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् । सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हृतान्तरम् ।' इति कालिदासः । पक्षे तिरस्कृतं अवधीरितं सकलानां कलासहितानां पण्डितानां अन्तरं भेदः येन तत् तथोक्तम् । असन्तो हि महतीं पदवीमारूढाः पण्डितानां गौरवमनाकलयन्तस्तानपि पामरसदृशानवगणयन्तीति भावः । यद्वा तिरस्कृतं सकलानां विदुषां सर्वेषां वा आन्तरं अन्तर्गतोऽभिप्रायः

न्तरम् , निमीलन्नीलोत्पलव्याजरचिताञ्जलिपुटेन नमदिवागतं निशापतिं तिमिरमजायत ।

---

येन तादृशम्। 'अन्तरं विवरान्तर्धिभेदेष्ववधिमध्ययोः।' इति रत्नमाला । **निमीलदिति**। निमीलन्नीलोत्पलव्याजेन संकुचदिन्दीवरव्यपदेशेन रचितं कृतं यत् अञ्जलिपुटं करद्वयसंयोगः तेन। आगतं अचिरादागमिष्यन्तम्। आदिकर्मणि क्तः कर्तरि। निशापतिं चन्द्रम्। नमत् नमस्कुर्वदिव। प्राचीनतालपत्रपुस्तकेषु 'निशापतिम्' इत्येव दृश्यते। क्वचित्तु 'आगतां तमीम्' इत्यस्ति। तदा तमीं रात्रिमित्यर्थः। अत्रेदं बोध्यम्। रात्रौ हि नीलोत्पलानां विकास एव कविसमयसिद्धः । तथा च कविसमयनिरूपणावसरे 'रात्रावेव नीलोत्पलविकासः। दिवैव कमलविकासः' इति साहित्यचिन्तामणिः। तत्कथमत्र नीलोत्पलानां निमीलनमुच्यत इति चेदत्र वदामः। कविसमयश्चात्रान्यथापि दृश्यते। यथा, दिवापि उत्पलविकासः, रात्रावपि तन्निमीलनमिति । तथा च श्रीमति रामायणे दिवा गङ्गावर्णनावसरे 'क्वचित्फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाश्रिताम्' इति दिवापि तेषां विकासो वर्णितः । तथा दण्डिनापि अयुक्तरूपकनिरूपणावसरे 'इदमाविःस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम्। इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम्।' इति वदता रात्रौ नीलोत्पलानां निमीलनमङ्गीकृतम्। व्याख्यातं चेदम् 'यदा ज्योत्स्ना चन्द्रिका, तदा उत्पलं न विकसतीति ज्योत्स्नोत्पलयोगोऽसंगतः' इति। तस्मादुभयथापि कविसमयप्रसिद्धेर्नेदमनुपपन्नम्। अत एव संध्यावर्णनावसरे 'निमीलितानां कमलोत्पलानाम्' इति कवितार्किकसिंहः । सर्वमिदं तत्रैव व्याख्याने निरूपितम्। एतादृशं तिमिरं अजायत । क्वचित् 'अराजत' इति पाठः। ग्रन्थलिपिमुद्रितपुस्तके तु 'प्रत्यक्षद्रव्यमपह्नुवानम्' इत्यनन्तरं 'तिमिर-

अथ क्षणेनैव, सन्ध्याताण्डवाडम्बरोच्चलितमहानटजटाजूटकूटकुटिलस्खलनविवर्तितजह्नुकन्यावारिधाराबिन्दव इव विकीर्णाः, दुर्भरधरणिभारभुग्नभीमदिङ्मातङ्गमण्डलकरविमुक्त-

---

मुदजृम्भत' इत्येतद्विहाय 'मुदितमिव' इत्यारभ्य 'तिमिरमराजत' इत्येतदन्तमेकवाक्यतया योजितमस्ति । परं तु तस्मिन्नेव पुस्तके योजिते व्याख्याने 'प्रदोषे रजनीमुखे, तिमिरमजृम्भतेति भाविना संबन्धः' इति दृश्यत इति महानयं मुद्रापकस्य प्रमादः । तालपत्रपुस्तके तु वाक्यद्वयमस्मद्योजितरीत्यैव लक्ष्यते । शिवरामव्याख्यानसहिते मुद्रिते पुस्तके दृश्यमानः पाठस्तु सर्वथा न शुद्धः ।

**अथ क्षणेनैवेति** । अथ । क्षणेनैव । एतादृश्यः ताराः नक्षत्राणि । व्यराजन्त शोभन्ते स्मेति संबन्धः । 'निशाकरारम्भसमय एव संकुचत्कुवलयव्याजेन विरचिताञ्जलिपुटे नतिमति तमीतिमिरे' इति शिवरामपाठः । **संध्येति** । विकीर्णाः प्रसृताः, संध्याताण्डवाडम्बरेण संध्याकालनटनसंरम्भेण उच्चलिते कम्पिते महानटस्य शिवस्य जटाजूटकूटे कपर्दकोटौ कुटिलं वक्रं यत् स्खलनं आघातः तेन विवर्तिता विपर्यस्ता संभ्रान्तेत्यर्थः, जटाजूटकूटे कुटिलं यथा तथा स्खलनविवर्तिता वा या जह्नुकन्या गङ्गा तस्याः वारिधाराबिन्दवः जलासारकणा इव । 'कूटकुटिलविवरविनर्तित' इति पाठान्तरम् । 'ताण्डवं नटनं नाट्यम्' 'महाकालो महानटः' 'कपर्दोऽस्य (रुद्रस्य) जटाजूटः' इत्यमरः । 'आडम्बरस्तु संरम्भे बृंहिते तूर्यनिस्वने ।' इति हैमः । कूटशब्दः गिरिशृङ्गवाचकोऽपि प्रकृते कोटिमात्रपरः । राशिपरो वा । 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।' इति विश्वः । **दुर्भरेति** । तताः व्याप्ताः, दुर्भरेण भर्तुमशक्येन कृच्छ्रभर्तव्येन वा धरणि-

शीकरच्छटा इव तताः, अतिदवीयोनभःस्थलभ्रमणखिन्नदिन-करतुरङ्गमास्यविवरवान्तफेनस्तबका इव विस्तीर्णाः, गगनमहा-सरःकुमुदसंदोहसंदेहदायिनः, विश्वं गणयतो विधातुः शशिक-

---

भारेण भूभारेण भुग्नाः अवनतकायाः भीमाश्च ये दिङ्मातङ्गाः दिग्गजाः तेषां मण्डलस्य समूहस्य करैः शुण्डाभिः विमुक्ताः ऊर्ध्वप्रसारिताः शीकरच्छटाः जलकणसमूहा इव । 'मातङ्गगण्डमण्डलनिर्मुक्तमदशीकर' इत्यपि पाठः । दिग्गजानां भूभारवाहकत्वं श्रीमति रामायणे व्यक्तम् । **अतीति** । अतिदवीयः अतिदूरतरम् । दूरशब्दादीयसुनि 'स्थूलदूर' इत्यादिना यणादिपरलोपः, पूर्वस्य गुणश्च । भ्रमणं संचारः । तुरङ्गमाः अश्वाः । आस्यं मुखम् । वान्ताः निर्गलिताः । फेनस्तबकाः डिण्डीरखण्डाः । **विशीर्णाः** सर्वतः प्रसृताः । **गगनेति** । गगनमेव महासरः । संदोहः समूहः । 'संदोहविसरव्रजाः।' इत्यमरः । **विश्वमिति** । विश्वं सर्वं प्रपञ्चम् । गणयतः संख्यानं कुर्वाणस्य, संख्याय तत्तत्स्थाने तत्तत्संख्या-सूचकं लिपिविशेषमासञ्जयतो वा । विधातुः ब्रह्मणः । अस्य विलिखिता इत्यत्रान्वयः । संबन्धसामान्यषष्ठी । 'नलोक--' इति निषेधस्तु कारक-षष्ठ्या एव । विधात्रा विलिखिता इत्यर्थः । यद्वा शून्यबिन्दव इत्यत्रास्या-न्वयः । शशी चन्द्र एव कठिनीखण्डः लेखनीशकलं अल्पा तूलिकेत्यर्थः तेन । 'शशी चन्द्र एव कठीनी खटिका तस्याः खण्डेन शकलेन रचिता इति शेषः । कठिनी खटिकायां तु इति विश्वप्रकाशः' इति शिवरामः । 'कठिनी वर्णलेखिनी । शुक्लधातुशिलायां तु कठिनी कक्खटी खटी । इति बाणः ।' इति प्राञ्चः । 'कठिनी लेखनसाधनं शिलाविशेषः' इति कश्चित् । तम एव मषी कज्जलं तया श्यामे, तमः मषीव तद्वच्छ्यामे वा ।

ठिनीखण्डेन तमोमषीश्यामे अजिन इव वियति संसारस्याति-शून्यत्वात् शून्यबिन्दव इव विलिखिताः, जगत्त्रयविजिगीषाविनिर्गतस्य मकरकेतो रतिकरविकीर्णा इव लाजाञ्जलयः, गुलिकास्त्रगुलिका इव विक्षिप्ताः पुष्पधनुषः, वियदम्बुराशि-

---

पक्षे तम इव मषी तया श्यामे नीले । अजिने चर्मणीव । वियति आकाशे । अतिशून्यत्वात् अत्यन्तनिःसारत्वात् सर्वथा नश्वरत्वादिति यावत् । शून्यबिन्दवः शून्यताबोधकाः बिन्दवः । तत्तत्संख्याबोधनाय तत्तत्संकेतितलिपिविशेषनिवेशवत् शून्यत्वनिवेदनाय तत्स्थाने बिन्दुर्निवेश्यत इति संप्रदायादेवमुत्प्रेक्षा । प्रापञ्चिकं वस्तुजातं गणयित्वा तत्तदनुगुणां संख्यां विलिलेखिषुणा विधिना संसारस्य सर्वात्मना शून्यतया तदर्थं विलिखिताः शून्यसंख्यासूचकलिपिविशेषरूपा बिन्दवः किमित्युत्प्रेक्ष्यमाणा इति विशिष्टवाक्यतात्पर्यम् । **जगदिति** । विजिगीषा विजेतुमिच्छा । रतिः कामपत्नी । लाजाञ्जलयः अञ्जलिपरिमिताः भृष्टव्रीहयः । राज्ञि प्रतिष्ठमाने लाजा विकीर्यन्त इत्याचारः । तथा च कालिदासः । 'अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ।' इति । **गुलिकेति** । विक्षिप्ताः प्रयुक्ताः । पुष्पधनुषः मन्मथस्य । गुलिकास्त्रस्य गुलिकाक्षेपकस्य धनुर्विशेषस्य गुलिकाः गोलिका इव । 'गुलिका पिण्डम्' इति कश्चित् । गुलिका नाम रससिद्धो दृढः कन्दुकाकृतिरल्पाकारः कश्चित्पदार्थविशेष इति संप्रदायः । 'गुटिकास्त्रं गुलेल इति भाषायाम् । तस्य गुलिका इव गुरिया गोलीति वा द्वयं भाषायाम् ।' इति शिवरामः । 'मारवज्रगुलकप्रतिमेन' इति श्रीकण्ठचरितम् । 'वज्रगुलकं आयुधभेदः' इति तु व्याख्याता । **वियदम्बुराशिः** गगनमेव

फेनस्तवका इव वितताः, रतिविरचिता गगनाङ्गणे आतर्पण-पञ्चाङ्गुलय इव, व्योमतललक्ष्मीहारमुक्तानिकरा इव विशीर्णाः, हरकोपानलदग्धकामचिताचक्रादिन्दोर्वात्यावेशविप्रकी-

---

समुद्रः । **वितताः** विस्तृताः । **रतीति** । गगनाङ्गणे आकाशप्रदेशे आकाश एव चत्वरे वा । रतिविरचिताः कामपत्न्या कृताः । आतर्पणं मङ्गलालेपनं तस्य पञ्चाङ्गुलयः तत्र क्रियमाणाः अङ्गुलिपञ्चकसंनिवेशा इव । 'आतर्पणं प्रीणने स्यान्मङ्गलालेपनेऽपि च ।' इति मेदिनी । 'तरुस्तम्भे देव्याः कृतरुधिरपञ्चाङ्गुलितले' इति चण्डकौशिकम् । 'आतर्पणं आलपनं इति भाषायाम् । तस्य पञ्चाङ्गुलयः चुटकी इति भाषायाम् । उत्सवादावातर्पणेनाङ्गुली रञ्जयित्वा कुड्यादि रञ्जयन्तीति संप्रदायः ।' इति शिवरामः । 'आतर्पणपञ्चाङ्गुलिः आलिवर्ण इति प्रसिद्धः । पिष्टादिना तु माङ्गल्या या तु कुड्याङ्गणादिषु । चर्चा पञ्चाङ्गुलीक्लृप्ता तदातर्पणमिष्यते । इति कोशः ।' इति कश्चित् । 'पिष्टादिना तु माङ्गल्यो धामकुड्याङ्कणादिषु । बिन्दुः पञ्चाङ्गुलीभिश्च तदातर्पणमिष्यते ।' इति क्वचिदुपलभ्यते । **व्योमेति** । विशीर्णाः सूत्रच्छेदादितस्ततः प्रसृताः, व्योमतललक्ष्म्याः नभःस्थलश्रियः हारे घटिताः मुक्तानिकराः मौक्तिकसमूहा इव । **हरेति** । चिताचक्रं चक्राकारं शवदाहोपयोगीन्धनरचनम् । इन्दुः चन्द्रः । चन्द्र एव तादृशं चिताचक्रमिति भावः । वात्या वातसमूहः मण्डलवायुरित्यर्थः तस्य आवेशेन संरम्भेण विप्रकीर्णाः इतस्ततो विक्षिप्ताः । वातशब्दात् समूहार्थे 'पाशादिभ्यो यः' इति यः । कामस्य मन्मथस्य कीकसखण्डाः अस्थिशकला इव । 'कीकसं कुल्यमस्थि च ।' इत्यमरः । 'चन्द्रचिताचक्रात्' इति शिवरामधृतः पाठः । 'चिताचक्रं

र्णाः कामकीकसखण्डा इव, तिमिरोद्गमधूमधूमलसन्ध्यानलपरितप्तगगनकटाहभृज्ज्यमानस्फुटितलाजानुकारास्तारा व्यराजन्त। एताभिः श्वित्रीव वियदशोभत।

ततो दीर्घोच्छ्वासरचनाकुलं सुश्लेषवक्रघटनापटु सत्काव्य-

---

चन्द्रः कुसुमधनुषो दग्धवपुषः कलङ्कस्तत्रत्यः स्पृशति मलिनाङ्गारकलनाम्। यदेतस्य ज्योतिर्दरदलितकर्पूरधवलं मरुद्भिर्भस्मैतत्प्रसरति विकीर्णं दिशि दिशि।' इति राजशेखरः। **तिमिरेति**। तिमिरोद्गमः अन्धकारप्रसरणमेव धूमः तेन धूमलः कृष्णलोहितः यः संध्यैव अनलः अग्निः तेन परितप्तः गगनमेव कटाहः बृहत् लोहपात्रं तत्र भृज्ज्यमानाः ताप्यमानाः स्फुटिताः विशीर्णाश्च ये लाजाः तदनुकाराः तत्सदृशाः त इत्युत्प्रेक्ष्यमाणा इत्यर्थः। 'धूम्रधूमलौ कृष्णलोहिते।' इत्यमरः। 'कटाहो घृततैलादिपाकपात्रेऽपि कर्परे।' इति विश्वः। 'दिनसंध्यावरवध्वोर्वहति विवाहाग्निविभ्रमं भानुः। लाजायते च साक्षादुत्तरलस्तारकानिकरः।' इति बालरामायणम्। एतादृश्यः ताराः व्यराजन्त। 'गगनमहास्थलीकटाह' 'गगनमहानसस्थालीभर्ज्यमान' इति पाठान्तरम्। **एताभिरिति**। एताभिः ताराभिः। श्वित्रि धवलकुष्ठरोगवत्। 'कुष्ठश्वित्रे' इत्यमरः। चित्रितामिति पाठान्तरमिति शिवरामः।

**तत इति**। सत्काव्यविरचनं समीचीनस्य काव्यस्य निर्माणमिव। एतादृशं, चक्रवाकमिथुनं अतीव अखिद्यत खिन्नमभूदित्यन्वयः। दीर्घः विरहतापेन दूरप्रसृतः यः उच्छ्वासः श्वासः तस्य रचनया आकुलं व्याकुलम्, विरहखेदेन दीर्घं निश्वसदित्यर्थः। पक्षे दीर्घाः ये उच्छ्वासाः सर्गस्तबकादिवदवान्तरविभागाः तेषां रचनायाः कुलं गृहम्, तत्सहितमि-

विरचनमिव, चक्रवाकमिथुनमतीवाखिद्यत। कमलिनीसंचरणलग्नमकरन्दबिन्दुसंदोहलुब्धमुग्धमुखरमधुकरमालाशबलगात्रम्, कालपाशेनेव मूर्तिमद्रामशापेनेवाकृष्यमाणं चक्रवाकमिथुनं विजघटे। रविविरहविधुरायाः कमलिन्या हृदयमिव

---

त्यर्थः। 'उच्छ्वासः प्राणने श्वासे गद्यपद्यान्तरेऽपि च' 'कुलं कुल्ये गणे गेहे देहे जनपदेऽन्वये।' इति हैमः। **सुश्लेषेति**। शोभनः श्लेषः आलिङ्गनम्, वक्त्रघटना परस्परमुखयोजनं चुम्बनमिति यावत् तत्र पटु दक्षम्। पक्षे शोभनः श्लेषः तन्नामा अलंकारः गुणो वा, वक्त्रं नाम वृत्तविशेषः तयोः घटनायां घटनया वा पटु समर्थम्। 'वक्त्रं मुखे वृत्तभेदे' इति मेदिनी। 'नानार्थसंश्रयः श्लेषः' इति श्लेषालंकारलक्षणम्। 'यत्रैकपदवद्भावः पदानां भूयसामपि। अनालक्षितसंधीनां स श्लेषः परमो गुणः।' इति तु श्लेषाख्यगुणस्य लक्षणम्। 'वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्।' इति वृत्तरत्नाकरः। अत्र सामान्यतः सत्काव्यविरचनमित्युक्तावपि, उक्तैर्विशेषणैः कविना गद्यकाव्यं विवक्षितमिति, स्वग्रन्थश्चात्र मनसि कृत इति च प्रतीमः। **कमलिनीति**। लुब्धाः साभिलाषाः। मुग्धाः रमणीयाः मत्ता वा। शबलं कर्बुरं व्याप्तमिति यावत्। कालपाशः समयरूपिणो यमस्य पाशः। **मूर्तीति**। मूर्तिमान् सशरीरः यः रामशापः तेन। आकृष्यमाणं कण्ठे गृहीत्वा बलान्नीयमानमिव। विजघटे विश्लिष्टमभूत्। विरहातुरो हि विलपन् रामभद्रः परिहसच्चक्रवाकमिथुनमाप्रभातमनुभव वियोगमिति शशाप। 'कमलिनीपरिमलपरिचयागतालिमालाकुलितकण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे' इति कादम्बरी। **रवीति**। विधुरा विह्वला।

द्विधा पपाट चक्रवाकमिथुनम्। आगमिष्यतो हिमकरदयितस्य पार्श्वे संचरन्ती कुमुदिन्या भ्रमरमाला दूतीवालक्ष्यत। तारकानयनजलबिन्दुभिरस्तं गतस्य दिवाकरदयितस्य शोकादिव ककुभो व्यरुदन्। भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन शोकानलमुर्मुरो नलिनीकोशहृदये जज्वाल। ततो रविरश्मिदवाग्निभस्मीकृतनभोवनमषीराशिरिव, श्रुतिवचनमिव क्षपितदिगम्बरदर्शनम्, कृष्णरूप-

---

द्विधा पपाट द्विधा गतमभूत्, अस्फुटत, विश्लिष्टमभूचेति भावः। अट पट गतौ। 'पपाट भिन्नं बभूव' इति कश्चित्। **आगमिष्यत इति।** कुमुदिन्याः कैरविण्याः। पार्श्वे समीपे। संचरन्ती। भ्रमरमाला। आगमिष्यतः। हिमकरः चन्द्र एव दयितः पतिः तस्य। दूतीव। अलक्ष्यत दृष्टा। **तारकेति।** ककुभः दिशः। अस्तं गतस्य। दिवाकरः सूर्य एव दयितः तस्य। शोकात् दुःखात्। तारकाः नक्षत्राण्येव नयनजलबिन्दवः नेत्राम्बुकणाः तैः, तैरुपलक्षिता इत्यर्थः। व्यरुदन् रुदन्ति स्मेव। 'तारकाव्याजात्......स्थूलाश्रुबिन्दुभिः' इति शिवरामपाठः। 'तारकानयनजलबिन्दुव्याजात्' इति पाठस्तु, रूपकोपरि व्याजपदोपयोगाभावात्प्रत्युत वैपरीत्याच्च न शुद्धः। **भास्वत इति।** किञ्जल्कराजिः केसरपङ्क्तिः। मुर्मुरः तुषानलः। नलिन्याः कमलिन्याः कोशः मुकुल एव हृदयं तस्मिन्। जज्वाल दिदीपे। **तत इति।** एतादृशं अन्धतमसं अजृम्भतेत्यन्वयः। रश्मिः किरणः। दवाग्निः वनवह्निः। भस्मीकृतं दग्धम्। नभोवनं आकाशमेव अरण्यम्। मषीराशिः अङ्गारसमूहः। 'अलातोऽङ्गारको मषी।' इति वैजयन्ती। मषी श्यामिकेति केचित्। 'धूमराशिरिव' इति पाठान्तरम्। **श्रुतीति।**

**मपि तिरस्कृतविश्वरूपभावविशेषम्, सद्यो द्रावितराजतपटद्रवप्रवाह इव, शार्वरमन्धतमसमजृम्भत ।**

---

श्रुतिवचनं वेदवाक्यम् । क्षपितं नाशितं दिशां अम्बरस्य आकाशस्य च दर्शनं आलोकनं येन तत् तथोक्तम्, द्यावाभूमी व्याप्नुवानमित्यर्थः । पक्षे दिगम्बरदर्शनं दिगम्बरजैनशास्त्रम् । 'दिगम्बरदर्शनं बौद्धसिद्धान्तः' इति कश्चित् । **कृष्णेति** । कृष्णो वासुदेवः तस्य रूपं स्वभावः कृष्णत्वमिति यावत् । तादृशमपि, तिरस्कृतः धिक्कृतः असंमत इत्यर्थः विश्वरूपभावः विश्वात्मकतैव विशेषः उत्कर्षः येन तत् तादृशम् । कृष्णस्वभावस्य तिरस्कृतविश्वरूपभावविशेषत्वं विरुद्धम् । पक्षे कृष्णं नीलं रूपं यस्य तत् तथोक्तम् । तिरस्कृतः निराकृतः विश्वरूपाणां सर्वस्वभावानां नानाकाराणामित्यर्थः भावानां पदार्थानां विशेषः प्रकारः परस्परभेदो वा येन तत् तादृशमिति परिहारः । विरोधाभासोऽलंकारः । 'कृष्णमपि' इति क्वचित्पाठः । स चाशुद्धः । वासुदेवपरतायां नपुंसकत्वायोगेन विरोधोपपादनस्य दुष्करत्वात् । अन्धतमसमजृम्भतेत्युक्त्या अन्धतमसस्य कर्तुर्विशेषणानां प्रथमान्तत्वौचित्यात् । शिवरामीयादिषु त्विदं विशेषणमेव न दृश्यते । 'रूपं स्वभावे शुक्लादौ सौन्दर्ये नाटकेऽपि च ।' इति नानार्थरत्नमाला । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबन्धुजन्तुषु ।' इति मेदिनी । 'विशेषः प्रकारभेदयोः' इति जटाधरः । **सद्य इति** । द्रावितः अग्निना संताप्य स्रावितः । 'राजतपटः रविपट इति प्रसिद्धः । कृष्णाभ्रकमिति केचित्' इति कश्चित् । 'द्रावितराजपट्ट इव समुद्रप्रवाह इव' इति शिवरामीयः पाठः । क्वचित्त्विदं न दृश्यते । **शार्वरमिति** । शर्वर्यां रात्र्यां भवं शार्वरं नैशिकमित्यर्थः । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति शर्वरीशब्दादणिति प्राञ्चः । 'कथं

**अथ क्षणेन क्षणदाराजकन्याकन्दुक इव, कन्दर्पकनकदर्पण इव, उदयगिरिबालमन्दारपुष्पस्तबक इव, प्राचीललनाललामललाटतटघटितबन्धूककुसुमतिलकचक्राकारः, कनक-**

---

तर्हि, शार्वरस्य तमसो निषिद्धये इति कालिदासः । अनुदितौषसरागेति भारविः । समानकालीनं प्राक्कालीनमित्यादि च । अपभ्रंशा एवैत इति प्रामाणिकाः ।' इति भट्टोजिदीक्षितः । 'शार्वरं शर्वरीसंबन्धि । शेषत्वेन विवक्षायामण् । भावार्थे तु ठञ् स्यात्' इति शिवरामः । अन्धतमसं गाढं ध्वान्तम् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इत्यच् । अजृम्भत ववृधे । पूर्वं वर्णितमेव तमः पुनरपि किमर्थमत्र वर्णितमिति विचारणीयम् ।

**अथेति** । अथ क्षणेन । रजनीपतिः चन्द्रः । उदयम् आससाद प्राप्त इति संबन्धः । क्षणदाराजकन्यकेत्यादिना चन्द्र एवोत्प्रेक्ष्यते । **क्षणदेति** । क्षणदा रात्रिरेव राजकन्या तस्याः कन्दुकः क्रीडासाधनभूतः पदार्थविशेषः स इव । 'गेन्दुकः कन्दुकः' इत्यमरः । कनकदर्पणः स्वर्णमुकुरः । रक्तत्वेन चन्द्रस्य साम्यार्थं कनकग्रहणम् । **बालमन्दारः** अचिरप्ररूढमन्दारवृक्षः । बालत्वं स्तबके आरुण्यातिशयद्योतनाय । **प्राचीति** । प्राचीं प्राची दिगेव ललनाललामं स्त्रीषु भूषा प्रधानभूता वा श्रेष्ठा युवतिरित्यर्थः तस्याः ललाटतटे फालप्रदेशे घटितं योजितं यत् बन्धूककुसुमतिलकचक्रं चक्राकारं बन्धुजीवपुष्पदलरचितं विशेषकं तस्याकार इव आकारो यस्य स तथोक्तः । 'प्रधानध्वजश्टङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजिप्रभावेषु ललामं स्याल्ललाम च ।' इति रुद्रः । 'दूरलग्नपरिमेयरश्मिना वारुणी दिगरुणेन भानुना । भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ।' इति कुमारसंभवः । 'प्राचीललाटतटकुङ्कुमबिन्दुचक्राकारः' इति

कुण्डलमिव नभःश्रियः, दिग्वधूप्रसाधिकाहस्तस्रस्तालक्तकपिण्ड इव, शातकुम्भकुम्भ इव गगनसौधतलस्य, प्रस्थानमङ्गलकलश इव त्रिभुवनविजयविनिर्गतस्य मकरकेतोः, कन्दर्पकार्तस्वरतूणमुखमिव, कुङ्कुमारुणैकस्तनकलश इव आख-

---

शिवरामपाठः । **दिगिति** । दिशामेव वधूनां स्त्रीणां या प्रसाधिका अलंकर्त्री तस्याः हस्तात् स्रस्तः च्युतः अलक्तकपिण्डः लाक्षापङ्क इव । 'दिव्यवधू...' इति पाठान्तरम् । **शातकुम्भेति** । गगनमेव सौधतलं प्रासादस्थलं तस्य, शातकुम्भकुम्भः अलंकारतया तत्र विन्यस्यमानः कनकमयः कलश इव । 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ।' इत्यमरः । **प्रस्थानेति** । त्रिभुवनविजयार्थं विनिर्गतस्य प्रस्थितस्य । मकरकेतोः मन्मथस्य । प्रस्थानमङ्गलकलश इव प्रस्थानसमये ब्राह्मणैः पूर्णपात्रतया आनीयमानो मङ्गलप्रदः कुम्भ इव । 'प्रस्थानमङ्गलकलश इव निशाविलासिन्याः' इति पाठो द्वित्रेषु तालपत्रकोशेषु दृश्यते । 'त्रिभुवनविजयैषिणः' इत्यपि पाठः । **कन्दर्पेति** । कन्दर्पस्य यः कार्तस्वरतूणः स्वर्णमयनिषङ्गः तस्य मुखं वदनभाग इव, वर्तुलत्वादिसिद्धये मुखपदम् । 'रुक्मं कार्तस्वरम्' इत्यमरः । एतदुपरि 'प्राच्यशैलशिखराग्रप्ररूढजपाकुसुमच्छविः, स्वच्छकुङ्कुमपिण्डपूर्णपात्रमिव निशाविलासिन्याः' इत्यधिकः पाठो दृश्यते शिवरामीये । व्याख्यातं च तेनैवम् 'प्राच्यां भवः प्राच्यः शैलः तच्छिखराग्रे प्रकटं जपाकुसुमं तच्छविः । ओड्रपुष्पं जपापुष्पमित्यमरः । स्वच्छकुङ्कुमेन पिण्डं सान्द्रं पूर्णपात्रमिव निशाविलासिन्याः । पिण्डं सान्द्रे बले काये तुलेऽपि परिकीर्तितम् । पूर्णपात्रं वस्तुपूर्णपात्रे वर्द्धापकेऽपि च । इति विश्वः ।' इति । **कुङ्कुमेति** । आखण्डलाशा इन्द्रदिक्

ण्डलाशाङ्गनायाः, गगनगामिविद्याधरीकरतलावस्थितलीला-शुकपञ्जर इव, पूर्वाचलशिखरविश्रान्तकिन्नरमिथुनरक्तवस्त्र-कञ्चुकितवीणालाबुरिव, गरुड इव हरिणाधिष्ठितः, राम इव लक्ष्मणान्वितः, वानरेन्द्र इव अनुरक्ततारः, वृषभ इव

---

प्राची दिगित्यर्थः सैव अङ्गना स्त्री तस्याः, कुङ्कुमेन अरुणः एकः स्तनकलशः कुचकुम्भः स इव । 'आखण्डलः सहस्राक्षः' इत्यमरः । **गगनेति** । गगनगामिन्याः आकाशसंचारिण्याः विद्याधर्याः करतले अवस्थितः यः लीलाशुकस्य पञ्जरः स इव । **पूर्वेति** । पूर्वाचलस्य उदयाद्रेः शिखरे विश्रान्तं श्रमापनोदनाय स्थितं यत् किन्नरमिथुनं तस्य रक्तवस्त्रकञ्चुकिता रक्तवसनाच्छादिता या वीणालाबुः वीणामूलस्थिततुम्बीफलं सेव, 'अलाबुस्तुम्बकः प्रोक्तः' इति चन्द्रः । 'आलाबुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला ।' इति वाचस्पतिः । इदं विशेषणद्वयं क्वचिन्न दृश्यते । **हरिणेति** । हरिणेन मृगेण अधिष्ठितः आक्रान्तः । पक्षे हरिणा अधिष्ठित इति पदद्वयम् । हरिशब्दस्य तृतीयायां हरिणेति रूपम् । हरिणा विष्णुना । 'क्षीरसिन्धुरिव' इति क्वचित्पाठः । **लक्ष्मणेति** । लक्ष्मणा चिह्नेन कलङ्केनेत्यर्थः । 'चिह्नं लक्ष्म च लक्षणम् ।' इत्यमरः । पक्षे एकं पदं तत् । लक्ष्मणेन सुमित्रापुत्रेण अन्वितः । **वानरेन्द्रः** वाली । **तारेति** । अनुरक्ताः लोहितवर्णाः प्रिया वा ताराः नक्षत्राणि यस्य स तथोक्तः । यद्वा अनुरक्ता प्रीतिमती तारा बृहस्पतिपत्नी यस्मिन् स तादृशः । एतत्कथा ताराशशाङ्के श्रीकृष्णकविप्रणीते विस्तरेण द्रष्टव्या । 'तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम् । स्त्री बुद्धदेवताभेदे वालिगीष्पतिभार्य-

**रोहिणीप्रियः, सुराजेव रक्तमण्डलः, जाम्बवानिव ऋक्षपरिवृतो रजनीपतिरुदयमाससाद ।**

**कामिनीहृदयसंक्रामित इव, चक्राङ्गनानयनयुगलपीत**

---

योः ।' इति मेदिनी । पक्षे तारा नाम वालिपत्नी 'तारास्मि वज्रहृदया विशिखैरभेद्या' इति रामायणचम्पूः । 'सुग्रीव इव तारापतिः' इति शिवरामपाठः । केचित्तु वानरेन्द्रः सुग्रीवः । तारा तस्य पत्नी । 'तारा स्यात्सुग्रीवगुरुयोषितोः ।' इति रत्नमालेत्याहुः । **रोहिणी** चन्द्रस्य पत्नी, गौश्च । 'रोहिणी सोमवल्के भे कण्ठरोगोमयोर्गवि ।' इति हैमः । 'रोहिणी सुरभिः नक्षत्रविशेषश्च' इति कश्चित् । **सुराजा** शोभनः नृपतिः । 'न पूजनात्' इति निषेधान्न टच् । **रक्तेति** । रक्तं लोहितं मण्डलं बिम्बं यस्य सः । पक्षे रक्तं स्नेहयुक्तं मण्डलं राष्ट्रं यस्य स तादृशः । 'मृदुकरसहितश्च' इति क्वचिदधिकः पाठः । स चैकविशेषणप्रकरणाननुगुणः । तदा करः किरणः राजदेयभागश्च । **जाम्बवान्** रामायणे सुप्रसिद्धः ऋक्षाधिपतिः । **ऋक्षेति** । ऋक्षाणि नक्षत्राणि । पक्षे ऋक्षाः भल्लूकाः 'नक्षत्रमृक्षं भं तारम्' 'ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः । एतादृशो रजनीपतिरुदयमाससाद ।

**कामिनीति** । संक्रामितः लगितः । अनुरागलौहित्ययोः श्लेषभित्तिकामूलकाभेदाध्यवसायादेवमुत्प्रेक्षेति बोध्यम् । अनुरागो रक्तवर्ण इति कविसमयः । **चक्रेति** । चक्राङ्गनानां चक्रवाकीणां नयनयुगलेन पीत इव । चक्रवाकीणां विरहभयेन संध्यारागदर्शनं नयनयुगलपीतत्वेन संभाव्यते । सम्यक्दर्शनं च महाकविभिः प्रायेण नयनपानत्वेनैव वर्ण्यते । यथा, 'पपौ निमे-

इव, रक्तकुमुदकोशालीढ इव, क्षीणतां जगाम क्षणदाकरगतो रागः ।

अनन्तरं शर्वरीव्रजाङ्गनाविष्कृतनूतननवनीतस्वस्तिक इव, कुसुमकेतोर्मुखच्छायामुद्रित इव मुकुरः, श्वेतातपत्रमिव

---

षालसपक्ष्मपङ्क्तिः।' 'पिबन्निव नेत्राभ्याम्' इत्यादि। केचित्तु रोदनकृतं चक्रवाकीनयनलौहित्यमेवं संभाव्यत इति भावं वर्णयन्ति। 'चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयोः।' इति मेदिनी। 'चकोराङ्गना' इति क्वचित्पाठः। **रक्तेति**। रक्तकुमुदकोशैः रक्तोत्पलमुकुलैः आलीढः गृहीत इव। 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके।' इति मेदिनी। **क्षणदेति**। क्षणदाकरगतः चन्द्रसंलग्नः। 'क्षणदाकृतः' इति पाठान्तरम्। रागः लौहित्यम्।

**अनन्तरमिति**। अनन्तरं एतादृशः उडुपतिः चन्द्रः, उज्जगाम उद्गतः उदित इत्यर्थः। **शर्वरीति**। शर्वरी रात्रिरेव व्रजाङ्गना गोपी। नवनीतस्वस्तिकः नवनीतपिण्डः। 'गोपे गोष्ठेऽध्वौघयोश्च व्रजः स्यात्' इत्यजयः। 'घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम्' इत्यमरः। 'स्वस्तिकः पिण्डविन्यासौ' इति वैजयन्ती। 'स्वस्तिकः चतुष्कमिव, चौक इति भाषायाम्। स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः। इति विश्वप्रकाशः।' इति शिवरामः। **कुसुमेति**। कुसुमकेतोः मन्मथस्य। मुखच्छायया वदनप्रतिबिम्बेन मुद्रितः अङ्कितः तत्सहित इत्यर्थः। मुकुरः दर्पण इव। मुखच्छाया कलङ्कस्थानीयेति बोध्यम्। सर्वेष्वपि तालपत्रकोशेष्वस्मत्संपादितेषु 'मुखच्छाया—' इत्येव दृश्यते। 'स्वस्तिक इव मृगच्छायामुद्रित इवादर्शः' इति मुद्रिते क्वचिद्दृश्यमानः पाठस्तु अर्थवैधुर्यादशुद्धः।

मकरकेतोः, दन्तपालिचक्रमिव वियन्महाखड्गस्य, श्वेतचामरमिव मदनमहाराजस्य, बालपुलिनमिव निशायमुनायाः, स्फाटिकलिङ्गमिव गगनमहातापसस्य, अण्डमिव कालोरगस्य, कम्बुरिव गगनमहार्णवस्य, स्फाटिककमण्डलुरिव नभोव्रतिनः, चैत्यमिव मदनारिदग्धस्य मकरकेतोः, चिताचक्रमिव कलङ्ककालाङ्गारशबलं सङ्कल्पजन्मनः, पुण्डरीक-

---

**दन्तेति** । वियत् आकाशमेव महाखड्गः महान् असिः तस्य, दन्तपालिचक्रमिव चक्राकारं दन्तमयं मुष्टेरधःफलकमिव । 'पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः ।' इति मेदिनी । 'दन्तस्य गजदन्तस्य पालिः गजदन्तमयः त्सरुरिति यावत्' इति शिवरामः । 'दन्तमयत्सरोरधश्चक्रम्' इति केचित् । **बालेति** । निशैव यमुना तस्याः, बालपुलिनं अल्पसैकतमिव । 'तोयोत्थितं तत्पुलिनम्' इत्यमरः । **स्फाटिकलिङ्गं** स्फटिकमयशिवलिङ्गम् । **अण्डमिति** । काल एव उरगः सर्पः तस्य, अण्डं पेशी इव । 'पेशी कोशो द्विहीनेऽण्डम्' इत्यमरः । **कम्बुः** शङ्खः । 'कम्बुर्ना वलये शङ्खे' इत्यमरः । **स्फाटिकेति** । नभः आकाशमेव व्रती नियमवान् संन्यासीत्यर्थः तस्य, स्फाटिककमण्डलुः स्फटिकमयो जलपात्रविशेषः, स इव । 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः । **चैत्यमिवेति** । मदनारिदग्धस्य हरेण भस्मीकृतस्य । मकरकेतोः मन्मथस्य । चैत्यं मरणानन्तरं तद्बहुमानस्मरणादिकृते निर्मीयमाणं आयतनमिव । 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे ।' इति रुद्रः । **चितेति** । कलङ्क एव कालाङ्गारः कृष्णं शान्ताग्नि काष्ठं तेन शबलं व्याप्तम् । संकल्पजन्मनः कामस्य । चिताचक्रं चितिमण्डलमिव । 'अथ न स्त्री स्यादङ्गारोऽलात-

**मिव गगनगामिगङ्गायाः, फेनसञ्चय इव गगनमहार्णवस्य, पारदपिण्ड इव कालधातुवादिनः, राजतकलश इव दूर्वाप्रवालशबलो मनोभवाभिषेकस्य, श्वेतचक्रमिव कन्दर्परथस्य, चूडामणिरिव उदयगिरिनागराजस्य, श्वेतपारावत इव अ-**

---

मुल्मुकम् ।' इत्यमरः । 'अङ्गारः साग्निर्निरग्निश्च । तत्र साग्नौ यथा— अङ्गारचुम्बितमिव व्यथमानमास्ते । इति । निरग्नौ यथा— चिताचक्रं चन्द्रः कुसुमधनुषो दग्धवपुषः कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारकलनाम् । इति' इति अमरव्याख्याता मुकुटः । 'चिता चित्या चितिः स्त्रियाम् ।' इत्यमरः । सर्वेष्वपि तालपत्रकोशेष्वेवमेव पाठो दृश्यते । ग्रन्थलिपिमुद्रितपुस्तके तु 'चैत्यमिव कालाङ्गारशबलं भवनेत्राग्निदग्धस्य संकल्पजन्मनः ।' इत्येवं पाठो दृश्यते । 'चैत्यं चितास्थानं कालाङ्गारः कालमषी' इति परं तत्र व्याख्यानमपि योजितमस्ति । **पुण्डरीकं** सिताम्भोजम् । 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । **गगनेति** । गगनगामिनी आकाशे प्रवहन्ती या गङ्गा मन्दाकिनी तस्याः । गगनगामीति पुण्डरीकविशेषणं वा । फेनसंचयः डिण्डीरपुञ्जः । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । **पारदेति** काल एव धातुवादी रसवादीत्युच्यमानः कारन्धमी तस्य, पारदपिण्डः सिद्धिवशात्पिण्डीभूतो रस इव । 'धातुं वदति उपायान्तरेण कर्तुं कथयतीति धातुवादी' इति कल्पद्रुमः । 'चपलो रसः सूतश्च पारदे ।' इत्यमरः । **राजतेति** । मनोभवस्य मन्मथस्य यः अभिषेकः पट्टाभिषेकः तस्य, तदर्थं स्थापित इत्यर्थः । दूर्वा नाम कश्चित् हरिततृणविशेषः तस्याः प्रवालेन पल्लवेन शबलः । राजतकलशः रजतमयकुम्भ इव । **श्वेतचक्रं** श्वेतोपलनिर्मितं रथाङ्गम् । **चूडेति** ।

**म्बरमहाप्रासादस्य, गगनसरिद्धौतसिन्दूरं कुम्भस्थलमिवैरावतस्य, भुग्नश्रृङ्गपुराणगोमुण्डखण्ड इव ताराश्वेतगोधूमशालिनो नभःक्षेत्रस्य, मलयजपिण्डपाण्डुरराजततालवृन्तमिव सिद्धा-**

---

उदयगिरिरेव नागराजः तस्य, चूडामणिः शिरोरत्नमिव । **श्वेतेति**। अम्बरं गगनमेव महाप्रासादः महासौधः तस्य, तत्र स्थित इत्यर्थः । श्वेतपारावतः धवलवर्णः कपोत इव । 'प्रासादो देवभूभुजाम् ।' 'पारावतः कलरवः कपोतः' इत्यमरः । **गगनेति** । ऐरावतस्य इन्द्रगजस्य, गगनसरिता गङ्गया धौतं क्षालितं सिन्दूरं यस्य तत् तथोक्तम् । **कुम्भस्थलं** शिरःपिण्डः । 'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः । 'विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत' इति कादम्बरी। 'कुम्भस्थलमिव वियदैरावतस्य' इति क्वचित्पाठः । **भुग्नेति** । तारकाः नक्षत्राण्येव श्वेतगोधूमाः धवला व्रीहिभेदाः तैः शालते शोभत इति तस्य तथोक्तस्य । नभः आकाशमेव क्षेत्रं केदारः तस्य । भुग्नविषाणः वक्रश्रृङ्गः मुखमण्डलान्तःपातिविषाण इत्यर्थः तादृशः पुराणः जीर्णः गोमुण्डखण्डः गोशीर्षखण्ड इव । कलङ्कानुरोधेन भुग्नविषाणत्वोक्तिः । क्षेत्रेषु दृष्टिदोषपरिहाराय पक्ष्यादिवित्रासनाय च यष्टौ गोमुण्डप्रतिकृतिर्निक्षिप्यत इत्याचारः । 'भग्नश्रृङ्गपुराण' इति पाठं स्वीकृत्य 'भग्नश्रृङ्गः, भग्नविषाणत्वं वर्तुलत्वार्थम् । पुराणः चर्मरहितः गोमुण्डखण्ड इव । सीमानिर्माणार्थं रक्षार्थं वा क्षेत्रे गोमुण्डः समारोप्यते ।' इति शिवरामः । **मलयजेति** । सिद्धाङ्गनायाः हस्तात् विस्रस्तं लम्बितं प्रभ्रष्टं वा, मलयजपिण्डेन चन्दनपङ्केन पाण्डुरं धवलितं राजततालवृन्तं रूप्यमयव्यजनमिव । पाण्डिमातिशयसिद्धये मलयजपिण्डपाण्डुरत्वविशेषणम् । मलयजपिण्डवत् पाण्डुरमि-

ङ्गनाहस्तविस्रस्तम्, क्षीणरागो भगवानुडुपतिरुज्जगाम । यश्च पुण्डरीकं लोकलोचनमधुकराणाम्, शयनीयसैकतं चित्त-राजहंसानाम्, स्फाटिकव्यजनं विरहवह्नीनाम्, श्वेतशाणचक्रं मन्मथसायकानाम् ।

अत्रान्तरे अभिसारिकासार्थप्रेषितानां प्रियतमान् प्रति

---

ति वा। 'व्यजनं तालवृन्तकम्' इत्यमरः। 'मलयजपिण्डपाण्डुरराजतपात्र-मिव' इति पाठं स्वीकृत्य 'मलयजेन घृष्टचन्दनेन पिण्डं चूर्णमत एवा-तिपाण्डुरं राजतपात्रं रौप्यपात्रमिव, यद्वा मलयजपिण्डैः घृष्टचन्दनगुटि-काभिः पाण्डुरमित्यादि । उभयत्र अंशनवर्णनं चन्दनपङ्कबिन्दवो गुटिका वा तारा विकीर्णा इति ध्वनयितुम्।' इति शिवरामः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्।' इत्यमरः। उडुपतिः नक्षत्रराजः चन्द्र इत्यर्थः। 'तारकाप्युडु वा स्त्रियाम्।' इत्यमरः। उडुपतिरित्यस्य स्थाने क्वचित् 'ग्रहपतिः' इति दृश्यते । तदा ग्रहपतिपदस्य चन्द्रपरत्वे प्रमाणं मृग्यम् । **यश्चेति** । लोकलोचनान्येव मधुकराः भ्रमराः तेषाम्, पुण्डरीकम् । चित्तानि मनांस्येव राजहंसाः तेषाम्, शयनीयसैकतं शयनभूतं पुलिनम् । सर्वेषामपि नयनानि मनांसि च तत्रैव लगन्तीति भावः । विरहवह्नीनां वियोगाग्नीनां, स्फाटिकव्यजनं, विरहानलोद्दीपक इति भावः । **श्वेतेति**। श्वेतशाणचक्रं आयुधानां निशितत्तासिद्धये घर्षणायोपयुज्यमानश्चक्राकारो धवलोपलः । 'शाणो मासचतुष्टये । लोहादीनां च निकषे शाणी प्रावर-णान्तरे ।' इति मेदिनी । उत्प्रेक्षा ।

**अत्रेति** । अत्रान्तरे अस्मिन्नवसरे । प्रियतमान् प्रति वल्लभानुद्दिश्य । अभिसारिकाणाम् 'अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं

दूतीनां द्व्यर्थाः सप्रपञ्चा विकारभङ्गुराः संवादा बभूवुः । तथाहि—अवस्त्रीकृतमात्मानं नाकलयसि तत्त्वतः कान्त ।

---

वाभिसरत्येषा धीरैरुक्ताभिसारिका ।' इत्युक्तलक्षणानां नायिकाविशेषाणां सार्थेन समूहेन प्रेषितानां प्रहितानाम् । दूतीनां नायिकानायकघटनकुशलानाम् । द्व्यर्थाः प्रशंसानिन्दाभ्यां अर्थद्वयविशिष्टाः । सप्रपञ्चाः सविस्तराः । विकारेण मन्मथविकारनिवेदनेन भङ्गुराः रमणीयाः मृदवो वा । संवादाः परस्परसंभाषणानि । 'अवस्त्रीकृतमिति प्रथमवाक्ये परं प्रशंसानिन्दाभ्यामर्थद्वयम् । प्रस्तर इति द्वितीये वाक्ये निन्दैव । धर्मार्थेत्यारभ्य अर्थद्वयमात्रम् । निन्दाविभागस्तु आद्ये वाक्यद्वय एव । राजसेनेत्यारभ्य सप्रपञ्चाः संवादाः । शठधियामित्यारभ्य विकारभङ्गुराः । किंचिद्विशेषेणैव विशेषोन्नयनं विकारभङ्गुरत्वं नाम ।' इति कश्चित् । 'सप्रपञ्चाः सविस्तराः सहेतुहेतुमद्भावा इत्यर्थः । विकारभङ्गुराः, विषयालाभदुःखित्वं चेतसो विकृतिः स्मृता । इति हरिः । भङ्गुरो हृदयार्तिकृत् । इति भागुरिः । अभिमतविषयालाभदुःखकथनेन श्रोतॄणां हृदयार्तिकारिण इत्यर्थः । संवादाः आलापाः ।' इति सांप्रदायिकाः । शिवरामस्तु 'अत्रान्तरे मानिनीमानपाटनपटुकुमुदिनीकान्तोदयावसरे । अभिसारिकासार्थप्रहितानां ज्योत्स्नाभिसारिकासमूहप्रेषितानां दूतीनां अन्योन्यसंघटनविरहनिवेदनादिकर्मकुशलानाम् । प्रियतमान्प्रति वल्लभान्प्रति । द्व्यर्थाः उपालम्भावर्जनरूपार्थद्वयोपेताः । सेर्ष्याः, उपालम्भे । विकारैः मदनविकारजन्यचित्तवृत्तिविशेषैः भङ्गुराः मानावस्थायामिव न केवलं परुषा एव, अपि तु किंचित्स्वापराधव्यञ्जया (ञ्जका) इत्यर्थः । आवर्जने इदम् । सप्रपञ्चाः वक्रोक्त्यादिसहिताः । प्रवादाः प्रकृष्टा वैदग्ध्यविशिष्टा वादा बभूवुः ।' इति व्याचष्टे । **अवेति** । प्रशंसापक्षे, हे कान्त कमनीय । स्त्रीकृतं स्त्रीरूपेण कृतम् । आत्मानं

स्वं त्वामित्यर्थः। अव रक्ष आलिङ्ग वा। तत्त्वतः परमार्थतः, स्त्रीवेषान्तरितोऽहमेवेयमित्येवं याथार्थ्येनेत्यर्थः। न आकलयसि न जानासि। सा हि त्वदेकायत्तजीविता स्वात्मवदत्यन्तानुकूला च त्वयैवैवं यथार्थं ज्ञात्वा परिपालनीया। भवांस्तु तत्त्वमिदं न वेद। अत एवैवमुपेक्षसे तामिति भावः। नाकलयसीत्यत्र काकुर्वा। त्वमपीदं जानासीति भावः। यद्वा स्त्रियं कृणोति हिनस्तीति तं स्त्रीकृतं स्त्रीहिंसकमित्यर्थः। आत्मानं स्त्रीहिंसकं अव अवगच्छ। तत्त्वतो नाकलयसि तस्या यथार्थस्वभावं न जानासि। त्वदेकात्मा सा खलु त्वदुपेक्षणेन नियतं प्राणांस्त्यक्ष्यति। ततश्च स्त्रीवधकृतं पापमेव तव शिष्टं भविष्यतीति, मैवमुपेक्षिष्ठा इति भावः। निन्दापक्षे, हे कान्त कस्य सुखस्य अन्तो यस्य तस्य संबुद्धिः। हे सुखनाशक, सर्वथानुरक्तामुपेक्ष्यान्यत्र प्रसजतः कुतस्ते सुखमिति भावः। आत्मानम्, स्त्रीकृतं स्त्रीत्वेन परिणतं स्त्रीभूतमित्यर्थः पौरुषहीनमिति यावत्। अव अवगच्छ। इदं तत्त्वतो नाकलयसि। अन्यासक्तस्य दुर्जनसंसर्गेण सर्वथा व्यवहरतस्ते पौरुषमेव गतम्। अत एव त्वमपुमानिव स्त्रीव च भूत्वा निन्दितमेवमाचरणमाश्रितोऽसि। नापि जानासि स्वकीयं यथार्थस्वरूपमिति भावः। यद्वा अवस्त्रीकृतं वस्त्रशून्यीकृतम्। आत्मानं अव अवगच्छ। एवमपि तत्त्वतो नाकलयसि। काममञ्जर्या वसुपालित इव कुलटागणिकादिभिः कौपीनमात्रावशेषः कृतोऽसि; एवमप्यात्मास्थितिं न याथार्थ्येन जानासीत्यहो ते मतिवैपरीत्यमिति भावः। यद्वा अवस्त्रीकृतं वसनरहितीकृतमिति लोकोक्तिमनुसृत्य मानरहित उच्यते। तथा च मानहीनत्वादेवमाचरसि, को हि मानी स्त्रीषु एवमाचरेत्। आत्मयाथार्थ्यं तु न जानासीति भावः। यद्वा अवस्त्रीकृत मा, आत्मानमिति पदच्छेदः। अवस्त्रीकृत अवलक्षणस्त्रिया एवंकृत कुत्सितस्त्रीसक्त्या विगतलज्जामानादिकेत्यर्थः। अत एव कान्त सुखनाशक।

प्रस्तर इव क्रूरोऽसि; न चाकर्षकचुम्बकद्रावकेष्वेकोऽसि;

---

आत्मानं तत्त्वतो मा न कलयसि परं तु जानास्येवेत्यर्थः, अचिरात्ते स्वावस्था स्फुटीभविष्यतीति भावः। वर्तमानसामीप्ये भविष्यति लट्। 'सुखशीर्षजलेषु कम्' इति मेदिनी। 'अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ। प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे। स्वाम्यर्थेऽवगमे कामे धृतौ' इति बोपालितः। 'हे कान्त कमनीय। स्त्रीकृतं मरणशरणीकृतम्, (?) अथवा स्त्रीभिः कृतं वल्लिकाभिः छिन्नम् (?) आत्मानम्। अव रक्ष। तत्त्वतो नाकलयसि परमार्थतो न जानासि। यस्मात्त्वमेव तस्या वल्लभः। अतो मरणशरणीकृतमात्मानं रक्षेति। अयमभिप्रायः। भवानेव तस्या वल्लभः। सा च कामिनी त्वदर्थे मरणावस्थां गता। तस्मान्मरणशरणीकृतमात्मानं शरीरं नित्यमेव रक्षेति प्रशंसावादः। निन्दा तु, अवस्त्रीकृतं नग्नीकृतम्, अथवा कुत्सितस्त्रीसमर्पितम्। आत्मानं नाकलयासि। तत्त्वतः परमार्थतो न जानासि। अयमभिप्रायः। भवानेव तस्याः पतित्वे योग्यः। सा च विचक्षणा। तथापि त्वया चात्मा एवंभूतः कृत इति।' इति कश्चित्। शिवरामस्तु 'प्रत्यक्षरश्लेषमयेत्यादिस्वगुणं प्रकटयन्नाह' इत्यवतार्य 'अः विष्णुः। वः वक्षः। तत्र स्थिता स्त्री लक्ष्मीः' इत्येवमक्षरतो विभज्य व्याख्याय सुबहून्प्रकारभेदान्प्रदर्शयन्व्याचष्टे। तत्र केचिद्विकल्पा अस्वरसाः, केचन क्लिष्टाः, केचन समानाभिप्रायका इत्यतो विस्तरभीरुभिर्नास्माभिरत्र प्रपञ्च्यते। तत्रैव ते द्रष्टव्याः। **प्रस्तर इवेति**। इदमेकस्या दूत्या वचनम्। हे कितव धूर्त, प्रस्तरः उपल इव। क्रूरः कठिनः निर्दय इत्यर्थः। असि। आकर्षकचुम्बकद्रावकेषु उपलभेदेषु नायकभेदेषु च, एकः अन्यतमः। नासि। परं किंतु। भ्रामकः तत्संज्ञकः शिलाविशेषः, नायकविशेषश्च। असि। अत्र आकर्षकादयः शिलाविशे-

षाः । अयस्कान्तभेदा इति केचित् । केचित्तु पूर्ववाक्यस्थं कान्तेत्येतदत्र योजयित्वा कान्तप्रस्तरः कान्तोपल इति व्याचक्षते । 'अत्र निन्दैव । निष्करुणत्वं नायकलक्षणाभावं च वदति—प्रस्तर इत्यादि इत्यवतार्य, आकर्षकादयोऽयस्कान्तादिशिलाविशेषाः । आकर्षकस्त्वयस्कान्तो विशेषाश्चुम्बकादय इति कोशः । ...आकर्षकादयः पुरुषविशेषाः। दूरादाकर्षणे शक्तो यः स आकर्षकः स्मृतः । सर्वेषां स्पर्शलोलत्वं कुरुते यः स चुम्बकः । कृतार्थयति यो दृष्ट्या स द्रावक इति स्मृतः । भ्रामको मधुराभासः (षः) संस्तवद्वेषभाजनम् । (सत्स्वपि द्वेषहेतुषु) इति भोजः ।' इति सांप्रदायिकाः । 'आकर्षकः यत्संबन्धात्प्रत्युप्तमपि लोहं निःसरति, अयस्कान्तमणिः । चुम्बकः यत्संबन्धाल्लोहमुपगच्छति ; सूर्यकान्तो वा सूर्यकराभिमृष्टयच्छायासंबन्धादिन्धनादावग्निरुत्पद्यते । द्रावकः यत्संबन्धाल्लोहं द्रवति ; चन्द्रकरस्पर्शात्स्वयं द्रवति स चन्द्रकान्तो वा । भ्रामकः यत्संबन्धाल्लोहं भ्रमति, स गुरिया इति ख्यातः । चुम्बको द्रावकश्चैवाकर्षको भ्रामकस्तथा। एकद्वित्रिचतुष्पञ्चषण्मुखाः संभवन्ति ते ॥ इति लोहशास्त्रे । कामकलाकौशलेन यो नारीमाकर्षति स आकर्षकः । रतिकौशलेन यश्चुम्बति स चुम्बकः । ओषधिविशेषयोगेन कुचमर्दनेन वा यः कठिनकामिनीं द्रावयति स द्रावकः । एतेषु नैकोऽसि । परं केवलं भ्रामकोऽसि अन्यासक्तो योऽन्यनारीं भ्रामयति प्रतारयति स भ्रामकः ।' इति शिवरामः । अयं भावः, त्वं हि केवलं शिलावत्कठिनः । न तु तदवान्तरभेदवत् आकर्षकश्चुम्बको द्रावको वासि, परंतु तत्र कश्चनोपल इव भ्रामकः परमसीति । प्रशंसावादे तु, नञः पूर्ववाक्येऽन्वयः। यथाश्रुते पूर्वोत्तरवाक्ययोः काकुर्वा। प्रस्तर इव न क्रूरोऽसि। असीति यथाश्रुते काक्वा नासीत्यर्थो वा च किं च। आकर्षकचुम्बकद्रावकेषु पूर्वोक्तनायकभेदेषु उपलभेदेषु च। एकः मुख्यः। असि। नवासीत्यत्र काक्वा अस्येवेत्यर्थो वा। परं अत्यन्तम्। भ्रामकः

भ्रामकोऽसि परं कितव । धर्मार्थान्यप्रयुक्तः क्षेपणिक इव

---

मनोमोहकः, शिलाविशेषश्च । असि । आकर्षकादिषु शिलाविशेषेषु अन्यतमस्यापि न खलु ते तेषामिव काठिन्यमिति भावः । त्वं हि सरलहृदयः, आकर्षकः, चुम्बकः, द्रावकः, भ्रामकश्च भवसीति परमार्थः । शिवरामस्तु 'कस्य शत्रुशिरसः अन्तो यस्मात्कान्तः । आकर्षकः धनुराकर्षकः । चुम्बकः सैन्यप्रवेशज्ञः । द्रावकः परसैन्यविद्रावणः । तेषु एकः श्रेष्ठोऽसि । भ्रामकः अश्वादीनाम् । असिभ्रामकः असेः खड्गस्य भ्रामको वा । कान्त मनोहर, न प्रस्तर इव क्रूरोऽसि ; प्रार्थितः सन्नपराधान्क्षमते । आकर्षकचुम्बकद्रावकाः इषवो बाणा यस्य स कामस्तद्वदेकोऽद्वितीयोऽसि । भ्रामको नारीचेतसाम् । एकोऽद्वितीये श्रेष्ठे च, क्रूरौ कठिननिर्दयौ इत्युभयत्र विश्वः ।' इति व्याचष्टे । **धर्मेति** । इयमन्यस्या उक्तिः । त्वम् । क्षेपणिकः नाविक इव । धर्मार्थे अन्यस्मिन् विषये अन्यदीयकार्यविषये इत्यर्थः प्रयुक्तः प्रकर्षेण संयुक्तः । मुधा व्यर्थं यथा तथा । वाहितः धृतः तरवारिः खड्गः येन तादृशः । असि । वाहितेत्यत्र स्वार्थे णिच् । यद्वा आवाहितेति च्छेदः । आवाहितः आवाहनां लम्भितः । देवताभिप्रायेणेदम् । यद्वा मुधा वा मुधैव । आहितः धृतः तरवारिः येनेति व्याख्येयम् । त्वं खलु धर्ममभिसंधाय परकीयकार्येषु सज्जमानो महाशूरोऽपि दयालुतया न हि खड्गं व्यापारयसीति भावः । तथा चैवं दयालोस्तव न युज्यते त्वदेकजीवितायां तस्यामेवं निस्त्रिंशाचरणमिति दूत्याकूतम् । यद्वा अर्थात् निवृत्तेः अन्यत् प्रवृत्तिः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।' इत्यमरः । धर्मे धर्मविषये अर्थान्येन प्रवृत्त्या प्रयुक्तः प्रेरितः, धर्मैकपरायण इत्यर्थः । मुधावाहिततरवारिरित्येकं पदम् । अवनं आवः मुधा आवः रक्षणं येषां ते मुधावाः भवता व्यर्थीकृतरक्षणाभिमाना इत्यर्थः । ताद-

शेषु अहितेषु शत्रुषु उपयुज्यमानः तरवारिः खड्गो यस्येति तादृशः। केवलं धर्मरक्षणाय गर्विष्ठान्स्वात्मसंभावितानशरणागतानरीनुच्छिन्दतो न खलु युज्यते तवास्यां सर्वथा त्वामाश्रितायामेवं शौर्यप्रकटनमिति भावः। यद्वा मुधावाहिनः युद्धान्निष्फलतया प्रतिनिवृत्ताः ततरवाः विस्तृताक्रन्दशब्दाः अरयः शत्रवः यस्य तादृशः । भावः पूर्ववत् । क्षेपणिकपक्षे, धर्मार्थे अन्येन राजादिना प्रभुणा प्रयुक्तः सर्वानपि विनैव वेतनमुत्तारयेत्येवमाज्ञाप्य नाविककर्मणि प्रेरितः । अत एव, मुधा व्यर्थम्, वेतनं विनेति भावः। वाहिततरं सम्यगुत्तारितं वारि जलं येन तादृशः। उत्तीर्णपुरुषधर्मस्य वाहितत्वस्य जले उपचारः। यद्वा वाहिततरं नौक्षेपणेन पुरतः पुञ्जीभूय प्रवाहितं वारि येन। क्षेपणिकपक्षे 'धर्मार्थान्येन दण्डेन (दक्षिणेन) प्रयुक्तः। मुधावाहिततरवारिः निरर्थकमुत्तारितनौजलः' इति क्वचन पुस्तके टिप्पणं दृश्यते। निन्दापक्षे, हे धर्मार्थ धर्मः अर्थः फलं यस्य तादृश धर्मासक्तेत्यर्थः। इदं च विपरीतलक्षणया अधर्मशीलेत्यर्थकम् । अन्यया अन्यस्त्रिया प्रयुक्तः प्रेरितः तदधीनः सन्नित्यर्थः। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावेन अन्यप्रयुक्तेति रूपम् । यद्वा धर्मार्थात् धर्मरूपप्रयोजनात् अन्यः अधर्मः तेन प्रयुक्तः पापपरवश इत्यर्थः। अथवा धर्मश्च अर्थश्च ताभ्यां अन्यः त्रिवर्गे संनिहितत्वात्कामः तेन प्रयुक्तः काममोहित इत्यर्थः। त्वम्। मुधावाहिततरा व्यर्थं यथा तथा गमिता निष्फलतां नीतेत्यर्थः तादृशी वारिः अनुरागदशायामुक्ता प्रणयवाक् येन तादृशः। यद्वा मुधावाहिनी वृथा गच्छन्ती ततरा बहुष्वेका सा त्वदनुभववेद्येत्यर्थः तादृशी वारिः वाक् प्रतिज्ञेति यावत् येन तथोक्तः। केवलं काममोहितः पराङ्गनापराधीनः सर्वमपि पूर्ववृत्तं प्रणयप्रतिज्ञादिवचनं विस्मृतवानसीति भावः। ततरेति तच्छब्दाड्डतरचि निष्पद्यते। 'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति वार्तिकव्याख्यानपराकरप्रामाण्येन डतमज्विषयेऽपि डत-

मुधा वाहिततरवारिस्त्वमसि । सखेदमिव तां मनसा चिन्त-

---

रच् । 'नाविकः स्यात्क्षेपणिकः' इति वैजयन्ती । 'वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि वालुके ।' इति मेदिनी । 'तरवारिर्मतः खड्गः' इति धरणिः । 'मुधा व्यर्थमेव वाहिततरवारिः धृतखड्गोऽसीत्यर्थः । एतेनैवमाह दूती—यो हि तीक्ष्णखड्गधारी भवति, स किं पराङ्गनाभिसारे बिभेति; भवानपि खड्गधारीति भावः ।' इति कश्चित् । **सखेदमिति** । इदमपरस्या वचनम् । दुर्लभां रूपगुणशीलादिना निःसमानामत एव लब्धुमशक्याम् । तां त्वया अनुभूतपूर्वां तव सहधर्मिणीम् । सखेदं महता श्रमेण । मनसा चिन्तयासि बुद्धिविषयीकरोषि । इवः किंचिदिवेत्यादाविव वाक्यालंकारे । अयं भावः । तव पत्नी सा हि लोकोत्तरगुणोत्तरा ; तां च भवानन्यासक्त्या विस्मृत्य मया प्रतिबोधितः सन्कथंचिदद्य स्मरति । एवं स्मरणविषयीकृतां तां नेतः परं त्यक्तुमर्हतीति सान्त्वनोक्तिः । यद्वा सखेदं सविषादम् । अन्यासक्तोऽपि भवान्मया प्रतिबोधितः सांप्रतं महान्तं विषादमनुभवसीत्यहो ते तस्यां निर्भरः प्रणय इति प्रशंसावादः । निन्दापक्षे तु, सखे हे मित्र । इयं च परिहासोक्तिः । दुर्लभां तां परस्त्रियम् । दं निजकलत्रमिव । मनसा चिन्तयसि सुलभामवेषि । दुर्लभामपि परकीयां स्वपत्नीमिव स्वाधीनां कलयसीत्यद्भुतस्ते व्यामोह इति भावः । 'दं कलत्रे समाख्यातं दो दानच्छेददातृषु ।' इति एकाक्षरकोशः । 'दमिव निजभार्यामिव सुलभां तां नायिकां मनसा दुर्लभां चिन्तयसि । मैवं जानीथाः । सा भार्येव तव सुलभैवेति । पक्षे सखेदमिव तां मनसापि दुर्लभां जानासि । मैवं मंस्थाः । सुलभैव अहं तुभ्यं दापयामीति । अयमभिप्रायः—यदि कामुकान्तरात्त्वं भयमकार्षीः, अहं तत्र विघ्ननिवारणार्थं भवामीति ।' इति कश्चित् ।

यसि दुर्लभाम् । सत्त्वसारचित्तो यो रिपुमण्डलाग्रतो निर्वृ-

---

सत्त्वेति । इदं कस्याश्चिद्वचनम् । निन्दापक्षे, सः, तु, असारचित्त इति, प्रशंसायाम्, सत्त्वसारचित्त इति च पदच्छेदः । संयोगे तकारस्य तकारद्वयस्य वा श्रवणे विशेषानुपलम्भान्नानुपपत्तिः । तथा चासिद्धवत्सूत्रे भाष्यम् 'न व्यञ्जनपरस्यैकस्यानेकस्य वा यकारस्य श्रवणं प्रति विशेषोऽस्ति' इति । यद्वा 'तु' इति पदच्छेदपक्षेऽपि तकारस्य 'अनचि च' इति द्वित्वान्न काप्यनुपपत्तिः । यः पुरुषः । रिपुमण्डलाग्रतः शत्रुसमूहस्य पुरतः शत्रुषु पश्यत्स्विति यावत् । अनिर्वृतिं अन्यासक्त्या तत्र तत्र परिभ्रमणेन खेदम् । उपेत्य प्राप्य । तिष्ठति । स तु स किल । असारं बलरहितं चञ्चलमिति यावत् तादृशं चित्तं यस्य तादृशः, मनोदौर्बल्ययुक्तस्तरलहृदय इत्यर्थः । अत एवंकरणेन शत्रुपरिहासास्पदं त्वमसि तरलमना इति भावः । प्रशंसापक्षे, यः रिपोः शत्रोः मण्डलाग्रतः खड्गात् । निर्वृतिं संतोषम् । उपेत्य । तिष्ठति, शत्रुखड्गः पततु नाम । महावीरस्य हि शत्रुखड्गक्षतं भूषणमेव; न तु दूषणमिति मन्यमानः शत्रुखड्गाद्भीतिं विमुच्य प्रत्युत तोषमेव भजत इत्यर्थः । यद्वा रिपुमण्डलाग्रत इति ल्यब्लोपे पञ्चमी । रिपुमण्डलाग्रमनादृत्येत्यर्थः । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ।' इत्यमरः । सः । सत्त्वेन अवष्टम्भेन सत्त्वगुणेन वा सारं श्रेष्ठं सधैर्यमित्यर्थः तादृशं चित्तं यस्य स तथोक्तः, अतिधीरमनाः पुरुष इत्यर्थः । तथा चातिधीरस्य ते न खल्विदमुचितम्; यन्मत्सख्यभिसरणे प्रतिपक्षाद्भयम्, तरलहृदयता वा तवेति भावः । अत्र विशेषे प्रस्तुते सामान्यस्य कथनादप्रस्तुतप्रशंसाभेदः । 'अप्रस्तुतप्रशंसा सा या सैव प्रस्तुताश्रया । कार्ये निमित्ते सामान्यविशेषे प्रस्तुते सति । तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ।' इति काव्यप्रकाशः । शिवरामस्तु 'स तु असारचरितः तुच्छव्यवहारः । या अगन्ति

तिमुपेत्य तिष्ठति । स खलु वीरः प्रतिपक्षस्य यः संप्रहारतः

---

ता अगः । मण्डलस्य अगः मण्डलागः कुलटाः । रिपुभूताः मण्डलागः । तासु रतः । अक अग कुटिलायां गतौ । निर्वृतिं सुखम् । यद्वा निर्गता वृतिः आवरणं यस्यास्तां निरावरणां वेश्याम् ।' इति व्याचष्टे । व्याख्यानान्तरादिकं तु तत्रैव द्रष्टव्यम्; विस्तरभयान्नेह लिख्यते। 'सत्त्वं माहात्म्यं सारः सामर्थ्यम्, ताभ्यां गृहीतहृदयः सत्त्वसारचित्तः । यः पुरुषः । रिपुमण्डलाग्रतः शत्रुसमूहाग्रतः । निर्वृतिं परमसौख्यम् । उपेत्य प्राप्य । तिष्ठति । स एव पुरुष इति । पक्षे, स तु असारचित्तः असामर्थ्यगृहीतहृदयः पुरुषः । रिपुमण्डलाग्रतः शत्रुखङ्गात् । अनिर्वृतिमुपेत्य असुखं दुःखं प्राप्य तिष्ठति । एतेनेदमाह दूती—यदि कामुकान्तरभयेन तां नायिकां नाभिगच्छसि, तदा त्वं पुरुष एव न भवसि । कार्यारम्भस्तावत्पुरुषेण कर्तव्यः । तदा कार्यसिद्धिर्भवतु वा मावेति ।' इति कश्चित् । **स इति** । यः । प्रतिपक्षस्य शत्रोः शत्रूभविष्यतः अन्यस्येति यावत् । कुं कलत्रम् । संप्रहारतः सुरताभिघातात् । जरां वार्द्धकं दौर्बल्यमिति यावत् । नयति प्रापयति । सः खलु तादृशः परदाराभिमर्शी तु । वीरः विशेषेण इरा मद्यं यस्य तादृशः मद्यपायीत्यर्थः । परदाराभिमर्शनं मद्यपानवत्प्रत्यवायकरमिति को हि नाम मद्यपव्यतिरिक्तः परदारानभिमृक्ष्यतीति भावः। प्रशंसापक्षे, यः । संप्रहारतः युद्धे । सार्वविभक्तिकस्तसिः । प्रतिपक्षस्य शत्रोः कुञ्जरान् गजान् । नयति आत्माधीनान् करोति । स खलु वीरः । 'यः । कुञ्जरान् स्वस्त्रीकेशपाशान् । संप्रहारतः समीचीनान्प्रकृष्टान् हारान् । द्वितीयार्थे तसिः । नयति । स खलु । विशेषेण ई लक्ष्मीं राति ददातीति तादृशः' इति केचित् । 'संप्रहारो रते युद्धे' 'पापकुत्सेषदर्थेषु कन्व्ययं स्त्री धरास्त्रियोः।' इति वैजयन्ती। 'यः प्रतिपक्ष-

कुञ्जरान्नयति । धृतोरुकरवालसंचयोऽपि परमकाण्ड एव

---

स्य कुं कलत्रं संप्रहारतः जरां नयति । स खलु वीरः रतिपण्डितः । वीरः शूरे रतिप्रिये इति कोशः । एतेनेदमाह दूती—सा प्रबलतरकामा । त्वमपि सुरतकुशलः । प्रचण्डसुरताभिघातेन यदि तामभिसारयसि, तदा सा त्वदायत्ता भवति । सा तव सुरताभिलाषिणीति ।' इति काश्चित् । **धृतेति** । धृतः उरूणां महतां करवालानां खड्गानां संचयः समूहः येन तादृशः सन्नपि । अकाण्डे अनवसर एव युद्धोपकरणसज्जीभावात्पूर्वमेवेत्यर्थः । परं शत्रुम् । संपतन् अभिगच्छन् पुरुषः । विग्रहेण युद्धेन युद्धे इति यावत् । महापदं महतीं आपदं विपत्तिम् । लभते । अथवा परमकाण्डे शत्रोः उत्कृष्टे बाणे । संपतन् तदभिमुखं गच्छन्नित्यर्थः । महापदं लभते । बाणपतनस्य खड्गभ्रमणेन निवारयितुमशक्यत्वात्तदा अभ्यमित्रीणता महते अनर्थायेति भावः । यद्वा परमकाण्डे स्वकीये उत्कृष्टे अश्वे । संपतन् पतितः । एतेन सत्यप्युपकरणे कालप्रतीक्षणमावश्यकमिति कामुकं प्रति दूतीसूचनमिति बोध्यम् । यद्वा धृताः ऊरू सक्थिनी करौ हस्तौ वालसञ्चयः केशपाशश्च येन तादृशः । ऊर्वादिकं सर्वावयवानामुपलक्षणम् । अतिसुन्दरोऽपीत्यर्थः । अकाण्डे अनवसरे भर्तुर्गेहस्थितिकाल इत्यर्थः । संपतन् आगच्छन् कामी । विग्रहेण तत्पतिना सह कलहेन । महापदं अधिकां विपदम् । परं अत्यर्थम् । लभते । तथा च सांप्रतमिह पतिसंनिधौ कथमागतोऽसि । अहो ते कामोन्माद इति निन्दागर्भं वचनम् । प्रशंसापक्षे, धृताः ऊरू करौ वालसंचयश्च नायिकायाः येन तादृशः बाह्योपचारकुशलोऽपीत्यर्थः । रतिबन्धकाले तेषां धारणमित्यभिप्रायेण 'अपिः चार्थः' इत्येके । परमकाण्डे परमे उत्कृष्टे उचिते काण्डे समये बाह्योपचारेण नायिकाया आर्द्रीभावकाल इत्यर्थः । विग्रहेण शरीरेण ।

**संपतन्महापदं विग्रहेण लभते । राजसेन राजसे नरहितो**

---

संपतन् नायिकां संगच्छन् । महापदं महत् स्थानं महाभाग्यपदवीमिति यावत् । लभते । विग्रहेण महापदं लभत इति वा । एवं चैतादृशसुरत-कर्मकौशलाभिज्ञे त्वयि नियतं सा रज्यतीति प्रशंसावादः । पूर्वोक्तरीत्या-त्रापि अप्रस्तुतप्रशंसाभेदः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवाजिषु ।' इत्यमरः । 'विग्रहो युधि विस्तारे प्रविभागशरीरयोः ।' इति हैमः । कश्चित्तु एवं पदार्थमुक्त्वा 'एतेनेदमाह दूती— यद्यपि त्वं वीरः । सा कान्ता-न्तरेण तिष्ठति । तेन सह विमर्दः स्यात् । तेन लोके न ख्यातिः स्यात् । तस्मादवसरं दृष्ट्वा यास्यसीति ।' इति विवृणोति । **राजस इति** । इदमपरस्या वाक्यम् । राजसेन रजोगुणेन । स्वार्थेऽण्प्रत्ययः । रहितः शून्यः, शुद्ध-सत्त्वमय इत्यर्थः । यद्वा राजसेन रजोगुणसंबन्धिना तत्कार्येण क्रोधेनेत्यर्थः । 'काम एष क्रोध एष रजोगुणसमुद्भवः ।' इति भगवद्गीता । अत एव, नरहितः मनुष्याणामनुकूलः, सर्वभूतहितकारीत्यर्थः । त्वम् । राजसे शो-भसे । ध्रुवं तदेतन्निश्चितमित्यर्थः । ध्रुवमिति क्रियाविशेषणं वा । तथा च रजःकोपाद्यभाव एव तव शोभाहेतुरिति सर्वजनानुकूलस्त्वं विसृज्य कोपं त्वत्प्रेयसीं मत्सखीं यथापुरं भजस्वेति भावः । निन्दापक्षे, रहितः, अरहित इति पदच्छेदः । त्वं, राजसेन अरहितः अशून्यः । अत एव, रहितः त्यक्तः, जनैरिति शेषः । न राजसे न शोभसे । रजोगुणवर्धनेन त्वं खल्वन्यथा-भूतो जनैश्च परित्यक्तो यतस्तत एव तामेवमुपेक्षसे । तदिदं युज्यत एवा-भिवृद्धरजोगुणस्य तवेति भावः । यद्वा राजसे, न, राजसे, अनरहितः, अर-हित इति च्छेदः । राजसे रजोगुणे तत्संबन्धिनि तत्कार्ये वा विषये । अर-हितः अशून्यः राजसयुक्त इत्यर्थः । अत एव, अनरहितः मनुष्याणामननु-कूलः, यद्वा अनः प्राणः जीविका वा तेन रहितः, निष्प्राण इव निर्जीविक इव

रहितो ध्रुवम् । विशारदा शारदाभ्रविशदा विशदात्मनीनम-

---

वा लक्ष्यमाण इत्यर्थः । त्वम् । न राजसे । एवं भूतस्य तव किमुपालम्भेनेति भावः । 'लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ।' इति भगवता गीतम् । 'राजस रजोगुणप्रधान, इनरहितोऽप्रभुस्त्वं न राजसे यतो रहितः प्रभुणा परित्यक्तः' इत्यपि शिवरामः । **विशारदेति** । इदमेकस्या वचनम् । हे क्षमातिलक भूमिभूषण । यद्वा क्षमा क्षान्तिः तिलकं तिलकस्थानीया अलंकार इति यावत् यस्य तस्य संबुद्धिः, हे क्षान्तिभूषण । विशारदा प्रगल्भा । शारदं शरत्कालभवं अभ्रं मेघः आकाशं वा तद्वत् विशदा निर्मला । विशदः स्पष्टः स्वच्छो वा आत्मनीनः आत्मने हितः, मह्याः मानमिव मानं प्रमाणं यस्य सः महिमानः अतिविपुलः अत्यधिक इति यावत् । तादृशश्च यः महिमा माहात्म्यं तस्य अनरक्षणं आवश्यकपालनं तत्र क्षमा शक्ता तादृशं महिमानमभिरक्षन्तीत्यर्थः । अनरक्षणमित्यत्र, न रक्षणं अरक्षणं न अरक्षणं अनरक्षणमिति विग्रहो बोध्यः । यद्वा तादृशस्य महिम्नः अनः प्राणः जीवितमिति यावत् तस्य रक्षणे क्षमा। तादृशेन महिम्ना अनन्ति जीवन्तीति महिमानाः यशोधनाः तेषां रक्षणे क्षमेति वा । यद्वा विशदः आत्मनीनश्च यः महिमा तेन अनन्ति जीवन्तीति विशदात्मनीनमहिमानाः; अनन्तीत्यनाः प्राणिनः, विशदः आत्मनीनश्च महिमा येषां ते तादृशाश्च ते अनाश्च विशदात्मनीनमहिमानाः; तेषां महिम्नः अनरक्षणं तत्र क्षमा। अथ वा, विशदात्मनीनमहिमानानां मह्याः भूमेः मानस्य परिमाणस्य महिमानयोः भूमिगौरवयोर्वा रक्षणे क्षमा । यद्वा विशदात्मनीनमहिमेति पृथक्पदम् । इदं च धीरताया विशेषणम् । विशदः आत्मनीनश्च महिमा यस्याः सा तथोक्ता । विशन् प्रविशन् आत्मनीनः महिमा यां सा तथोक्ता वा । अन-

महिमानरक्षणक्षमेत्यन्यत्पदम् । अनाः प्राणिनः तेषां महिम्नः अनस्य रक्षणं महिम्नः अनरक्षणं आवश्यकपालनं वा तत्र क्षमा । विशदा स्पष्टेति भिन्नं पदं धीरताया विशेषणं वा । यद्वा विशदात्मनीनमहिमानमहिमा, नरक्षणक्षमेति पदच्छेदः । विशदः आत्मनीनः महिमानः भूप्रमाणकश्च महिमा महत्त्वं यस्याः सा तथोक्ता । नराणां मनुष्याणां क्षणे उत्सवे क्षमा शक्ता सकलजनसंतोषकारिणीत्यर्थः । धीरता बुद्धिसक्ता बुद्धियुक्तेत्यर्थः । मनसि चित्ते । धीरता धैर्यम् । वचसि वाचि । भूतता सत्यता च, औचित्यं वा । भूतता भुवि भूमौ तता विस्तृता सर्वत्र प्रख्यातेत्यर्थः । '...विशदाविशदात्मनीन...' इत्यत्र आविशदिति पदं विभज्य, धीरता मनसि भूतता च वचसि आविशत् आविष्टेत्येवमपि व्याख्यातुं शक्यम् । तदा कर्मणोऽधिकरणत्वविवक्षया सप्तमीति बोध्यम् । एवं च स्वच्छहृदयस्य महामहिम्नः परगौरवरक्षकस्य सकलजनानन्दिनो महाधीरस्य क्षान्त्येकभूषणस्य भुवनालङ्कारस्य सत्यसङ्गरस्य तव नैवं तदुपेक्षणमुचितमिति भावः । निन्दापक्षे, हे विशारद हे बुद्धिमन्निति परिहासोक्तिः, तथा च विपरीतलक्षणया बुद्धिशून्येत्यर्थः । यद्वा विगता विरुद्धा विविधा वा शारदा वाक् यस्य तस्य संबोधनमिदम्, वक्तुमनभिज्ञ विरुद्धभाषिन् असत्यभाषिन्निति वा तदानीमर्थः । शारदः अप्रतिभः विशेषेण शारदः विशारदः तस्य संबोधनमिति वा । अशारदाभ्रविशदेत्यादिकमपि संबोधनम् । शारदाभ्रविशदः शरन्मेघवन्निर्मलः स्वच्छान्तःकरण इत्यर्थः निष्कपटहृदय इति यावत्, तद्भिन्न हे अशारदाभ्रविशद कापटिकेत्यर्थः । हे अविशद अव्यक्त अप्रसिद्धेत्यर्थः । हे आत्मनीन आत्मने हित, स्वार्थैकप्रवणो न तु परहितकारीति भावः । महिमान महः उत्सवः अस्यास्तीति मही मही इति मानः अभिमानः यस्य तस्य संबोधनं महिमानेति, सर्वदाहमुत्सववानिति दुरभिमानविशिष्टेति तदर्थः । महिमान-

हिमानमहिमानरक्षणक्षमा क्षमातिलक धीरता धीरता मनसि

---

रक्षण मह्याः भूमेः मा संपत् तस्याः नरक्षणं नाशः येन तथोक्त भूसंपन्नाशकेत्यर्थः। विरोधपरेण नशब्देन रक्षणपदस्य समासः। यद्वा रक्षतीति रक्षणः बाहुलकात्कर्तरि ल्युट्। न रक्षणः नरक्षणः महिमाया नरक्षण इति विग्रहो बोध्यः। क्षमातिलकधीरत क्षमातिलकधियां अहं भूमेर्भूषणमित्येवं बुद्धौ रत आसक्त तादृशदुरभिमानविशिष्टेत्यर्थः। (तव) मनसि। धीरः पण्डितः अधीरः मूर्खः अधीरता मौर्ख्यम्। क्षमा युक्ता। एतादृशविशेषणविशिष्टस्य तव कुतस्तावदमूर्खता संभविष्यतीति भावः। वचसि। अभूतता असत्यता। भूतता पृथिव्यां ख्याता, सर्वैरपि विदितमेव तव मृषाभाषित्वमित्यर्थः। यद्वा विशदात्मनि, इनमहिमान, इति पदच्छेदः। विशदात्मनि निर्मलान्तःकरणेषु महात्मसु विषये। इनः अहं प्रभुः, मही उत्सवानिति मानो यस्येति तदानीमर्थः। यद्वा विशारदा, शारदाभ्रविशदा, विशदा, आत्मनीनमहिमा, न, महिमानरक्षणक्षमा, अक्षमातिलक, धीरता, धीरता, इत्येवं पदच्छेदः। सर्वमपि प्रथमान्तं धीरताया विशेषणम्। प्रायेण पूर्वोक्त एवार्थः। आत्मनीनः आत्महितः महिमा महत्त्वं यस्याः सा तथोक्ता। महेः भूमेः मानस्य परिमाणस्य गौरवस्य वा रक्षणे क्षमा शक्ता। धीरता बुद्धिसक्ता। धीरता धैर्यम्। मनसि। न। भूतता पृथिवी ख्याता, त्वत्तोऽन्यत्र सुलभेत्यर्थः। भूतता सत्यता च। वचसि न नास्तीत्यर्थः। तथा चैतादृशस्य धूर्तस्य मूर्खस्य तव मत्सख्यां प्रेयस्यां विरुद्धाचरणं न खल्वयुक्तमिति भावः। आत्मने हित इत्यर्थे 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति सूत्रेण खप्रत्यये तस्य ईनादेशे आत्मनीनेति रूपम्। शारदशब्दे 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति सूत्रेण भवार्थे अण्प्रत्ययः। 'विशारदः पण्डितेऽपिधृष्टे' 'शारदोऽब्दे

**भूतता भूतता च वचसि । साहसेन सा हसेन कमला कमलालया यया जिता, सा त्वदर्पणा दर्पणाकारविमलाशया शयाब्जनिर्जितकिसलया सलयाङ्गुलिरिव विभ्रमेण विभ्रमेण**

---

स्त्रियां तोयपिप्पलीसप्तपर्णयोः । शस्ये क्लीबं शरज्जाते नूतनाप्रतिभे त्रिषु ।' 'अभ्रं मेघे च गगने' 'विशदः पाण्डरे व्यक्ते' 'क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् । वाच्यवत् शक्तहितयोः' 'धीरो धैर्यान्विते स्वैरे बुधे' 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना ।' इति मेदिनी । 'शारदा स्यात्सरस्वती' इति कल्पद्रुमः । **साहसेनेति** । इदमपरस्या वचनम् । यया नायिकया । सा सुप्रसिद्धा । कमलालया पद्मावासा । कमला लक्ष्मीः । आहसेन क्रीडया सह वर्तत इति तेन साहसेन सशृङ्गारेणेति यावत् । हसेन हासेन सविलासमन्दहासेनेत्यर्थः । 'आहसो ललितं क्रीडा' इत्यजयः 'तत्र हासो हसो हास्यम्' इति शब्दार्णवः । जिता । सा लोकोत्तरगुणोत्तरा नायिका । सा कीदृशी—त्वदर्पणा त्वयि अर्पणं मनसः समर्पणं यस्याः सा तादृशी । दर्पणाकारः मुकुरतुल्यः विमलः स्वच्छः आशयः हृदयं यस्याः सा तथोक्ता । शयः करः अब्जं पद्ममिव शयाब्जं तेन निर्जितं किसलयं पल्लवः यया सा तथोक्ता आरुण्यमृदुत्वादिभिः पल्लवातिशायिकरतलेत्यर्थः । 'पञ्चशाखः शयः पाणिः' इत्यमरः । विभ्रमेण विलासेन । सलयाः साभिनयाः अङ्गुलयः यस्याः सा तादृशीव । 'लयशब्देन लयानुगतोऽभिनयो लक्ष्यते' इति, 'किसलयैः सलयैरिव पाणिभिः' इति रघुवंशपद्यव्याख्यावसरे मल्लिनाथः । 'लयः नृत्तावयवदर्शनम्' इति कश्चित् । विभ्रमेण विशिष्टेन भ्रमेण तृणेऽपि चलति त्वमेवागत इति समधिकभ्रान्त्येत्यर्थः । 'विभ्रमेण विशेषेण भ्रमणविशिष्टेन विभ्रमेण विलासेन' इति

गवाक्षशलाकाविवरं लोकयन्ती लोकयन्त्रितविनाशा विना

---

कश्चित् । गवाक्षस्य वातायनस्य शलाकानां सुसूक्ष्माणां काष्ठादिकृतानां दण्डानां विवरं छिद्रम् । गवामक्षीव गवाक्षः । 'अक्ष्णोऽदर्शनात्' इत्यच् । 'वातायनं गवाक्षोऽथ' इत्यमरः । लोकयन्ती पश्यन्ती । '...विवरं प्रति विलोकयन्ती' इति, 'प्रतिगवाक्षशलाकाविवरं विलोकयन्ती' इति च पाठान्तरम् । लोकेन सखीजनेन यन्त्रितः प्रतिषिद्धः विनाशः प्राणत्यागः यस्याः सा तादृशी, प्रत्याशाप्रदर्शनेन सखीभिर्निवार्यमाणमरणाध्यवसायेत्यर्थः । शापं विना शापात् ऋतेऽपि । दुःखानि अनुभवति । सति तु शापे यद्यपि न्याय्यो दुःखानुभवः, यथा शकुन्तलायाः; इदं तु महदन्याय्यम्; यत्तादृश्याः शापेन विनापि केवलं त्वदुपेक्षामात्रेण विरहविषमदुःखानुबन्ध इतीति भावः । तथा च तव सौभाग्यं तादृशम्; येन सैवं दुःखमनुभवतीति नायकप्रशंसायामस्य वाक्यस्य तात्पर्यमवसेयम् । 'साहसेन ईषद्धासयुक्तेन साहसेन साहसगुणेन कमलालया पद्मावासा अथवा कं सुखं मल धारणे इति धातोः क्विप् सुखधारिणी' इति कश्चित् । उपालम्भपक्षेऽपि अयमेव पदार्थः । अतिशयितलक्ष्मीसौन्दर्या सा महतीं विरहवेदनामनुभवति; त्वं त्वपरिचित इव तामुपेक्षस इति हन्त सर्वथा कठिनचित्तोऽसीत्येवं तत्र निन्दावगतिरिति बोध्यम् । यद्वा निन्दापक्षे, साहसेन साहसे न इति च्छेदः । साहसानां अनुचितकर्मणां इन स्वामिन्, सर्वदाप्यनुचितकारिन्निति संबोधनम् । यया मत्सख्या कमला जिता; सा मत्सखी साहसे न, न सा साहसकारिणीत्यर्थः । यद्वा सा हसे न इति च्छेदात्, सा हसे हास्ये न न सा परिहासास्पदमित्यर्थो बोध्यः । 'कमलालया' इत्येतत् 'यया' इत्यस्य विशेषणं तृतीयान्तम् । कमलां लक्ष्मीं अलति गच्छतीति कमलाला तया कमलालया श्रीमल-

**शापमनुभवति दुःखानि । जीवनायक जीवनाय कमिव नाश्रयति सुभगम् । अन्यास्तावदासतामहमेव दासतां पुरतो**

---

त्यर्थ इति केचित् । अत्र शिवरामधृतः पाठस्तु नातीव स्वरसः; तदीयं व्याख्यानं त्वतिक्लिष्टं विस्तृतमिति तत्रैव तद्द्रष्टव्यम् । **जीवनायकेति ।** इदमेकस्या वाक्यम् । हे जीवनायक मत्सखीप्राणनाथ । जीवनाय प्राणधारणाय । (मत्सखी) सुभगं सौभाग्यवन्तम् । कमिव कं पुरुषं वा । नाश्रयति । तया हि प्राणधारणाय नियतमेकः सुभग आश्रयणीयः; त्वं च सुभगोत्तम इति त्वमेव तस्या जीविताालम्बनमिति प्रशंसावादः । निन्दाव्यक्तौ तु, जीवनायकेत्यस्य जीवं नयति अपहरतीति व्युत्पत्त्या प्राणापहारकेत्यर्थो बोध्यः । 'कमिव कं पदार्थमिव । अथवा आत्मानमिव नाश्रयति सुभगम् । अपितु सुभगमाश्रयत्येव' इति कश्चित् (!) 'जीवनाय जलार्थं जलाहरणार्थमित्यर्थः । सुभगं शोभनपशुं त्वां के नाश्रयन्ति' इति शिवरामः (!) **अन्या इति ।** अन्याः अपराः स्त्रियस्तावत् । आसतां तिष्ठन्तु । मैत्र्यतः मित्रभावेन । अहमेव । (तव) दासतां दासभावम् । पुरतः अग्रे प्रथमत इत्यर्थः । भजामि अहमेव तव दासीभूय कार्यं सर्वं साधयिष्यामीत्यर्थः । अतः (तव) मैत्री (मयि) अस्तु । निन्दापक्षे, अन्यास्त, अवद, असतां, दास, तां, इत्येवं पदच्छेदः । हे अन्यास्त अन्याभिः अपराभिः स्त्रीभिः अस्त निरस्त । अत एव, अवद मूकीभूत । पुरतः पूर्वमेव । असतां असाधुजनानाम् । दास । तां तादृशगुणगणपूर्णां मत्सखीम् । अहमेव भजामि, त्वमयोग्योऽसज्जनसहवासकलुषितश्च । अत एव बहुधा मयोच्यमानोऽपि न प्रतिपद्यसे किमपि । अतस्त्वमागच्छ वा मा वा । अहं पुनर्यथापुरं तां सेवितुं गच्छामीत्यर्थः । सति चैवं तव स्नेहाद्वरमस्नेह इत्याह— मैत्र्यत इति । मैत्र्यतः, अमैत्री, इति

भजामि, मैत्र्यतो मैत्र्यतोऽस्तु । अञ्जसा रतः सारतः किमपि कन्दर्पकं दर्पकं न चेत्तनोषि, विशेषतोऽविशेषतः

---

पदच्छेदः । अतः, एवं मयोक्तेऽपि यतस्त्वं नानुरुणत्सि; अतो हेतोरित्यर्थः । (तव) मैत्र्यतः स्नेहात् तदपेक्षयेत्यर्थः । अमैत्री मैत्र्यभावः । अस्तु, त्वत्स्नेहादपि त्वत्स्नेहाभाव एव वरमित्यर्थः । यद्वा मैत्र्यत इत्यस्य मैत्र्यतः अहं तां भजामीति पूर्ववाक्य एवान्वयः । अतः अमैत्री अस्तु नाहमितः परं तव मैत्रीमभिलषामीत्यर्थः । **अञ्जसेति** । रतः अनुरक्तः । (त्वम्) सारतः बलात् । कन्दर्पकं मन्मथम् । स्वार्थे कः । अञ्जसा शीघ्रं यथा तथा । अञ्जसेत्यव्ययं शीघ्रबलयोः । किमपि अनिर्वचनीयया रीत्या । अव्ययमेतत् । दर्पकं गर्ववन्तं समदमिति यावत् । न तनोषि चेत् । विशेषतः विशिष्य । अविशेषतः तव तस्याश्चाविशेषेण । मरणमेव । स्थिरं दृढं नियतमित्यर्थः । किमपीत्यस्य किंचिद्वापीत्यर्थो वा । त्वमपि तस्यामनुरक्तः; सापि त्वयीति युवयोरन्योन्यानुरागो बलवान् । यदि च त्वमागत्य तादृशीं तां रमयन्मन्मथं सफलं न करोषि, तर्हि नियतमेव सा मरिष्यति, भवानपि तद्वियोगेनेति भावः । इयं च प्रशंसा । निन्दापक्षे तु, न केवलं स्त्रीहत्या परं दोषः, अपि तु आत्महत्यापि दोषान्तरमापतिष्यतीति भावो वर्णनीयः । निन्दापक्षे अञ्जसा अरत इति पदच्छेदेन त्वं वस्तुगत्या अननुरक्त इत्यर्थो वा । 'द्राग्झटित्यञ्जसाह्नाय' 'सारो बले स्थिरांशे च' 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः । 'अञ्जसा शैघ्र्येयेण । सारतो बलात् । सा तन्वी तव प्रियेति शेषः । त्वं रतः सक्तः । किमपि दर्पकं न तनोषि । विशेषतः विशेषात् । अशेषतः निःशेषात् । मरणं स्थितमेव । माधुर्यं गुणः । मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू । अवृत्तिर्लघुवृत्तिर्वा तन्माधुर्यमिति स्मृतम् । इति

स्थिरमेव मरणम् । शठधियां शोधन यशोधन प्रेमहार्या

काव्यप्रकाशे’ इति शिवरामः । ‘अञ्जसा तत्त्वगत्या । रतः अनुरक्तः । त्वं सारतः हर्षात् । किमपि । दर्पकं दर्पकरम् । कन्दर्पकं कामसुखम् । न चेत्तनोषि यदि न करोषि । विशेषतः विशेषात् । विशेषतः निःशेषेण । स्थिरमेव मरणम् अस्याः । तेनेदमुच्यते । अवाङ्मनसगोचरं कामसुखं यदि न तनोषि विशेषतो निःशेषेण तस्या मरणमेव स्थिरम् । सा नायिका सुरतविदुषी स्वयं सुरततन्त्रकुशलेति भावः’ इति कश्चित् । ‘सा नायिका सुरतविदुषी, त्वमपि सुरतकुशलश्चेति भावः’ इति केचित् । **शठेति** । शठा गूढविप्रियकारिणी धीः बुद्धिः येषां तेषां शठधियां मूर्खाणामित्यर्थः । शोधन शोधक मूर्खाणां मौर्ख्यापहारिन्नित्यर्थः । ‘शोधन शिक्षक’ इति केचित् । यशोधन । समा मा लक्ष्मीः तया सहिता । महार्या महती च सा आर्या च अत्यन्तयोग्येत्यर्थः । सा नायिका । उत्कटानि स्वाभिप्रायव्यञ्जनैकनिपुणानि अक्षीणि शृङ्गारदृष्टयः येषु तैः उत्कटाक्षैः । ‘बहुव्रीहौ सक्थ्यक्ष्णोः—’ इति षच् । कटाक्षैः अपाङ्गप्रेक्षणैः । प्रेमहार्या प्रेम्णा स्नेहेन हार्या वशीकार्या, नतु इतरस्त्रीवत् धनहार्येत्यर्थः । तथा च परमरसिकस्य ते सा नियतमेव पतिष्यति वशे इति गम्यतां त्वयेति भावः । नापि परिजनात् भेतव्यमित्याह आविर्भूतेति । तदा युवयोः परस्परप्रेमसमागमकाल इत्यर्थः । अस्याः नायिकायाः । परिजनाः भृत्यवर्गाः, स्त्रियः पुरुषा वेति भावः । आविर्भूतं उत्पन्नं दास्यं त्वयि विषये दासभावो येषां ते तादृशाः । यथा तस्याः, तथा तवापि ते परिजना दासा भविष्यन्तीति न कुतोऽपि शङ्का कार्येति भावः । निन्दापक्षे, शठ गूढविप्रियकारिन् । धियां शोधन बुद्धिमार्जक बुद्धिहीनेत्यर्थः । यशोधनेति विपरीतलक्षणया परिहासगर्भं संबोधनम् । प्रेमहार्या, अम, हा, आर्या, असमा, इति पदच्छेदः । न विद्यते

महार्या समा सोत्कटाक्षैः कटाक्षैराविर्भूतदास्यास्तदास्याः परिजनाः । कमलाकृतिनारीणां कमलाकृति नारीणां भवता

मा लक्ष्मीः यस्य तस्य संबोधनं अमेति, भाग्यहीनेत्यर्थः; कथमन्यथा तामुपेक्षसे इति भावः । असमा निःसमाना । सा नायिका । प्रेमहार्या प्रेम्णैव हार्या, न तु यथा त्वं मन्यसे तथा धनहार्येत्यर्थः । हा इति विषादे । तादृशीमयमेवं संभावयतीति विषादबीजम् । न चास्या अनुकूल परिजनादिसामग्री नास्तीति मन्तव्यम्; येन कदाचित्तव बलात्कार-शङ्कापि प्रसजेदित्याह— उत्कटाक्षैरित्यादिना । तथा च भ्रुकुटीविधेया-स्तस्याः परिजना इति न तत्समागमे विना प्रेमयोगमन्योऽस्त्युपाय इति भावः । यद्वा, अमहार्य, असमा इति पदच्छेदः । महांश्चासौ आर्यश्च महार्यः स न भवतीति अमहार्यः । तस्य संबोधनं अमहार्येति । 'धियां शोधन बुद्धीनां निरूपक' इति, 'उत्कटाक्षैः उन्नतचक्षुर्भिः, अथवा उत्कटैः अक्षैः इन्द्रियैः' इति, 'अयमर्थः—अस्याः कटाक्षैः परिजना विलासिनः स्वीकुर्वन्तीति, तस्माच्छीघ्रं गच्छेति भावः' इति च कश्चित् । शिवरामस्तु 'प्रेमहार्या-महार्याशयोत्कटाक्षैः कटाक्षैः' इति पाठं स्वीकृत्य, निन्दापक्षे 'हे शठधियां जडबुद्धीनां शोधन । यशसा अवन बुद्धिशुद्धियशोहीन । उत्कटं असौम्यं अक्षि येषु तैः कटाक्षैः प्रेमहार्य सुखहारणीय, या त्वां क्रूरैः कटाक्षैरामन्त्र-यति तस्यास्त्वं वश्य इत्यर्थः । अत एव, अमहार्याशय महानीचाशय' इति व्याचष्टे । उपर्यपि तदीयं व्याख्यानं तु क्लिष्टं विस्तृतं च । तत्रैव तदवसेयम् । **कमलेति** । कमलस्य पद्मस्येव आकृतिः यस्य तेन कम-लाकृतिना मृदुत्वादिभिः पद्मतुल्यशरीरेणेत्यर्थः । भवता त्वया । अरीणां शत्रूणाम् । कमलाकृति कमलया लक्ष्म्या कृति धन्यम्, श्रीमदित्यर्थः । मुखम् । तथा, नारीणां स्त्रीणाम् । कमलाकृति पद्मतुल्यम् । मुखं च ।

मुखं च मलिनितम् । विश्वस्य विश्वस्य व्यवस्थां समासाद्य-

---

मलिनितं मलिनीकृतम् । युद्धे शत्रवो जिताः, त्वत्सौभाग्येन च त्वयि अभिनिविष्टानां युवतीनां त्वदलाभेन विषादान्मुखकमलं म्लानमिति भावः । यद्वा कमलाकृतिनारीणामित्येकं पदम् । लक्ष्मीसदृशीनां स्त्रीणामिति तदर्थः । कमलाकृतिना इति पदच्छेदेऽपि, कं सुखं मलति धारयतीति कमला सुखसहितेत्यर्थः । 'मल मल्लधारणे' तादृशी आकृतिर्यस्य तेनेति, भवतेत्यस्य विशेषणमिति केचित् । तथा च सुन्दरः शूरश्च भवानेव तामर्हतीति, कामुकान्तरादभीतेन त्वया गम्यतामिति गमनप्रवेशनाय प्रोत्साहयति दूतीति बोध्यम् । निन्दापक्षे तु, कमला, कृतिना अरीणाम्, कमलाकृति, नारीणाम्, इति पदच्छेदः । कृतिना धन्येन । त्वया । अरीणां शत्रूणाम् । कमला लक्ष्मीः । मलिनिता । तथा, नारीणां स्त्रीणाम् । कमलाकृति पद्मसमम् । मुखं च मलिनितम् । मलिनिता च मलिनितं चेति विग्रहे 'नपुंसकमनपुंसकेन...' इत्येकशेष एकवद्भावश्च । अयं भावः— सर्वदा त्वं रणोत्साही भवन्न खलु वैषयिकं सुखमपेक्षसे ; अत एव स्त्रीणामपि त्वय्यपरितोषः । किं च दुर्भगोऽसि, तत एव च तव मुखविकारं पश्यन्तीनां युवतीनां मुखानि जुगुप्सया संकुचन्ति–इति । यद्वा, कमला, कृति, न, अरीणाम्, इत्येवं छेदः । भवता अरीणां कमला न मलिनिता, शत्रुलक्ष्मीर्नापहृता ; न शत्रवो युद्धे पराजिता इत्यर्थः । तथा, नारीणां कमलाकृति अत एव कृति धन्यं मुखं च । न मलिनितं, एतदसमागमे कथं वयं जीवेम । तादृशं ह्यस्य सौन्दर्यमिति चिन्तया न म्लानीकृतमित्यर्थः । तथा च अशूरस्य भीरोरसुन्दरस्य दुर्भगस्य तदुपेक्षणं न्याय्यमेवेति भावः । **विश्वस्येति** । इदमेकस्या वचनम् । विश्वस्य, विश्वस्य, व्यवस्थाम्, समासादि, असमासात, या,

समासाद्यानेककालं सङ्गीतसङ्गी तनुषे तनुषे कमनङ्ग स्य

अनेककालम् , संगीतसङ्गी, तनुषे, तनुषे, कम्, अनङ्ग स्य, पुष्पेषु, पुष्पेषुरुजा, तरसा, अजातरसा, मन्दाक्षमन्दा, क्षणम्, भ्रमन्ती, मुह्यति, इति पदच्छेदः । विश्वस्य लोकस्य । 'विश्वं तु शुण्ठयां भुवनकृत्स्नयोः' इति हैमः । व्यवस्थां मर्यादां परस्परानुरागपूर्वकं दाम्पत्यस्वीकरणमित्येवंरूपां रीतिमित्यर्थः । अनेककालं बहूनि दिनानि । अत्यन्तसंयोगे द्वितीया। असमासात् असंक्षेपात् पूर्णतयेत्यर्थः । विश्वस्य श्रद्धाय । (त्वया) या नायिका । समासादि लब्धा । (सा) पुष्पेषोः कुसुमशरस्य मन्मथस्य रुजा पीडया । तरसा जवेन । अजातरसा कस्मिंश्चिदपि वस्तुन्यनुत्पन्नप्रीतिः । एतेनारतिरुक्ता । मन्दाक्षेण लज्जया मन्दा लज्जाविहीनेत्यर्थः । अनेन लज्जात्यागो नामावस्था कथिता । पुष्पेषु शैत्योपचाराय शयनतया सखीभिः संपादितेषु कुसुमेषु । क्षणम् । भ्रमन्ती विलुठन्ती । मुह्यति मूर्च्छति उन्माद्यति वा । एतेन संज्वरमूर्च्छोन्मादाः कथिताः । हे अनङ्ग काम कामसदृशेत्यर्थः । (त्वम्) संगीतसङ्गी संगीतं गायन् सन् । तनुषे स्वशरीराय स्वशरीरधारणायेत्यर्थः । कं सुखं तनुषे संपादयसि । स्य तस्याः दुःखं नाशय, यद्वा स्वाकीयां स्वार्थैकप्रवणतां विसर्जयेत्यर्थः । 'षो अन्तकर्मणि' इत्यस्माद्दैवादिकाल्लोटि मध्यमैकवचने 'स्य' इति रूपम् । शरीरवाची तनुशब्दः सकारान्तोऽप्यस्ति । 'अर्तिपृवपि...' इत्यौणादिकसूत्रव्याख्यानावसरे 'तनुः शरीरम् । तनुषे तनुषेऽनङ्गमिति सुबन्धुः । स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुरिति द्विरूपेषु विश्वः' इति मनोरमा । तथा च या चिराय परिचितेन त्वया लोकमर्यादामूरीकृत्य स्वीकृता, या चेदानीं त्वद्विरहान्महति मन्मथदुर्जाते पतिता; तां स्वार्थैकप्रतिपत्तिं विहाय नियतमाद्रियस्वेति भावः । केचित्तु

पुष्पेषु पुष्पेषुरुजा तरसाजातरसा मन्दाक्षमन्दा क्षणं भ्रमन्ती

---

समासाद्य, समा, सा, अद्य, इति, अनङ्गस्य, इति च छिन्दन्ति। विश्वस्य कृत्स्नस्य। विश्वस्य भुवनस्य। व्यवस्थाम्। समासाद्य प्राप्य (स्थिता) समा सलक्ष्मीका। सा नायिका। अद्य। अनङ्गस्य मन्मथस्य। पुष्पेषुरुजा पुष्परूपाः ये इषवः बाणाः तैर्जातया रुजा। पुष्पेषु भ्रमन्ती मुह्यतीत्येवं व्याचक्षते च। पुष्पेषु, पुष्पेषु, रुजा, इति च्छेदेन, अनङ्गस्य मन्मथस्य। रुजा। पुष्पेषु पुष्पेषु सकलविधपुष्पेषु, भ्रमन्ती, मुह्यति, इति वा। यद्वा अनङ्गस्य रुजा। पुष्पेषु पुष्पेषु सकलविधेषु शैत्योपयोगिषु कमलकुवलयादिषु। अजातरसा अनुत्पन्नाभिलाषा, तेषां प्रत्युत तापकरत्वादित्यर्थः। पुष्पेषुरुजातरसा, इत्येकं पदम्। पुष्पेषोः रुजायाः पीडायाः तरसा बलेनेति वा। 'तरो जवे बले' इति हैमः। मन्दं सततमश्रुपूरणेन विषयग्रहणासमर्थं अक्षि यस्याः सा मन्दाक्षा, मन्दा ग्लान्या वचसि मन्दा मन्दीभूतवचनेत्यर्थः। मन्दाक्षा च सा मन्दा चेति विशेषणोभयपदकर्मधारय इति परे। निन्दापक्षे, विश्वस्य, विश्वस्य, व्यवस्थाम्, समासादि, असमासाद्या, इति, तनुषे, तनुषे, अकम्, अनङ्गस्य, पुष्पेषु, पुष्पेषु, रुजा, जातरसा, मन्दा, अक्षमन्दा, इति च पदच्छेदः। विश्वस्य विश्वस्येति ल्यबन्तस्य द्विरुक्तिः। व्यवस्थां नाहं त्वां मुञ्चेयमिति त्वयोक्तां व्यवस्थां, त्वां ग्रहीष्यामि नियतमिति क्लृप्तपूर्वं नियमं वा। विश्वस्य विश्वस्य श्रद्धाय श्रद्धाय। असमासाद्या समासादयितुं प्राप्तुं अयोग्या (सा) समासादि। स्वीकृता। (सा) संप्रति। पुष्पेषु पुष्पेषु शयनतया कल्पितेषु सकलविधेष्वपि कुसुमेषु। रुजा पीडया जुगुप्सयेति यावत्। तरसा जवेन। जाता शयनतया भूता रसा भूमिः यस्याः सा तादृशी, पुष्पतल्पमनुभवितुमजानाना, तत्र शैत्यसौगन्ध्यादिषु प्रीतिमभजमाना तेभ्य उद्वि-

जमाना ततस्तत्तल्पमपहाय भूमावेव शेत इत्यहो मूढाया एतस्या अरासिक्यमिति भावः । मन्दा बुद्धिहीना । अक्षेषु व्यवहारेषु मन्दा मूढा । भ्रमन्ती सर्वानपि विषयानन्यथा गृह्णती सती । यद्वा मन्दाक्षमन्दा निर्लज्जा । अक्षणं निरुत्सवं निःसंतोषं यथा तथेति यावत् । मुह्यति इतिकर्तव्यतामूढा वर्तते । अनेककालं संगीतसङ्गी रसिक इत्यर्थः । (त्वम्) (तस्याः स्वीकरणात्) तनुषे स्वशरीरार्यं स्वशरीरं नाशयितुमित्यर्थः । 'क्रियार्थोपपदस्य......' इति चतुर्थी । अनङ्गस्य मन्मथस्य । अकं दुःखं मन्मथतापमित्यर्थः । तनुषे उत्पादयसि । नैतत्तवोचितमिति भावः । 'समासादि, असमा, सा अद्य, इति च्छेदः । असमा तवासदृशी, यद्वा समा सलक्ष्मीका तद्भिन्ना असमा निःश्रीकेत्यर्थः । 'या' इत्यध्याहार्यम् । उत्तरत्र तच्छब्दश्रवणात् । असमा या समासादि, सा, अद्य एवंविधा सती मुह्यतीति संबन्धो वा । केचित्तु 'तनुषे, अतनुषे अकम्, अजातरसा, इति पदच्छेदः । अनङ्गस्य अजातरसा अनुत्पन्नकामरसेत्यर्थः । प्रधानत्वादेकदेशान्वयोऽविरुद्धः । पुष्पेषुरुजा मन्मथपीडया । मन्दा, आस्तां कामस्य रुचिरोऽवतारः, परं तु तस्याः कामविकार एव नास्तीत्यहो अरासिक्यमिति भावः । पुष्पेषु कुसुमविषये । अक्षणं निरुत्सवम् यथा तथा । मुह्यति, उद्दीपकसामग्रीसत्त्वेऽपि न केवलं कामो नोद्दीप्यते, परं तु सर्वात्मना नोत्पद्यत एवेति भावः । अतः, (त्वम्) अतनुषे अनङ्गाय मन्मथाय । अकं दुःखम् । तनुषे' इत्येवं व्याचक्षते । अन्ये तु, प्रशंसापक्ष इवात्रापि पदच्छेदादिकं कृत्वा, तनुषे, अकम्, इति परं छित्त्वा, 'सा एवं मुह्यति, त्वं तु तनुषे तस्याः शरीराय । अकं दुःखं तनुषे । हे अनङ्ग काम कामसदृश । स्य, किमर्थं वृथा तच्छरीरं तापयासि । त्वं तु महाक्रूरः । अतः खड्गादिना तां छित्त्वा मारय' इत्येवं भावार्थं वर्णयन्ति । 'समासाद्यासमासाद्यानेककालं संगीतसंगीतरसिक' इति पाठमाश्रित्य,

मुह्यति। कामधुराधरेण का मधुराधरेण युक्ता रजोराजविशेष-केण विशेषकेण मुखेन्दुना तव हृदि लग्ना म्रदिमाकरेण करेण

---

'व्यवस्थां समासाद्य संप्राप्य । असमा अतुल्यरूपा । सा । अद्य । हे संगी, तसंगीतरसिक सम्यक् गीते विशेषेण रसिक' इत्येवं व्याचष्टे कश्चित् । शिव-रामस्तु 'व्यवस्था समासाद्य समासाद्यमनेककालसंगीतसङ्गी तनुषे तनुषे कमनङ्गमनङ्ग पुष्पेषु' इति पाठमाद्रियते । तदीयं व्याख्यानं तु नास्माभिः स्पष्टं ज्ञायते । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः । 'कं शीर्षेऽम्बु सुखे' अकं दुःखाघयोः' 'क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः' 'अक्षो रथस्यावयवे व्यवहारे विभीतके' इति हैमः । **कामेति ।** कामेत्यारभ्य काञ्चनेनेत्यन्तमेकं वाक्यम् । एतादृशेन अधरेण मुखेन्दुना करेण पयोधरेण युक्ता का तव हृदि लग्नेति संबन्धः । कामस्य धूः कामधुरा 'ऋक्पूः—' इत्यादिना समासान्तः । तस्याः धरेण धारिणा कामधुराधरेण मदनधूर्वहेणेत्यर्थः । मधुराधरेण मनोहरेणाधरो-ष्ठेन । यद्वा मधुरा, अधरेण, इति पदच्छेदः । मधुरा इत्येतत्प्रथमान्तं का इत्यस्य विशेषणम् । रजोराजः रजोगुणस्य अधिपतिः रजोगुणजन्यः काम इत्यर्थः । 'काम एष क्रोध एष रजोगुणसमुद्भवः' इति भगवता गीतम् । तं विशिनष्टि उद्दीपयतीति तेन रजोराजविशेषकेण । विशेषकेण तिलकेन (युतेन) मुखेन्दुना मुखचन्द्रेण । केचित्तु, रजोराजविशेषकेणेत्येतत् विशेषकेणेत्यस्य विशेषणमिति मन्यन्ते । म्रदिम्नः मार्दवस्य आकरेण खनि-ना तन्निवासस्थानेनेत्यर्थः । मृदुशब्दात् पृथ्वादित्वादिमनिचि 'रऋतो हला-देर्लघोः' इति रादेशे म्रदिमेति रूपम् । करेण हस्तेन । स्वेदबिन्दुपयोधरेण सात्त्विकभावभूतस्वेदजलकणिकाधारिणा । उत्तरत्र यमकानुरोधेन बिन्दु-पदस्य मध्ये निवेशः । वक्षः फलकमिव वक्षःफलकं विशालमुरःस्थल-

स्वेदबिन्दुपयोधरेण पयोधरेण वक्षःफलकाञ्चनेन जितानाविल-

मित्यर्थः । तत्र अञ्चनं गमनं व्याप्तिः पूजनं वा यस्य तेन तथोक्तेन । जितं अनाविलं अकलुषं अतिस्वच्छं काञ्चनं स्वर्णं येन तेन जितानाविलकाञ्चनेन स्वच्छस्वर्णसवर्णेनेत्यर्थः । पयोधरेण स्तनेन स्तनाभ्यामित्यर्थः । 'स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण' इति सूत्रे प्रायपदोपादानादेकवचनमविरुद्धम् । (एतैः) युक्ता सहिता । का नायिका । तव अतिसुभगस्य परमरसिकस्य तवेत्यर्थः । हृदि मनसि । लग्ना संबद्धा । कां त्वमेतादृशीं ध्यायसीत्यर्थः । या हि परमरसिकं स्त्रीणामन्तरज्ञं त्वामपि स्वैकतानमानसं करोति, नियतं तया पूर्वोक्तगुणविशिष्टसकलाङ्ग्यैव भाव्यम् । अहो तस्या धन्यता । अहमस्मि तां सुभगां जिज्ञासुरिति भावः । निन्दापक्षेऽप्ययमेव प्रायेण पदार्थः । एतादृशी सुन्दरी का वा, दुर्भगस्य तव, हृदि वक्षसि । लग्ना संसक्ता, भविष्यतीति शेषः । एतादृशसौन्दर्यवती न कापि त्वामरसिकमभिलषिष्यति, नापि त्वया सह संगंस्यते । मदीया सखी परं कथंचित्त्वयि बद्धभावा । सत्येवं कथं त्वमुपेक्षसे तामिति तात्पर्यम् । यद्वा निन्दापक्षे का, अमधुरा, अधरेण, कामधुरा, अधरेण, युक्ता, अरजोराजविशेषकेण, इति, लग्ना, अम्रदिमाकरेण, इति, जिता, अनाविलकाञ्चनेन, इति च च्छेदः । अमधुरा इत्येतत् प्रथमान्तं केत्यस्य विशेषणम् । कामधुरा इत्येतदपि प्रथमान्तं तस्यैव विशेषणम् । कामस्य धूः भारः यस्याः सा तादृशी, केवलमतिमदनमदत्वादान्तरसंभोगैकप्रिया, न तु रसिकतया सरससंलापादिबाह्यसुरतसाभिलाषेत्यर्थः । अधरेण नीचेन । अधरेण ओष्ठेन । यद्वा धरेणेति च्छेदः । धरेण पर्वतेन पर्वतसदृशेनेत्यर्थः । अत्युन्नतत्वकर्कशत्वादिना तत्सादृश्यमवसेयम् । मुखेन्दुना इति सोपहासं रूपकम् । तस्य विशेषणं विशेषकेणेति । विशेषकेण विलक्षणेन, मुखान्तर-

**काञ्चनेन । कामदारुणमदारुणनेत्रा स्मरमयं रमयन्तं भवन्त-**

---

विपरीतेनेत्यर्थः । अथवा विशेषकेण विशेषयुक्तेनेति सपरिहासोक्तिः । अत एव, अरजोराजविशेषकेण कामानुद्दीपकेन । अम्रदिमाकरेणेत्यस्य स्पष्ट एवार्थः । स्वेदबिन्दुपयोधरेण स्वेदबिन्दुभिः शारीररोगजन्यैः न तु सात्त्विकतयोद्भूतैरित्यर्थः । पयोधरेण मेघेन सर्वदा जलस्राविणेत्यर्थः । वक्षःफलकाञ्चनेनेत्येतत् पयोधरेणेत्यस्य विशेषणम् । वक्षःफलके अञ्चनं गमनागमनं यस्य तेन तथोक्तेन पतितत्वाद्यावद्वक्षःपूर्ति लम्बमानेनेत्यर्थः । एतादृशेन अधरेण मुखेन करेण स्तनेन च युक्ता, अनाविलकाञ्चनेन स्वच्छसुवर्णेन । जिता श्यामवर्णेत्यर्थः तादृशी च, अमधुरा का तव हृदि लग्ना, दुर्भगैव तव प्रेमास्पदं भविष्यतीति भावः । 'मधुराधरेण मुक्ता-रजोराजिविशेषकेण विशेषकेण' इति पाठमभ्युपगम्य, 'मुक्तारजो-राजिभिः विशेषकं तिलकं यत्र तेन । एतन्निर्माणावसरे बहवो मुखेन्दवो निर्मिताः, तेषु रम्यत्वादस्यैव प्रयोगः कृतो विधिनेति विशेषेण शेषो यस्य तेन' इति शिवरामो व्याचष्टे । **कामेति** । एतदारभ्य चक्षुषा चेत्यन्तमेकं वाक्यम् । का, अमदारुणम्, अदारुणनेत्रा, इति पदच्छेदः । हारिणा हारवता । हारिणा मनोहरेण । स्तनकुम्भेन कुचकलशेन । हरि-णस्य मृगस्य इदं हारिणं, हारिणस्य अक्ष्णः नयनस्य या रुचिः शोभा, तां हरतीति तेन हारिणाक्षिरुचिहारिणा। चक्षुषा नयनेन च (उपलक्षिता) अदारुणो अक्रूरे सरसविलासे इत्यर्थः नेत्रे नयने यस्याः सा तादृशी च । का नायिका । अमदारुणं मदेन मद्यादिजनितेन मदेन अरुणः अरुणी-भूतनेत्राद्यवयवः, तद्भिन्नः अमदारुणः सर्वदा मद्यपायी न भवति यः सः तादृशम् । मदारुणमिति च्छेदेन उद्दीपकतया आसवोपसेविनमिति वा । स्मरमयं मन्मथस्वरूपं मदनविकारप्रचुरं वा । रमयन्तं रत्या लालय

मदयं मदयन्ती परमकमितारं परमकमितारं वाञ्छति हारि-

---

न्तम् । परमकमितारं उत्कृष्टकामुकम् । भवन्तं त्वाम् । मदयन्ती हर्षयन्ती सती । (त्वां विहाय) अकमितारं अकामुकम् । परं अन्यम् । अदयं दयारहितं यथा तथा । वाञ्छति । न कापि त्वय्यनुरक्ता सती त्वदीयसारस्यादिहृतचित्ता विहाय त्वामन्यत्र रमेतेति भावः । 'स्मरमयं रसमयन्तम्' इति पाठे तु स्मरमयं रसं रागं अयन्तं प्राप्नुवन्तमित्यर्थः । यद्वा, परम्, अकमितारम्, परम्, अकम्, इता, अरम्, इति पदच्छेदः । का स्मरमयं रमयन्तं भवन्तं अदयं यथा तथा मदयन्ती उपेक्षणेन ग्लेपयन्ती भवन्तं स्वपरित्यागेन दीनं कुर्वतीत्यर्थः । 'मदी हर्षग्लेपनयोः' इत्यत्र ग्लेपनं दैन्यमिति घटादौ दीक्षितः । (स्वयमपि) परं अधिकम् । अकं दुःखम् । इता प्राप्ता सती । अकमितारम् । परं अन्यम् । अरं अत्यन्तम् । वाञ्छति । न कापि तथा कुर्यादिति भावः । यद्वा परमकम्, इता इतिच्छेदः । परमं उत्कृष्टं कं सुखम् । इता त्वत्संसर्गेण प्राप्ता सतीत्यर्थः । 'कामदारुणमदारुणनेत्रा' इत्येकं पदमभिसंधाय, 'कामदारुणमदारुणनेत्रा बहलकाममदलोहितनयना' इति व्याख्याय, 'भवन्तं वाञ्छतीति संबन्धः' इत्युक्त्वा, 'एतेनेदमाह दूती— सुरतकुशला सा, भवानपि पुनः सुरतकुशलः । तथापि यथा सा नोद्विजते, तथा रंस्यसे, अन्यथा अव्युत्पत्त्या त्वयि विरक्ता भविष्यतीति' इति भावार्थमाह कश्चित् । निन्दापक्षे तु, का, मदारुण, मदारुणनेत्र, अस्मरमयम्, रम्, अयन्तम्, भवन्तम्, अदयम्, मदयन्ती, परम्, अकमितारम्, परम्, अकम्, इता, अरम्, इति पदच्छेदः, हे मदारुण मदेन वित्तादिजनितगर्वेण अरुण सूर्य तद्वत्तापकरेत्यर्थः । मदेन मद्यपानजनितमदेन अरुणे संरक्ते नेत्रे यस्य तस्य संबोधनं मदारुणनेत्रेति सर्वदापि मद्यपायिन्नित्यर्थः ।

णा हारिणा स्तनकुम्भेन हारिणाक्षिरुचिहारिणा चक्षुषा च ।

---

तादृशेन स्तनकुम्भेन चक्षुषा चोपलक्षिता का नाम युवतिः । अस्मरमयं मन्मथविकाररहितम् । रं अग्निम् । अयन्तं प्राप्नुवन्तम्, स्वक्रौर्येणाग्निं विकिरन्तमिव स्थितमित्यर्थः । यद्वा रं धनं अयन्तं सर्वदा धनमत्तमित्यर्थः । अदयं दयाहीनम् । परं शत्रुं शत्रुवदुपद्रवकारिणमित्यर्थः । अकमितारं अकामुकं अरसिकमित्यर्थः । भवन्तं त्वाम् । परं अधिकम् । अकं दुःखम् । इता प्राप्ता सती, त्वद्वाञ्छैव दुःखप्राप्तेः पर्याप्तो हेतुरिति भावः । मदयन्ती हर्षयन्ती हर्षयितुमित्यर्थः । 'लक्षणहेत्वोः क्रियायाः' इति शता । फलमपि तत्र हेतुरिति स्पष्टमाकरे । अरं शीघ्रम् । वाञ्छति । न कापि तादृशी त्वामीदृशं वाञ्छेत्, नापि मदयेदिति भावः । यद्वा रमयम्, तम्, इति च्छेदः । रमयं अग्निमयम् । तं अयोग्य इति सर्वतः प्रथितमित्यर्थः । यद्वा, कामदारुण, मदारुणनेत्रा, इति पदच्छेदः । अन्यत्सर्वं पूर्ववत् । हे कामदारुण कामेन दारुण क्रूर प्रचण्डसुरतेत्यर्थः । यद्वा कामदारुण अत्यन्तक्रूर । अस्मरमयं रमयं अदयं परं अकमितारं भवन्तं, परं अकं इता मदारुणनेत्रा मद्यपायिनी काचिदेव मदयन्ती सती अरं वाञ्छतीति संबन्धः । सा पुनः कीदृशी । तत्राह— हारिणेत्यादि । ह, अरिणा, अहारिणा, स्तनकुम्भेन, हारिणा, अक्षिरुचिहारिणा, चक्षुषा, च, इति पदच्छेदः । हेति विषादे । अहारिणा पतितत्वादमनोहरेण । अत एव, अरिणा, शत्रुणा शत्रुवत्प्रेक्षकाणां जुगुप्साकरेणेत्यर्थः । स्तनकुम्भेन । केचित्तु हारिणा इत्येव पदं छित्त्वा 'हारिणा अन्योन्यं युद्धवता पतितत्वादिति भावः' इति व्याचक्षते । हारिणा हं कोपं ऋच्छति प्राप्नोतीति हारि कोपास्पदं क्रूरमिति यावत् तेन । अक्षिरुचिं प्रेक्षकाणां नेत्रानन्दं हरति नाशयतीति तेन अक्षिरुचिहारिणा तिमिरादिदोषदुष्टेनेति

अनन्तरं दुग्धार्णवनिमग्नमिव, स्फाटिकगृहप्राविष्टमिव, श्वेतद्वीपनिविष्टमिव, जगदामुमुदे ।

---

यावत्। चक्षुषा च उपलक्षिता। 'हारिणा गर्तगतेन। हा गर्तेऽपि निगद्यते इत्येकाक्षरकोशः' इति केचित्। 'अरुणोऽर्केऽनूरुपिङ्गयोः' इति हैमः। 'रश्च कामेऽनिले वह्नौ भूमावपि धनेऽपि च' 'हः कोपे धारणेऽपि स्यात्' इत्येकाक्षरकोशः। 'अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत्' इति मेदिनी। परीक्ष्य सुबहून्पाठान्विमृश्य सरसार्थताम्। कथंचिदर्थयुगली सर्वत्राप्युदिता मया। शिवरामादिपाठश्च क्लिष्टस्तद्विवृतिस्तथा। सुमेधसः प्रवर्तन्तां तारतम्यपरीक्षणे ॥

**अनन्तरमिति** । अनन्तरं एतादृशमिव सत् जगत्। अमुमुदे हृष्यति स्मेति संबन्धः। दुग्धार्णवे क्षीरसमुद्रे निमग्नं अवगाढमिव। अर्णांसि जलानि अस्मिन् सन्तीति अर्णवः । 'अर्णसो लोपश्च' इति वार्तिकेन वप्रत्ययः सकारलोपश्च। 'दुग्धार्णवान्तर्गतम्' इति पाठान्तरम्। स्फाटिकं स्फटिकशिलानिर्मितम्। श्वेतद्वीपे तदाख्ये द्वीपविशेषे निविष्टं स्थितमिव । यद्यप्ययं श्वेतद्वीपो जम्बूप्लक्षादिषु प्रसिद्धेषु सप्तसु द्वीपेषु नान्तर्भवति; तथाप्ययमष्टादशस्ववान्तरभूविभागेष्वन्यतमः, श्वेतमृत्तिकामयश्चेति बोध्यम्। 'श्वेतद्वीपः श्वेतवर्णः पुण्यकृज्जनभजनीयो द्वीपविशेषः' इति केचित्। 'श्वेतद्वीपः चन्द्रद्वीपः । स च वैकुण्ठाख्यविष्णुधाम। यथा—श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्। तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि, इति श्रीभागवते' इति कल्पद्रुमः। 'श्वेताः द्वीपाः येन सः श्वेतद्वीपः चन्द्रः' इति कश्चित्। 'श्वेतद्वीपवाससुखमनुभवदिव' इति पाठान्तरम्। सर्वत्र चन्द्रिकाव्याप्त्या धवलत्वमेवं संभावनायां बीजमिति बोध्यम्।

ततः क्रमेण च विघटमानदलपुटकुमुदकाननकोशमकरन्दबिन्दुसंदोहसान्द्रनिष्यन्दास्वादमुदितमधुकरकुलकलरवमुखरितदिगन्तरे चन्द्रिकापानभरालसचकोरकामिनीभिरभिनन्दितागमने सुरतभरपरिश्रमखिन्नपुलिन्दराजसुन्दरीस्वेदजलकणिकापहारिणि तापहारिणि प्रवाति सायंतने तनीयसि निशानि-

---

**तत इति** । ततः । क्रमेण । कन्दर्पकेतुः । तमालिकामकरन्दसहायः सन् । वासवदत्तानगरं वासवदत्तानिवासस्थानं पत्तनम् । अयासीत् इत्यन्वयः । **विघटमानेति** । विघटमानानि विश्लिष्यन्ति दलपुटानि पुटसदृशाः छदाः येषां ते विघटमानदलपुटाः विकसन्त इति यावत् । तादृशाः ये कुमुदकाननानां कैरवखण्डानां कोशाः मुकुलाः तेषां मकरन्दबिन्दुसंदोहानां मधुकणिकासमूहानां सान्द्राः निबिडाः अविच्छिन्ना इत्यर्थः ये निष्यन्दाः वृष्टयः तेषां आस्वादेन अनुभवेन मुदितानां संतुष्टानां मधुकराणां कुलस्य समूहस्य कलरवेण अव्यक्तमधुरगुञ्जनेन मुखरितं सशब्दं कृतं दिगन्तरं आशावकाशः यस्मिंस्तस्मिन् तथोक्ते । 'निष्यन्दो रसः' इति कश्चित् । 'निष्यन्दास्वादमदमुदित' इति पाठान्तरम् । **चन्द्रिकेति** । भरः चन्द्रिकापानजनिततुन्दिलताप्रयुक्तो भारः । अलसाः मन्दगमनाः । चकोराख्यपक्षिणश्चन्द्रिकां पिबन्तीति प्रसिद्धिः । 'चकोरश्चन्द्रिकापायी' इति रत्नाकरः । **सुरतेति** । भरः अतिशयः । 'भरोऽतिशयभारयोः' इति विश्वः । पुलिन्दाः किराताः । 'पुलिन्दः कथ्यते म्लेच्छे पुलिन्द्रेऽपि निगद्यते ।' इति तारपालः । 'पुलिन्दः पत्रशबरः' इति रत्नकोशः । **सायंतने** सायंसमयभवे । 'सायं चिरम्—' इति ट्युः तुट् च । **तनीयसि** तनुतरे । अल्पवाचिनस्तनुशब्दादीय-

श्वासनिभे नभस्वति, कन्दर्पकेतुस्तमालिकामकरन्दसहायो वासवदत्तानगरमयासीत् ॥

अथ स प्रविश्य कटकैकदेशे विनिर्मितम्, अभ्रंकषशिखरेण सुधाधवलेनैकान्तरनिविष्टकनकमुक्तामरकतपद्मरागच्छ-

---

सुन्। **निशेति**। निशायाः रात्रेरेव युवत्याः निश्वासेन स्वपतिचन्द्रसमागमजनितनिश्वासेन तुल्ये। निभसंकाशादिपदघटितसमासेषु तुल्यादिपदैरस्वपदविग्रह इति सांप्रदायिकाः। 'दिग्दक्षिणा गन्धवहच्छलेन व्यलीकनिश्वासमिवोत्ससर्ज।' इति कुमारसंभवः। **नभस्वति** पवने। नभस्वद्वातपवन—' इत्यमरः। **प्रवाति** चलति सति। अयासीत् गतः। यातेर्लुङि 'यमरम—' इति सगिटौ।

**अथेति**। अथ वासवदत्तानगरयानानन्तरम्। भवनन्दनस्य शिवसुतस्य सुब्रह्मण्यस्य प्रभावः माहात्म्यमिव प्रभावो यस्य स तथोक्तः। सः कन्दर्पकेतुः। (तन्नगरम्) प्रविश्य। एतादृशं वासवदत्ताभवनं ददर्शेति संबन्धः। 'व्योमकेशो भवो भीमः' इत्यमरः। **कटकेति**। कटकः राजधानी तस्य एकदेशे एकस्मिन्प्रदेशे। विनिर्मितं विरचितम्। 'कटकैकदेशविनिहितम्' इति पाठान्तरम्। 'राजधान्यां नितम्बेऽद्रेर्वलये कटकोऽस्त्रियाम्।' इति त्रिकाण्डशेषः। **अभ्रंकषेति**। अभ्रं कषतीति अभ्रंकषः आकाशव्यापी शिखरः अग्रभागः यस्य तेन। 'सर्वकूल—' इति खचि 'अरुर्द्विषत्—' इति मुमागमः। 'अभ्रंलिह' इति पाठान्तरे तु 'वहाभ्रे लिहः' इति खच्। 'शिखरं पुलकाग्रयोः।' इति हैमः। **सुधा** लेपभेदः। 'सुधा स्नुह्यां लेपभेदे' इति हरिः। **एकान्तरेति**। एकं अन्तरं व्यवधानं यस्मिन्कर्मणि तद्यथा भवति तथा निविष्टाः प्रत्युप्ताः

लेन वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव सालवलयेन परिगतम्, अनिलोल्लसिताभिर्नभस्तरुकुसुममञ्जरीभिरिव तर्जयन्तीभिरिव गगनपुरश्रियं पताकाभिरुपशोभमानम्, कनकशिलापट्टाङ्कणप्रसृताभिः कर्पूरकुङ्कुमचन्दनैलालवङ्गपरिमलवा-

---

एकान्तरनिविष्टाः मध्ये मध्ये विजातीयं विनिवेश्य खचिता इत्यर्थः। तादृशानां कनकानां मुक्तानां मौक्तिकानां मरकतानां नीलरत्नानां पद्मरागाणां अरुणरत्नविशेषाणां च छलेन व्याजेन। 'सदृशं सोमादेकान्तरस्य' इति विक्रमोर्वशी। 'एको बुधः अन्तरं व्यवधानं यस्य स तथोक्तः तस्य' इति तत्र काटयवेमः। **अवस्थितेति**। अवस्थितः संनिहितः देवतागणः यस्मिंस्तेन तथोक्तेनेव स्थितेन। सापह्नवोत्प्रेक्षा। **सालवलयेन** प्राकारमण्डलेन। 'प्राकारो वरणः सालः' इत्यमरः। **परिगतं** परिवृतम्। 'एकान्तनिविष्ट—' इति, 'पद्मरागशकलेन' इति च पाठान्तरम्। क्वचित्तु इदं विशेषणमेव न दृश्यते। **अनिलेति**। अनिलेन वातेन उल्लसिताः चञ्चलाः ताभिः। इदं पताकाविशेषणम्। **नभस्तर्विति**। नभः आकाशमेव तरुः तस्य कुसुममञ्जरीभिः पुष्पस्तबकैरिव स्थिताभिः। **गगनपुरं** अमरावती। 'गगनपुरश्रियमपहसन्तीभिरिव' इति पाठान्तरम्। 'गगनार्णवश्रियम्' इति शिवरामपाठः (!) **पताकाभिः** वैजयन्तीभिः। **कनकेति**। कनकशिलापट्टं सुवर्णमयाशिलाफलकसहितं यत् अङ्कणं चत्वरं तत्र प्रसृताभिः प्रवहन्तीभिः। 'अङ्कणं गृहपरिसरभूमिर्वा' इति कश्चित्। 'कनकशिलापट्टाङ्कणेषु प्रसृताभिः जलयन्त्रविशेषैरिति भावः' इति शिवरामः। 'फलकोऽस्त्री फलं पट्टः' इति वैजयन्ती। **कर्पूरेति**। कर्पूरकुङ्कुमचन्दनैलालवङ्गानां चूर्णीकृत्य तत्र संमिश्रितानां परिमलं वासनां वहन्तीति ताभिः तथोक्ताभिः।

हिनीभिस्तटनिकटस्फाटिकशिलापट्टसुखनिषण्णनिद्रायमाणाज्ञातश्वेतपारावताभिः प्रभ्रश्यत्तटविटपिकुसुमस्तबकितसलिलाभिरनवरतमज्जदुन्मज्जद्युवतिजनघनजघनास्फालनोच्छ्वसितशीकरनिकरस्नपिततीरवेदिकाभिः कर्पूरपूरविरचितपुलिनतलनि-

'लवङ्गगन्धोदकपरिमल' इति क्वचित्पाठः। **तटेति**। तटनिकटे तीरसमीपे विद्यमानेषु स्फाटिकशिलापट्टेषु सुखेन निषण्णाः सन्तः निद्रायमाणाः निद्रामनुभवन्तः अज्ञाताः वर्णैक्यात्पृथक्तया विविच्य अविदिताः श्वेतपारावताः धवलकपोताः यासां ताभिः तथोक्ताभिः। निद्राशब्दो वृत्तिविषये तद्वति। तस्य लोहितादिपाठात् 'लोहितादि डाज्भ्यः क्यष्' इति क्यषि 'वा क्यषः' इति वैकल्पिकमात्मनेपदमिति निद्रायमाणेति रूपमिति केचित्। वस्तुतस्तु भृशादित्वात्क्यङिति व्याख्येयम्। 'अज्ञाततटस्फाटिक...प्रासादपारावताभिः' इति पाठं स्वीकृत्य 'निश्चलत्वमज्ञाने निश्चलत्वे च निद्रा तस्यां सुखोपवेशनं हेतुरिति कारणमालालङ्कारः' इति शिवरामः। **प्रभ्रश्यदिति**। प्रभ्रश्यद्भिः च्युतैः तटविटपिकुसुमैः तीरवृक्षपुष्पैः स्तबकितं संजातस्तबकं सलिलं जलं यासां ताभिः तादृशीभिः। स्तबकिते तारकादित्वादितच्। **अनवरतेति**। मज्जन्तः अवगाढाः। उन्मज्जन्तः निर्गच्छन्तः। जघनं नितम्बः। जघनशब्दश्च कटिपश्चाद्भागेऽपि प्रयुज्यते। यथा 'अवगाढा जघनगौरवात्पश्चात्' इति शाकुन्तलम्। आस्फालनं आघातः। उच्छ्वसिताः उद्गताः। 'उच्चलच्छीकर' इति पाठान्तरेऽपि उच्चलन्तः ऊर्ध्वं प्रसरन्त इत्येवार्थः। वेदिका परिष्कृता भूमिः। 'वेदिः स्यात्पण्डिते पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले।' इति मेदिनी। यद्वा वेदिका प्राङ्गणादिषु कृतमुपवेशनस्थानम्। 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः। **कर्पूरेति**। पुलिनं

षण्णनिनदानुमीयमानराजहंसाभिर्विकचनीलोत्पलकाननदर्शिताकाण्डचक्रवाकतिमिरशङ्काभिः युवतीभिरिव सुपयोधराभिः सुग्रीवयुद्धप्रवृत्तिभिरिव कीलालस्नपितकुम्भकर्णाभिः सागर-

जलादचिरनिर्गतं तटम् । 'तोयोत्थितं तत्पुलिनम्' इत्यमरः । निनदानुमीयमानाः शब्देन परं अत्र सन्तीत्यूह्यमानाः, कर्पूरपुलिनवर्णत्वान्निनदेनैवानुमानं संभवतीति भावः । राजहंसाः 'राजहंसास्तु ते चञ्चुसरणैर्लोहितैः सिताः ।' इत्युक्ता हंसविशेषाः । औपचारिकोऽयमत्र पुलिनशब्दप्रयोगः । अनुमानाख्यः प्रमाणालंकारः । 'कर्पूरपुलिनवर्णनेन संपत्तेरपरिमेयत्ववर्णनात् उदात्तालंकारोऽप्यत्र । तथा च दण्डी, आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् । उदात्तं नाम तं प्राहुरलंकारं मनीषिणः । इति' इति शिवरामः । **विकचेति ।** अकाण्डः अनवसरः असमय इत्यर्थः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।' इत्यमरः । विकचनीलोत्पलनीलिम्ना सर्वेषामप्यसमयतिमिरोद्गमशङ्कासंभवेऽपि चक्रवाकग्रहणं तेषामेव तिमिरदर्शनेन दुःखातिशय इत्याशयेन । तथा चोच्यते 'धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम् ।' इति । एतेन 'रक्तोत्पलपाठपक्षे रात्रौ विकासासंभवात् । (!) नीलोत्पलपाठपक्षे चक्रवाकानामेव तिमिरशङ्कावर्णनानुपयोगादुपेक्ष्यम्' इति शिवरामोक्तिरुपेक्षिता । 'दर्शितकारण्डवचक्रवाक' इति पाठं स्वीकृत्य 'कारण्डवो महापक्षः' इति कश्चित् (?) **सुपय इति ।** शोभनं पयः जलं तस्य धराभिः । पक्षे पयोधरः कुचः । 'स्त्रीस्तनाब्दौ पयोधरौ ।' इति विश्वः । **कीलालेति ।** कीलालेन जलेन स्नपिताः आर्द्रीकृताः कुम्भकर्णाः अवताराश्मानः यासां ताभिः तथोक्ताभिः । 'कुम्भकर्णोऽवताराश्मा' इति भागुरिरिति सांप्रदायिकाः ।

कूलभूमिभिरिव सुन्दरीपादपरागशबलाभिः नवनृपतिचित्तवृत्तिभिरिव कुल्यायमानकरिणीभिरनेकाभिर्नदीभिरुपशोभितम्,

---

'कुम्भकर्णः पक्षिविशेषः कलमुख इति प्रसिद्धः' इति कश्चित् । 'कुम्भस्य कलशस्य कर्णः अग्रः' इति शिवरामः । पक्षे कीलालं रुधिरम् । कुम्भकर्णः रावणानुजो राक्षसः । 'ततः स संज्ञामुपलभ्य कृच्छ्राद्बलीयसस्तस्य भुजान्तरस्थः । ......खरैश्च कर्णौ दशनैश्च नासां ददंश पार्श्वेषु च कुम्भकर्णम् । ...कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः । रराज शोणितैः सिक्तो गिरिः प्रस्रवणैरिव ।' इति रामायणे । 'रक्तेऽम्भसि च कीलालम्' इति वैजयन्ती । **सुन्दरीति** । सुन्दरीणां रमणीनां पादपरागैः चरणरजोभिः शबलाभिः कर्बुराभिः । पक्षे, सुन्दरीपादपानां सुन्दर्याख्यानां तरुविशेषाणां रागेण पल्लवपुष्पादिप्रयुक्तरक्तवर्णतया शबलाभिः । 'सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत् ।' इति मेदिनी । 'विटपी पादपस्तरुः ।' इत्यमरः । सुन्दरीपादपाः वृक्षाकारा विद्रुमाः । 'सुन्दरी विद्रुमे नार्याम्' इति वैजयन्तीति संप्रदायविदः । **नवेति** । नवः अचिराल्लब्धराज्यः यः नृपतिः राजा तस्य चित्तवृत्तिभिः मनोव्यापारैरिव । **कुल्येति** । कुल्या नदीभ्यः प्रवर्तिता अल्पा कृत्रिमा सरित्, तां अयमानाः प्राप्नुवत्यः करिण्यः हस्तिन्यः यासां ताभिः तादृशीभिः । 'कुल्याल्पाः कृत्रिमा सरित्' इत्यमरः 'कुल्या क्षुद्रनदी तां आयमानाः आगच्छन्त्यः करिण्यः यासु ताभिः' इति कश्चित् । पक्षे 'कुल्यान् वंश्यान्पूर्वपुरुषान् अयमाना प्राप्नुवती करिणी अभिप्रायः यासां ताभिः तथोक्ताभिः । करिणी हस्तिपिप्पल्यामभिप्रायगजस्त्रियोः । इति भागुरिः ।' इति संप्रदायागतं व्याख्यानम् । 'कुल्याः कुलभवाः । आयः आयतिः । मानः पूजा गर्वो वा । करो राजदेयो भागः ।

शिखरगतमुक्ताजालव्याजेन पुरयुवतिदर्शनागतं तारागणमिवोद्वहद्भिरुपान्तनिलीनाभिः काचकलशाकृतिमुद्वहन्तीभिः शिखण्डिसंहतिभिरुद्भासितैः प्रासादैरुपशोभमानम्, क्वचिदनवरतदह्यमानकृष्णागरुधूमपटलैर्दर्शिताकालजलदसंनाहम्, क्वचिद्गम्भीरमुरजरवाहूतसमदनीलकण्ठम्, सायन्तनसमयमिव

एतैर्युक्ताः' इति कश्चित्। अपत्याधिकारे 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति सूत्रेण कुलशब्दात् यत्प्रत्ययः। 'कुल्यापमानकारिणीभिः' इति पाठं स्वीकृत्य 'कुल्यस्य कुले साधोः तत्र साधुरिति यत्। तस्य अपमानकारिणीभिः। पित्रादेरमात्यादयः शिशुत्वान्नव्यत्वाद्वा नैनमातिमन्वत इति तेषामपमानः।' इति शिवरामः। **मुक्ताजालं** मौक्तिकसमूहः। 'शिखरगतानां पक्षिप्रवेशवारणार्थमुपरिबद्धानां मुक्ताजालानां मुक्तामयानामानायानां व्याजेन। 'आनायः पुंसि जालं स्यादित्यमरः।' इति शिवरामः। **ताराः** नक्षत्राणि। **उपान्तेति**। उपान्ते अग्रभागे निकटे वा निलीनाभिः निभृतमवस्थिताभिः। अत एवोत्प्रेक्षते— **काचेति**। काचो नाम नीलवर्णो मृद्विशेषः। 'काचाः शिक्यमृद्भेददृग्रुजः।' इत्यमरः। तेन कृतानां कलशानां घटानां आकृतिं उद्वहन्तीभिः काचकलशत्वेन संभाव्यमानाभिरित्यर्थः। **शिखण्डिनः** मयूराः। संहतयः वृन्दानि। 'शिखिसंहतिभिः' इति पाठान्तरम्। **प्रासादैः** सौधैः। **क्वचिदिति**। दह्यमानाः धूप्यमानाः। 'कृष्णागरुधूपमण्डलैः' इति पाठान्तरम्। धूपशब्दो व्याख्यातः। **जलदसंनाहः** मेघाडम्बरः। 'जलदोदयम्' इति पाठान्तरम्। 'जलधरसनाथमिव कृष्णागरुधूमपटलैः' इति राजकुलवर्णने कादम्बरी। **गम्भीरेति**। गम्भीरः मन्द्रः यः

पतितलोकलोचनम्, जनकयज्ञस्थानमिव दारोत्सुकरामम्, मानुषमिवाभिनन्दितसुरतम्, अरण्यमिवानेकसालशोभितम्,

---

मुरजरवः मृदङ्गध्वनिः तेन आहूताः आकारिताः स्तनितभ्रान्त्या स्वयमागता इत्यर्थः, तादृशाः समदाः नीलकण्ठाः मयूराः यस्मिन् तत् तथोक्तम्। 'सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासात्—' इति, 'जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य।' इति च भवभूतिकालिदासौ। 'रवाहूतसानन्दनर्तित' इति पाठं स्वीकृत्य 'रात्रौ मयूरनृत्यवर्णनं तिर्यञ्चोऽपि सर्वकालं सुखिनो मनुष्याणां तु का कथेति ध्वनयितुम्।' इति शिवरामः। 'मयूरो बर्हिणो बर्ही नीलकण्ठः' इत्यमरः। **पतितेति**। पतितानि सौन्दर्यावलोकनाय तत्र संबद्धानि लोकानां जनानां लोचनानि दृष्टयः यस्मिंस्तत् तादृशम्। पक्षे लोकलोचनं जगच्चक्षुः सूर्यः, सः पतितः अस्तमये आकाशादधश्च्युतः यस्मिंस्तं तादृशम्। विभक्त्यन्तस्य वैरूप्याभावाल्लिङ्गभेदेऽपि न वैरस्यमुपमायाः। 'लोकस्तु भुवने जने।' इत्यमरः। **जनकः** मिथिलाधिपः सीतायाः पिता। यज्ञस्थानं यज्ञवाटः। 'जनस्थानमिव' इति पाठान्तरम्। **दारेति**। दाराः जाराः। उदीच्यानां दजयोरभेदः। तेषु उत्सुकाः साभिलाषाः रामाः सुन्दर्यः यस्मिंस्तत् तादृशमिति सांप्रदायिकाः। पक्षे दारेषु भार्यायां सीतायाः भार्यात्वेन स्वीकरणे इति यावत् उत्सुकः रामः दाशरथिः यत्र तत् तथोक्तम्। केचित्तु 'दारत्वेन अभिलषितस्त्रीजनम्' इति व्याचक्षते (!) शिवरामस्तु, 'पक्षे दारयतीति दारः कन्दर्पः तेनोत्सुकाः रामाः स्त्रियः यत्र' इति व्याख्याति। 'रामा योषा हिङ्गुनद्योः क्लीबं वास्तूककुष्ठयोः। ना राघवे च वरुणे' इति मेदिनी। **सुरतं** निधुवनम्। पक्षे सुरता देवत्वम्। 'सुरतं स्यान्निधुवने देवत्वे सुरता मता' इति मेदिनी। 'मानुष्यकमिव' इति पाठान्तरे तु,

निधानमिव कौतुकस्य, आस्थानमिव शृङ्गारस्य, कुलगृहमिव सकलविभ्रमाणाम्, संकेतस्थानमिव सौन्दर्यस्य, वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श ॥

भद्रे द्रवसि द्रवसिद्धेरगदिता। चपला च पलायते किमेषा।

---

मानुष्यकं मनुष्यसमूहः । 'गोत्रोक्षोष्ट्र—' इति समूहार्थे वुञिति व्याख्येयम् । **अनेकेति** । सालाः पादपाः । उभयत्र तुल्यमिदम् । यद्वा भवनपक्षे सालः प्राकारः । अरण्यपक्षे सर्जकतरवो वा । 'सालः पादपमात्रे स्यात्प्राकारे सर्जपादपे ।' इति मेदिनी । क्वचिदिदं विशेषणं न दृश्यते । **निधानं** निधिः । **आस्थानं** राजसभा । एतेन शृङ्गारस्य राजत्वं गम्यते । **शृङ्गारस्य** प्रथमरसस्य । 'पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा । स शृङ्गार इति ख्यातो रतिक्रीडादिकारणम् ।' इति त्वमरटीकायां भरतः । **कुलगृहं** वंशपरम्परयागतं गृहम् । **विभ्रमाणां** विलासानाम् । 'क्रोधः स्मितं च कुसुमाभरणादियाच्ञा तद्वर्जनं च सहसैव विमण्डनं च । आक्षिप्य कान्तवचनं लपनं सखीभिर्निष्कारणोत्थितगतं वद विभ्रमं तत् ।' इत्यालङ्कारिकाः । 'कामौत्सुक्यकृताकारं रूपयौवनसंपदा । अनवस्थितचेष्टत्वं विभ्रमः परिकीर्तितः । इति भरतः ।' इति शिवरामः ।

**भद्रे इति** । एतदारभ्य प्रवालकाननमित्यन्तं प्रमदाजनानामन्योन्यसंभाषणम् । वाक्यानि च प्रायेण भिन्नभिन्नविषयाणि, न अनुस्यूततया उक्तिप्रत्युक्तिरूपाणि । क्वचित्तु तथापि भवति । इति प्रमदाजनानां आलापकथाः शृण्वन् कन्दर्पकेतुः मकरन्देन समं तद्भवनं प्राविशदिति संबन्धः । हे भद्रे मङ्गलसहिते । (त्वम्) अगदिता अनुक्तापि । द्रवसिद्धेः केलिलाभात् । 'द्रवकेलिपरीहासाः' इत्यमरः । द्रवसि धावसि । 'द्रव-

स्तवकस्तव कर्णतः पतितोऽयम् । सुरेखे सुकपोलरेखे सुरया

---

सिद्धये' इति क्वचित्पाठः । केचित्तु अगदितेत्यस्य उत्तरवाक्ये संबन्धमिच्छन्ति । शिवरामस्तु 'द्रवसि द्रवसिद्धितो निगलिते' इति पाठं स्वीकृत्य द्रवसिद्धितः नर्मसिद्धितः । सार्वविभक्तिकस्तसिः । निगलिते डलयोरैक्यान्निगडिते द्रवसि । बद्धस्य गमनप्रयास उपहासाय अफलत्वादिति काचिदुपहसति । यद्वा मया प्रेम्णा बद्धासि त्वं मां परित्यज्य यासीत्युपालम्भः । यद्वा निगलिते एतदभिधाने द्रवसिद्धितो द्रावकौषधिविशेषात् द्रवसि । यद्यप्यष्टगुणः स्मरो निगदितः पुंसोऽङ्गनानां सदा नो याति द्रवतां तथापि झटिति व्यायामिता संगमे । तत्स्याद्भेषजसंप्रयोगविधिना संक्षेपतो द्रावणमिति रन्तिदेवः' इति व्याकरोति । **चपलेति** । एतच्चैकां प्रत्यपरस्या वचनम् । एवमेव प्रायेणोत्तरत्रापि । एषा चपला तदभिधाना च । किं किमर्थम् । पलायते धावति । यद्वा, चपलायते तटिदिव आचरति क्षणदृष्टनष्टा भवतीत्यर्थः । विद्युद्वाचकाचपलाशब्दात् 'कर्तुः क्यङ्—' इति आचारार्थे क्यङ् । एषा च चपला चञ्चला सती किं पलायते इति वा । यद्वा चपला पुंश्चली सती । पलायत इत्यत्र 'उपसर्गस्यायतौ' इति लत्वम् । 'चपला कलमाविद्युत्पुंश्चलीपिप्पिलीषु च । नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले ।' इति मेदिनी । 'यद्वा चपलेव पिप्पिलीवाचरति । इयमेवौषधिः । सर्वथा द्रवसीति भावः ।' इति शिवरामः । **स्तवक इति** । इदमेकस्या अन्यां प्रत्युक्तिः । (अयि) तव कर्णतः श्रोत्रात् । अयं स्तवकः वबयोरभेदात् स्तबकः गुच्छः । पतितः । यमकानुरोधेन वकारप्रयोगः । **सुरेखे इति** । शोभना कपोलरेखा गण्डपालिः यस्यास्तस्याः संबोधनं सुकपोलरेखे इति । सुरेखे इत्यस्य विशेषणमिदम् । सुरेखेति कस्याश्चिन्नाम । हे सुकपोलरेखे सुरेखे । शोभनः

सुरयाचिता श्रीस्त्वमसि । मत्ते कलहे कलहेमकाञ्चीदामक-
णितैः स्मरमिवाह्वयसि । मलये मलयेप्सितं कुरु दृशैवा-

---

रयः वेगः यस्याः सा सुरया अतिवेगवती । सुरया मदिरया । मदिरावाचिनः सुराशब्दात्तृतीयायां सुरयेति रूपम् । आचिता व्याप्ता, मद्यसेविनीत्यर्थः । किंच, सुरयाचिता सुरैः देवैरपि याचिता प्रार्थिता । त्वदीयं सौन्दर्यं दृष्ट्वा सुरा अपि त्वयि मुह्यन्तीति भावः । त्वम् । श्रीः शोभा । असि । शोभातिशयद्योतनाय 'रूपं पुराणो मुनिः' इत्यादाविव धर्मेण धर्मिणो निर्देशः । किंच श्रीः लक्ष्मीः, असि । यतः, सापि सुरया वारुण्या सह संभूता । विनापि सहशब्दं तदर्थप्रतीतिः । सुरेण श्रीमता नारायणेन याचिता । रूपकश्लेषकाव्यलिङ्गानि । 'सुरया चिता सुरयाचितश्रीस्त्वमसि मत्ता' इति पाठमभ्युपगम्य 'एनामेवोपहसति– सुरैर्देवैर्याचिता । अर्थाद्ब्रह्मण उचिता (?) योग्या श्रीः सौन्दर्यश्रीर्यस्यास्तादृशी त्वं सुरया मदिरया चिता व्याप्ता तादृशी सती मत्तासि ' इति शिवरामः । **मत्ते इति** । मत्ते हे कलहे । कलानि अव्यक्तमधुराणि यानि हेमकाञ्चीदामक्वणितानि सुवर्णमयमेखलागुणध्वनयः तैः । स्मरं आह्वयसि इव । कलहे रतिकलहविषये तदर्थमित्यर्थ इति वा । 'पत्यतिरिक्तपुरुषाह्वानोत्प्रेक्षणमुपहासाय ।' इति शिवरामः । **मलये इति** । हे मलये । मलये मलयपर्वते ईप्सितं अभिलषितं वस्तु चन्दनमित्यर्थः । दृशैव । अधिगता असि । चन्दनवत्तापहारिणी ते दृष्टिरिति भावः । यद्वा अमलया निर्मलया । दृशा एव । ईप्सितं मनोरथम् । अधिगता प्राप्ता । असि । कुरु यथाभिलषितं समाचर । तव कटाक्षपातेनैव युवानो वशीकृता भविष्यन्तीति यथेष्टमाचरेति भावः । यद्वा, हे मलये ईप्सितं कुरु । अमलया दृशैव । अधिगता विदिता ज्ञाताभिप्रायेत्यर्थः । त्वं यथेष्टमाचर । किमर्थं निह्नोतुं प्रवर्तसे । त्वया

धिगतासि । कलिके कलिकेतुमिमां मुखरां मुञ्च मेखलाम्; शृणुमः कलवल्लकीविरुतम् । मेखला मे खला न

---

क्रियमाणेन सानुरागकटाक्षवीक्षणेनैव त्वदीयोऽयमान्तरोऽभिप्रायो विदित एव मयेति भावः । 'ईप्सितं प्रियतमं अधिगतासि । दर्शनेनैव कथयसीत्यर्थः ।' इति केचित् । शिवरामस्तु, 'मे शिवे लयो नाशो यस्य मलयः कामः तद्वत् ईप्सितं हृद्यं दृशैवाधिगतासि । त्वं पुरुषं कटाक्षैरामन्त्रयसीति भावः । अभीष्टेऽपीप्सितं हृद्यमित्यमरः । यद्वा मः शिवो लयो गृहं यस्य मलयः चन्द्रमाः तस्येप्सितं हरिणः तं दृशैवाधिगतासि । मृगलोचनासीति भावः । मः शिवश्चन्द्रमा वेधा इत्यनेकार्थध्वनिमञ्जरी' इति शिवरामः । **कलिके इति** । हे कलिके । कलेः मन्मथयुद्धस्य केतुं ध्वजम्, स्वशब्देन रतिकलहसूचिकामित्यर्थः । 'कलिः स्त्री कलिकायां ना शराजिकलहे युगे' इति मेदिनी । मुखरां शब्दायमानाम् । मेखलां काञ्चीम् । मुञ्च अपनय । कलं वल्लकीविरुतं वीणाध्वनिम् । शृणुमः आकर्णयामः । त्वन्मणितरणिताकर्णने परमुत्कण्ठितास्मि; यतश्च मेखलाध्वनिस्तत्र प्रतिबध्नाति, अतस्तां मेखलामपनयेति साकूतमिदं सखीसंभाषणम् । **मेखलेति** । इदं तथा साकूतमभिहितायाः प्रतिवचनम् । (अयि सखि) मे । मेखला । खला पिशुना । न भवति । (परं तु) त्वमेव । मुखरतया वाचालतया । खरतया क्रूरतया च । खला, भवसीति शेषः । 'मुखरतया मुखरतया च' इति पाठं स्वीकृत्य, 'मुखेन प्रेष्ठेन रतं यातीति मुखरतयाः । यद्वा मुखेन वात्स्यायनाद्युक्तोपायेन रतं यातीति मुखरतयाः । मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोरिति हैमः ।' इति शिवरामः । 'कलिके कलिकेतुमिदं शृणुमः कलवल्लकीविरुतम्' इति, 'मेखले मेखलेव त्वमेव भासि मुखरतया खरतया च ।' इति चैकस्मिन्कोशे पाठो दृश्यते । स्पष्ट एवार्थः । **त्रपत इति** ।

**भवति, त्वमेव मुखरतया खरतया च। त्रपतेऽत्र पतेयमिति नागकुसुमोपहारेषु स्खलन्तीयम्। तव कैतवकैरलम्; कलिलो निश्वासैर्वेपथुरेवाशयं व्यनक्ति। वहतीव हतीरनङ्गलेखे तव वपुः स्मरसायकानाम्। तव च हारलता पिहितापि हि तायते।**

---

इदमेकस्या वचनम्। इयं पुरोवर्तिनी। नागकुसुमोपहारेषु बल्यर्थं प्रकीर्णेषु नागाख्यतरुविशेषपुष्पेषु। स्खलन्ती सती। अत्र पतेयम्, इति। त्रपते लज्जते। 'त्रपतेऽत्र पतेदियमवन्तिसेना कुसुमोपहारे मुग्धा' इति पाठानुरोधेन 'मुग्धा इयमवन्तिसेना त्रपते लज्जते। अत्र कुसुमोपहारे। पतेत् संभावनायां लिङ्।' इति शिवरामः। **तवेति**। तव कैतवकैः आकारगोपनप्रयासकपटैः। अलं, तादृशानि कैतवकानि न क्रियन्तामित्यर्थः। निश्वासैः। कलिलः गहनः तत्सहितः इत्यर्थः। 'कलिलं गहनं समे।' इत्यमरः। वेपथुः कम्प एव। तव आशयं अभिप्रायम्। व्यनक्ति प्रकाशयति। निश्वासवेपथू सात्त्विकभावौ। तथा चोच्यते 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः।' इति। **वहतीति**। हे अनङ्गलेखे। तव। वपुः शरीरम्। स्मरसायकानां मदनबाणानाम्। हतीः प्रहारान्। वहति धारयतीव। त्वद्दर्शने तथा भातीति भावः। **तवेति**। सुरतकाले त्रुटितं कथंचिदेकया वस्त्राच्छादनेन तिरोधीयमानं मुक्तासरं विलोकितवत्या अपरस्याः सखीं तां प्रति सपरिहासमिदं वचनम्। (हे सखि) तव। हारलता मुक्ताहारः। पिहिता त्वया कथंचिद्वस्त्रेणाच्छादिता सत्यपि। तायते स्वयं विस्तृता भवति बहिः प्रकटा भवतीत्यर्थः। 'तनु विस्तारे।' तनोतेः कर्मकर्तरि यकि 'तनोतेर्विभाषा' इत्यात्वम्। यद्वा तनोतेः कर्मण्येव यक्। पिहितापि तव हारलता ससंभ्रमं गच्छन्त्या त्वयैव गमन-

उत्कलिके तवोत्कलिकाबहुले वदने वद नेत्रपयोजकान्ते किमुपमानमिन्दुरप्यायाति । वसतीव सतीव्रते तव हृदि

---

संभ्रमेण वस्त्रस्य विगलनात् प्रकाश्यत इत्यर्थः । हिः वाक्यपूरणे खल्वर्थे वा । यद्वा त्वया पिहितापि आच्छादितापि । तिरस्कृतापीति च । तायते तत्र तत्र नखक्षतगोपनेन त्वां रक्षतीत्यर्थः । 'तायृ संतानपालनयोः ।' 'विहिता विहितायते' इति पाठमभ्युपगम्य, 'तव विहिता तवैव कृता हारलता विहितायते युक्ता भवति । विहितं युक्तकर्मणोरिति वैजयन्ती' इति क्वचन कोशे टिप्पणी दृश्यते । एनमेव पाठं स्वीकृत्य, 'विहितायते विस्तारा भवतीति संबन्धः' इति कश्चित् (?) 'तव वपुरलसं पिहितापि हितायत उत्कलिकामहोर्मिः' इति शिवरामपाठः । **उत्कलिके इति** । हे उत्कलिके । उत्कलिका उत्कण्ठा । कान्तं रम्यम् । इन्दुरपि । उपमानं आयाति किं, उपमानतया चन्द्रोऽपि नायातीत्यर्थः । चन्द्रातिशायि तव मुखमिति भावः । वद कथय । उपयातीति पाठे, उपमानं उपमानतामित्यर्थो बोध्यः । शिवरामस्तु, अपिं उपमानपदेन संयोज्य, 'किं इन्दुः उपमानमपि यानीति वद । पूर्वं त्वन्मुखमुपमानम् । इदानीमिन्दुरुपमानमपि यातीति संभावनं मुखे विरहातिशयात्पाण्डुत्वाधिक्यद्योतनाय' इति विलिखति । **वसतीति** । सत्याः पतिव्रतायाः व्रतं यस्याः सा सतीव्रता । हे सतीव्रते । यद्वा तीव्रतया सहितं सतीव्रतं तस्मिन्निति हृदीत्यस्य विशेषणम् । त्वं कमपि मनसि चिन्तयन्तीव भासीति सपरिहासमिदमेकस्या वचनम् । **शतधेति** । एवमुक्तायास्तस्या निष्ठुरमिदं प्रतिवचनम् । शतं धाराः कोटयः यस्य सः शतधारः अशनिः तस्येव सारः दार्ढ्यं यासां ताः शतधारसाराः वज्रदुःसहा इत्यर्थः । तव वाचः । शतधा शतेन प्रकारैः । अनुभूताः ।

कोऽपि । शतधा शतधारसारा वाचस्तवानुभूताः । केरलिके करकाकरकालमेघखण्डतुलामुपयात्युल्लसितोत्फुल्लमल्लिकामाल-भारी तव कुन्तलकलापः । कुन्तलिके कुन्तलालंकृते न च पुरगोपुरगोचराः श्रूयन्ते संगीतध्वनयः । किमिव कलयसि क्षणमीक्षणमीलनात् । अपि चटुलं चटुलम्पटं सखीजनमायासयसि । सुरते सुरते स्तनता स्तनताडनेषु यत्सौख्यं लब्धं

---

सर्वदापि त्वमेतादृशी दुःसहा वाच एव वदसि, अतो नेयं ते वागपूर्वा-ममेति त्वं यथेच्छं यत्किंचित्प्रलपेति भावः। 'धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ ।' इति हैमः । 'शतधारं शतारं च' इति वज्रपर्याये त्रि-काण्डशेषः । **केरलिके इति** । हे केरलिके । उल्लसितां शोभमानां उत्फुल्लां विकसितां च मल्लिकामालां बिभर्तीति तादृशः । 'इष्टकेषीका—' इति मालाशब्दस्य ह्रस्वः । 'मालागन्धहारी' इति पाठान्तरम् । तव कुन्तलकलापः केशपाशः । करकाणां वर्षोपलानां आकरः यः कालमेघ-खण्डः तस्य तुलां सादृश्यम् । उपयाति । 'वर्षोपलस्तु करका' इत्यमरः । 'केरलिके के रलिते' इति पाठमनुसृत्य 'के शिरसि रलिते ललिते । रलयोरभेदः । हे केरलिके' इति केचित् । गोपुरं पुरद्वारम् । पुरद्वारं तु गोपुरम्' इत्यमरः । शिवरामपाठे 'न च' इत्येतन्नास्ति । **किमि-वेति** । इदमेकस्या वाक्यम् । (अयि) क्षणम् । अत्यन्तसंयोगे द्वितीया । ईक्षणमीलनात् नयने निमील्येत्यर्थः । किं कलयसि किं वा विचारयसि । 'कल्पयसि' इत्यपि पाठः । **अपीति** । (त्वम्) चटुलं समर्थं सुन्दरं वा । चटुषु प्रियवाक्येषु लम्पटं आसक्तमपि । सखीजनम् । आयासयसि क्लेशयसि । अनुरक्ते सखीजने नैतन्न्याय्यमिति भावः । **सुरते इति** ।

स्मरता स्मरतापनोदनं तत्केन वियुक्तासि । किं मुह्यसि महतो महतो दयितः स्मरति स्म रतिप्रियं तव कौशलम् । नवनिशानखराणां नखराणां स्मरजन्यां स्म रजन्यां कुरुते कुरुतेन

हे सुरते । सुरते रतौ । स्तनताडनेषु कुचमर्दनेषु आलिङ्गनेषु वा । स्मरतापं नोदयतीति तादृशं यत् सौख्यं लब्धम् । तत् स्मरता चिन्तयता । स्तनता मणितशब्दं कुर्वता संकेतदानाय पक्ष्यादिशब्दं कुर्वता वा । केन पुरुषेण । वियुक्ता असि । 'ष्टन वन शब्दे' भ्वादिः । **किमिति** । पत्युनागमनेन ताम्यन्तीं प्रत्येकस्या आश्वासनोक्तिरियम् । महतः बृहतः महतः उत्सवात् । ल्यब्लोपे पञ्चमीयम् । महान्तमप्यन्यमुत्सवं विहायेत्यर्थः । महशब्दात्तस् । 'मह उद्धव उत्सवः ।' इत्यमरः । रतिप्रियं क्रीडानुकूलम् । तव । कौशलं सुरतचातुर्यम् । दयितः तव पतिः । स्मरति स्म सस्मार । किं मुह्यसि । योऽयं तव सुरतचातुर्यमनुस्मृत्य महतोऽप्युत्सवानन्यान्विहाय त्वत्समीपमागतः, सोऽयमवश्यमेवागमिष्यति । मा मोहं गच्छेति भावः । **नवेति** । आश्वासयन्त्या एव वचनमिदम् । तव रतिकौशलं स्मृत्वा समागतः तव पतिः । स्मरस्य जनिः उत्पत्तिः यस्यां तस्यां तथोक्तायाम्, कामोद्दीपिकायामित्यर्थः । रजन्यां रात्रौ । 'स्मरं जनयतीति स्मरजनी कामोद्दीपिका तस्याम् । कर्मण्यणि 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः' इति शिवरामः । नवं नूतनं यत् निशानं तेजनं तीक्ष्णीकरणं तेन खराणां क्रूराणां निशितानामित्यर्थः । नखराणां नखानाम् । कुरुतेन ईषच्छब्देन अव्यक्तशब्देनेति यावत् । कु इति ईषदर्थकमव्ययम् । 'कु पापे चेषदर्थे च कुत्सायां च निवारणे ।' इति मेदिनी । रुजं मदनपीडाम् । कुरुते स्म चकार, कामतन्त्रोक्तरीत्या प्रतिस्थानं नखविलेखनस्य करणे तद्ध्वनिश्रवणस्यापि कामोद्दीपकत्वादिति भावः । तादृशः

रुजम् । तव लोचनाभ्यां लोचनाभ्यां फलिताखिलजनेक्षणदेशः क्षणदेशः किं न पीयते । प्रियसखि मदनमालिनि मालिनि

---

कथं त्वामुपेक्षेतेति पूर्ववाक्यशेषोऽयम् । यद्वा स्मरजन्यामिति द्वितीयान्तं रुजमित्यस्य विशेषणम् । 'एतेन सुप्तनायिकोत्थानं तीक्ष्णनखाभिघातेनेत्याह' इति भावार्थं विलिखति कश्चित् । 'नखराणां व्रणः' इति 'रुजं किम्' इति च शिवरामपाठः । कुरुते इति कस्याश्चित्संबोधनमित्यभिप्रायेण, हे कुरुते तादृशानां नखानां व्रणः रुजं न कुरुते स्म किम्' इति तदीया व्याख्या । **तवेति** । चिन्तापरवशां चन्द्रमप्यनालोकयन्तीं कांचित्प्रत्यपरस्या वचनमिदम् । (हे सखि) फलितः सफलीभूतः अखिलजनानां ईक्षणदेशः नयनप्रदेशः येन सः तादृशः, चन्द्रदर्शनेनैव सर्वेषामपि नयननिर्माणसाफल्यमिति भावः । क्षणदायाः रात्रेः ईशः पतिः चन्द्रः । लोचनाभ्यां सम्यग्दर्शकाभ्याम् । तव । लोचनाभ्यां नेत्राभ्याम् । किं न पीयते कुतो न दृश्यत इत्यर्थः । सम्यग्दर्शनं च नेत्रैः पानमित्युच्यते । तथा च श्रीमति रामायणे 'अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव ।' इति । लोचनाभ्यां लोचनाभ्यामित्यत्र विध्यलंकारः । सिद्धस्यैव विधानं यत्तामाहुर्विध्यलंक्रियाम् । लोचनयोर्लोचन (त्व) विधानं चन्द्रदर्शनेन साफल्यद्योतनाय' इति शिवरामः । एतद्वाक्यमुत्तरवाक्यं च कलिकातामुद्रितपुस्तके अन्यथैव दृश्यते । तत्र योजितं शिवरामव्याख्यानं तु न ज्ञायते । **प्रियसखीति** । भ्रमरबाधया क्लिश्नतीं सखीं प्रति, लतासादृश्यात्त्वयि भ्रान्तो भ्रमरः पततीति सप्रशंसमभिदधानाया एकस्या वचनमिदम् । प्रियसखि हे मदनमालिनि । बिम्बवत् बिम्बफलवत् विद्यमानः अधरः बिम्बाधरः पक्वबिम्बफलवदारक्तः अधरोष्ठ इत्यर्थः । तत्र सङ्गः संबन्धः पतनमिति यावत् तस्य त्यागः विरहः तदिच्छया, न पततु भ्रमरोऽय-

बिम्बाधरसङ्गत्यागेच्छया विरागं कुरु । मधुमदारुणमालवीकपोलकोमललोलदलमण्डलतया लतया को विशेषस्तव । कुरङ्गिके कल्पय कुरङ्गशावकेभ्यः शष्पाङ्कुरम् । किशोरिके कारय किशोरप्रत्यवेक्षाम् । तरलिके तरलय कृष्णागरुधूपपटलम् । कर्पूरिके

---

मित्याशयेनेत्यर्थः । अलिनि भृङ्गे । विरागं विद्वेषम् । मा कुरु । नात्र तस्यापराधो लताभ्रान्तस्य । परं तु लतासदृशी त्वमेवापराध्यसीत्याह—मधुमदेति । मधुमदेन अरुणः यः मालवीकपोलः तद्वत् कोमलं मनोहरं मार्दवरक्तिमादिविशिष्टमित्यर्थः, तादृशं लोलं चञ्चलं च दलमण्डलं किसलयसमूहः यस्याः सा मधुमदारुणमालवीकपोलकोमलदलमण्डला, तस्या भावेन । (उपलक्षितया) लतया वल्ल्या सह । तव को विशेषः न कोऽपि भेद इत्यर्थः । अत एव भ्रमरः पततीति भावः । कोमलदलमण्डलया इत्येव सर्वसामञ्जस्ये भावपर्यन्तानुधावनम् 'मण्डलतया लतया' इति यमकानुवर्तनाय । नायिकायां च दलप्रतिबिम्बान्यङ्गुलय इति बोध्यम् । तथा च माघः 'तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः ।' इति । 'एष वातेरितपल्लवाङ्गुलीभिः' इति कालिदासश्च । 'यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति' इति 'बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियायाः' इति च शाकुन्तलम् । 'को विशेषस्त्वया' इति पाठान्तरम् (?) **कुरङ्गिके इति** । कुरङ्गिकाकिशोरिका प्रभृतीनि एकैकस्या नामानि । कुरङ्गशावकेभ्यः हरिणशिशुभ्यः । शष्पाणि बालतृणानि । अङ्कुरः अभिनवोद्भित् । 'पृथुकः शावकः शिशुः ।' 'अङ्कुरोऽभिनवोद्भिदि ।' 'शष्पं बालतृणं घासः' इति त्रिष्वपि अमरः । **किशोरेति** । किशोरस्य अश्वबालकस्य प्रत्यवेक्षां श्रद्धायोगम् । 'किशोरस्तुरगार्भकः' इति बाणः । **तरलय** चञ्चलं कुरु संचारयेत्यर्थः ।

पाण्डुरय कर्पूरधूलिभिः पयोधरभारम्। मातङ्गिके मानय मातङ्गशिशुधावनम्। शशिलेखे विलिख ललाटपट्टे शशिलेखाम्। केतकिके संकेतय केतकीमण्टपदोहदम्। शकुनिके देहि क्रीडाशकुनिभ्य आहारम्। मदनमञ्जरि मञ्जीरय लतामण्डपम्। क-

---

**पयोधरभारं** स्तनाभोगम्। **पाण्डुरय** पाण्डुरं धवलं कुरु। 'पांसुलय इति पाठे पांसुलं धूलिसहितं कुर्वित्यर्थः। **मातङ्गिके इति**। हे मातङ्गिके। मातङ्गशिशोः गजपोतकस्य धावनं पलायनम्। मानय संभावय, धावन्तं गजबालकं त्वमनुधावेति भावः। 'मातङ्गः श्वपचे गजे' इति मेदिनी। 'मातङ्गशिशुयाचनाम्' इति क्वचित्पाठः। 'मानय अङ्गीकुरु। पुनः पुनः करचालनेन कुचौन्नत्यं कुम्भयोः प्रार्थयत इति भावः' इति तदा शिवरामः। **शशिलेखां** चन्द्रकलासदृशं तिलकविशेषम्। **विलिख** सिन्दुरादिभिर्विरचयेत्यर्थः। शशिलेखा नाम चन्द्रप्रभेति व्यवह्रियमाण आभरणविशेषः। विलिखेत्यस्य लम्बमानां कुर्वित्यर्थ इति केचित्। शिवरामस्तु, शशिलेखापदार्थमविलिख्य, 'शशिलेखां लिख स्मरविभीषिकार्थमिति भावः।' इति विलिखति। **केतकिके इति**। केतकीमण्डपस्य दोहदं फलपुष्पादिपुष्टिकरं कर्म। संकेतय लालय कुर्वित्यर्थः। 'संकेतनं लालनं च' इति वैजयन्ती। 'तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया।' इति शब्दार्णवः। 'दोहलम्' इति पाठान्तरम्। 'दोहलं श्रद्धाम्। संकेतय उत्पादय' इति कश्चित्। 'कर्पूरधूलीद्राक्षादिमधुपूरस्तु दोहलम्। इति वृक्षशास्त्रे' इति सांप्रदायिकाः। 'संकेतय जानीहि। कस्मैचिद्वद वा। दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भे इति हैमः।' इति शिवरामः। **देहि** प्रदिश। 'घ्वसोरेद्धौ—' इति एत्वाभ्यासलोपौ। **मञ्जीरय** चरणाभरणं कुरु

दलिके विदलय कदलीगृहम् । शृङ्गारमञ्जरि कल्पय शृङ्गाररचनाम् । संजीवनिके वितर जीवंजीवकमिथुनाय मरिचपल्लवम् । पल्लविके पल्लवय कर्पूरधूलिभिः कृत्रिमकेतकीकाननम् । सहकारमञ्जरि संमार्जय श्रमोदकबिन्दून्सहकारसौरभव्यजनवातेन । मदनलेखे विलिख मदनलेखं मलयानिलस्य । मकरिके मकराङ्कशोभिते देहि मृणालाङ्कुरं राजहंसशावेभ्यः । विलासवति विलासय मयूरकिशोरकम् । तमालिके लेपय मलयजर-

---

तत्र संचरेत्यर्थः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । **विदलय** उद्घाटय । **शृङ्गारः** आद्यो रसः, शृङ्गारं सिन्दूरं वा । 'शृङ्गारो गजमण्डने । सुरते रसभेदे च शृङ्गारं नागसंभवे ।' इति हैमः । **जीवंजीवकः** पक्षिविशेषः, यस्य मरिचपल्लवास्वादे प्रीतिः । चकोरक इत्यन्ये । **मरिचं** कोलकं 'मिळकु' इति द्राविडभाषायामुच्यमानः पदार्थविशेषः । **पल्लवय** अलंकुरु । **सहकारेति** । संमार्जय अपनय । सहकारस्य सौरभं सुगन्धः यस्मिन् तादृशेन व्यजनवातेन तालवृन्तपवनेन । 'संजनय सहकारसौरभं व्यजनवातेन' इति शिवरामपाठः । **मदनेति** । मलयानिल इति तत्प्रियतमस्य संज्ञा । मदनलेखं स्वकीयमन्मथावस्थासूचकं पत्रम् । प्रेयसे प्रियतमया प्रेष्यमाणो मदनावस्थानिवेदको लेखो मदनलेख इत्युच्यते । मलयानिलस्य दक्षिणमारुतस्य मदनलेख लिख । स्वावस्थां विनिवेद्य संतापकारिणं मलयानिलं सान्त्वयेति भाव इति केचित् । **मकराङ्कः** मीनध्वजः कामः । **विलासय** नर्तय । **किशोरकः** तरुणः । 'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः ।' इति मेदिनी । 'किशोरः एकादशवर्षावधि पञ्चदशवर्षपर्यन्तवयस्कः । कौमारं

सेन भवनवाटम् । काञ्चनिके विकिर कस्तूरिकाद्रवं काञ्चनमण्टपिकायाम् । प्रवालिके सेचय घुसृणरसेन प्रवालकाननम्, इत्यन्योन्यं प्रणयपेशलाः प्रमदाजनानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन समं तद्भवनं प्राविशत् ।

अकरोच्च मनसि— 'अहो भुवनातिशायि सौन्दर्यम् । अहो शृङ्गारकलाकेलिकौशलम् । असावपि कनकशलाकावि-

---

पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशाद्यौवनं च ततः परम् ।' इति श्रीधरस्वामी । **तमालिके इति** । लेपय लेपनं कारय । **मलयजरसेन** चन्दनद्रवेण । वाटः मार्गः, वाटं वरण्डो वा । 'वाटः पथि वृतौ वाटं वरण्डेऽङ्गान्नभेदयोः ।' इति हैमः । 'भवनवाटं गृहोद्यानम्' इति कश्चित् । 'परिमलय मलयजरसेन पुष्पवाटम्' इति पाठान्तरम् । **घुसृणं** कुङ्कुमम् । **प्रवालकाननं** विद्रुमवनम्, निबिडतया वनवदवस्थापितान्विद्रुमानित्यर्थः । 'कश्मीरजन्म घुसृणं वर्णं लोहितचन्दनम् ।' इत्यभिधानचिन्तामणिः । 'प्रवालानां प्रकृष्टकेशानां काननं समूहः' इति शिवरामः, कश्चिच्च । **पेशलाः** मनोहराः । 'चारौ दक्षे च पेशलः ।' इत्यमरः । **तद्भवनं** वासवदत्तागृहम् ।

**अकरोदिति** । मनसि अकरोत् अचिन्तयदित्यर्थः । इत्येवं चिन्तयन् सन् प्रविश्य एतादृशीं वासवदत्तां ददर्शेति संबन्धः । चिन्ताप्रकारमाह— अहो इत्यादिना । भुवनातिशायि लोकोत्तरम् । 'मकरन्देन सह विस्मयमकरोत् । (?) मनस्यहो भवनानामतिशायि सौन्दर्यम्' इति कलिकातामुद्रितपुस्तकपाठः । अहो इत्याश्चर्ये । **कौशलं** सामर्थ्यम् । 'शृङ्गारागारातिशायि कलाकौशलम्' इति क्वचित्पाठः । पञ्जरं पक्षिमृगादि-

निर्मितयन्त्रपञ्जरसंयतः क्रीडाशुकः' इत्यादि परिचिन्तयन्, प्रविश्य, व्याकरणेनेव सरक्तपादेन महाभारतेनेव सुपर्वणा रामायणेनेव सुन्दरकाण्डचारुणा जङ्घायुगलेन विराजमानाम्, छन्दोविचितिमिव भ्राजमानतनुमध्याम्, नक्षत्रविद्यामिव

---

बन्धनगृहम् । संयतः बद्धः । 'कौशलम् । तथाहि अयं तत्काललीलाबहलविरलविमलमालवीदशनकान्तिकान्तिदन्तिदन्तघटितो मण्डपः' इति कलिकातामुद्रितपाठः। **व्याकरणं** पाणिनीयम् । **सरक्तेति** । एतादृशेन जङ्घायुगलेन विराजमानामित्यन्वयः । रक्तः स्वभावाल्लाक्षारसाच्च अरुणः यः पादः चरणः तेन सहितेन । पक्षे रक्तपादः 'रक्तम्' इत्यर्थे प्रत्ययविधायकेन 'तेन रक्तं रागात्' इति सूत्रेण सहितः पाणिनीयाष्टके चतुर्थाध्यायस्य द्वितीयः पादः, तत्सहितेन। **पर्व** ग्रन्थिः, अवान्तरविच्छेदश्च । 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु । दर्शप्रतिपदोः संधौ स्यात्तिथेः पञ्चकान्तरे ।' इति धरणिः। **सुन्दरेति** । सुन्दरेण काण्डेन नालेन चारुणा । सुन्दरकाण्डवच्चारुणेति वा । पक्षे, सुन्दरकाण्डः सुप्रसिद्धः तेन चारुणा रमणीयेन । 'काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे ।' इति हैमः । **छन्दोविचितिः** उक्थादिछन्दःस्वरूपनिरूपको ग्रन्थविशेषः । अधिकं तु पूर्वमुक्तम् । **भ्राजमानेति** । भ्राजमानं शोभमानं तनु अल्पं मध्यं अवलग्नं यस्याः तां तादृशीम् । 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः। पक्षे तनुमध्या नाम गायत्रीच्छन्दसि वृत्तविशेषः। 'त्यौ चेत्तनुमध्या' इति तल्लक्षणम् । **नक्षत्रविद्या** नक्षत्रगत्यादिप्रतिपादकं शास्त्रं ज्योतिःशास्त्रमित्यर्थः । **गणनीयेति** । हस्तौ च श्रवणे च एतेषां समाहारः हस्तश्रव-

गणनीयहस्तश्रवणाम्, न्यायविद्यामिव उद्द्योतकरस्वरूपाम्, सत्कविकाव्यरचनामिव अलंकारप्रसाधिताम्, उपनिषदमिव सदानन्दाम्, रविप्रभामिव लोकमुद्द्योतयन्तीम्, द्विजकुल-

---

णम्। प्राण्यङ्गत्वादेकवद्भावः। गणनीयं चारुतया गणनार्हं हस्तश्रवणं यस्याः तां तथोक्ताम्। पक्षे, हस्त इति श्रवण इति च नक्षत्रविशेषौ। 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च। ऋक्षे' 'श्रवणं स्याच्छ्रुतौ कर्णे नक्षत्रे न नपुंसकम्।' इति मेदिनी। **न्यायविद्या** तर्कशास्त्रम्। 'न्यायस्थितिमिव' इति क्वचित्पाठः। **उद्द्योतेति**। उद्द्योतकरं प्रकाशकारि प्रकाशमानमिति यावत् तादृशं स्वरूपं अवयवः यस्याः तां तादृशीम्। पक्षे उद्द्योतकरो नाम न्यायवार्तिककारः तेन स्वरूपं स्थितिः यस्यास्तां तथोक्ताम्, बौद्धादिभिः खण्डितस्य न्यायमतस्य वार्तिककारेण स्थापितत्वादेवमुक्तिः। स्वरूपं ख्यातिरिति कश्चित्। 'उद्द्योतकर आचार्यो न्यायवार्तिककृत् तत्स्वरूपां तदात्मिकाम्। विद्यातद्वतोरभेदविवक्षात्र त्रिमुनि व्याकरणमितिवत्। भेदविवक्षायां तु उद्द्योतकरेण स्वरूपं यस्याः। उक्तानुक्तदुरुक्तचिन्ताकृता वार्तिककृता स्वरूपं यथाप्रतिपादितरूपं न तु खण्डितं भ्रष्टमित्यर्थः' इति शिवरामः। **सत्कवीति**। सन् काव्योत्पत्तिहेतुभूतशक्त्यादिविशिष्टतया प्रशस्तः यः कविः तस्य काव्यरचनां काव्यनिर्माणमिव। **अलंकारः** भूषणम्, पक्षे अनुप्रासोपमादिः। 'अलंकारः कङ्कणादिषु। उपमादौ' इति हैमः। 'बौद्धसंगतिमिवालंकारभूषिताम्' इति पाठमभ्युपगम्य, 'अलंकारो धर्मकीर्तिकृतो ग्रन्थविशेषः तेन भूषिताम्' इति शिवरामः। **उपनिषत्** वेदान्तभागः। **सदेति**। सदा सर्वकालेऽपि आनन्दः यस्यास्तां तादृशीम्। सन् आनन्दः यस्या इति वा। पक्षे सच्छब्दस्य ब्रह्मवाचक-

स्थितिमिव चारुचरणाम्, विन्ध्यगिरिश्रियमिव सुनितम्बाम्, तारामिव गुरुकलत्रतयोपशोभिताम्, शतकोटियष्टिमिव मुष्टिग्राह्यमध्याम्, प्रियङ्गुश्यामासखीमिव प्रियदर्शनाम्, ब्रह्मदत्तमहिषीमिव सोमप्रभाम्, दिग्गजकरेणुकामिव अनुपमाम्,

---

त्वात् सदानन्दः ब्रह्मानन्दः अस्यामस्तीति ताम् । 'सानन्दाम्' इति पाठान्तरम् । 'उपनिषदमिवानन्दमेकमुद्द्योतयन्तीम्' इति शिवरामपाठः । **लोकः** जनः, भुवनं च । **द्विजाः** ब्राह्मणाः । **चार्विति** । चारू मनोहरौ चरणौ पादौ यस्यास्तां तथोक्ताम् । पक्षे चरणं आचारः गोत्रं मूलं वा । 'चरणशब्दो वेदैकदेशवाची कठादिरूपः' इति दुर्गादासः । 'चरणाः बह्वृचाः' इति केचित् । 'चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।' इति मेदिनी । **नितम्बः** कटिपश्चाद्भागः, पर्वतकटकश्च । 'नितम्बः कटिरोधसोः । स्त्रियाः पश्चात्कटौ सानौ' इति हैमः । **तारामिवेति** । तारा नाम बृहस्पतिपत्नी । **गुर्विति** । गुरु बृहत् कलत्रं श्रोणिभागः यस्यास्तस्या भावेन गुरुकलत्रतया । पक्षे, गुरोः सुरगुरोः बृहस्पतेः कलत्रं भार्या तद्भावेन गुरुकलत्रतया । 'कलत्रं श्रोणिभार्ययोः' इति विश्वः । 'रोहिणीमिव' इति पाठमभ्युपगम्य, 'चन्द्रभार्यां रोहिणीं बृहस्पतिः परिगृहीतवानिति प्रसिद्धिः' इति कश्चित् (!) **शतकोटिः** वज्रम् । **मध्यं** मध्यभागः, अवलग्नं च । **प्रियङ्गुश्यामा** नरवाहनदत्तमहिषी । **प्रियेति** । प्रियं दर्शनं यस्याः तां प्रियदर्शनां नेत्रानन्दकारिणीमित्यर्थः । पक्षे, प्रियदर्शनेति सख्या नाम । **ब्रह्मेति** । ब्रह्मदत्त इति कश्चिद्राजा । **सोमेति** । सोमस्येव प्रभा कान्तिः यस्यास्तां तथोक्ताम् । पक्षे, सोमप्रभेति तस्याः संज्ञा । **दिग्गजेति** । दिग्गजस्य कुमुदाख्यस्य करेणुकां स्त्रियमिव । **अनुपमां** सादृश्यरहिताम्, पक्षे

रेवामिव नर्मदाम्, वेलामिव तमालपत्रप्रसाधिताम्, अश्वतरकन्यामिव मदालसां वासवदत्तां ददर्श ॥

अथ तां विस्फारितेन चक्षुषा पिबतः कन्दर्पकेतोर्जहार चेतनां मूर्च्छा । तमनुपश्यन्ती वासवदत्ता मुमूर्च्छ । अथ मकरन्दसखीजनप्रयत्नाल्लब्धसंज्ञावेतावेकासनमलंचक्रतुः ॥

---

तदभिख्याम् । 'करिण्योऽभ्रमुः कपिला पिङ्गलानुपमा क्रमात् ।' इत्यमरः । **रेवा** तदभिख्या काचिन्नदी । **नर्मदामिति** । नर्म क्रीडां ददातीति ताम् । पक्षे, रेवाया नर्मदेति संज्ञा । 'क्रीडा खेला च नर्म च' इत्यमरः । 'रेवेन्दुजा पूर्वगङ्गा नर्मदा मेखलाद्रिजा' इति हेमचन्द्रः । **वेला** समुद्रतीरम् । 'वेला काले च सीमायामब्धेः कूलविकारयोः' इति मेदिनी। **तमालेति** । तमालपत्रेण तिलकेन प्रसाधितां अलंकृताम् । पक्षे, तमालानां तापिञ्छवृक्षाणां पत्रैः दलैः प्रसाधिताम् । 'तमालपत्रतिलकचित्रकाणि विशेषकम् ।' इत्यमरः । **अश्वतरेति** । अश्वतर इति कश्चिद्विद्याधरराजः । **मदेति** । मदेन यौवनजन्येन अलसां सविलासमन्दगमनाम् । पक्षे मदालसेति तस्या नाम । **ददर्श** दृष्टवान् ।

**अथेति** । विस्फारितं विस्तारितं विकसितमिति यावत् । स्फुरतेर्ण्यन्तात्कर्मणि क्तः, 'चिस्फुरोर्णौ' इत्यात्वम् । 'विष्फारितेन' इति पाठे 'स्फुरतिस्फुलत्योः—' इति षत्वमिति व्याख्येयम् । चेतनां संज्ञाम् । **मूर्च्छा** वस्तुतत्त्वानवधारिणी चित्तवृत्तिः । 'मूर्च्छावेगः' इति पाठान्तरम् । **तमिति** । तं अनु कन्दर्पकेतुना सहेत्यर्थः । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वेन 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रेण द्वितीयेत्येके । 'अनुर्लक्षणे' इति कर्मप्रवचनीयतेति प्राचीनटिप्पणी । 'तदनु' इत्यपि पाठः ।

अथ वासवदत्तायाः प्राणेभ्योऽपि गरीयसी सर्वविस्रम्भपात्रं कलावती नाम सखी कन्दर्पकेतुमुवाच—"आर्यपुत्र नायं विस्रम्भकथानामवसरः । अतो लघुतरमेवाभिधीयते । त्वत्कृते यानया यातनानुभूता; सा, यदि नभः पत्रायते, सागरो मेलानन्दायते, ब्रह्मा लिपिकरायते, भुजगपतिर्वा कथकायते;

---

**अथेति** । प्राणेभ्यः असुभ्यः । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । **गरीयसी** गुरुतरा । **विस्रम्भपात्रं** विश्वासस्थानम् । **आर्येति** । 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन वा । इति भरतः' इति शिवरामः । 'एतत्पूजावचनम्' इति कश्चित् । 'आर्यपुत्रेति राजपुत्राणामभिधानम् । आर्यो ब्राह्मणकुमारयोः । राजा चेति निपातनात्' इति क्वचित् टिप्पणी दृश्यते (?) **विस्रम्भकथानां** सविश्वासमसंभ्रममवस्थाय कथनीयानां प्रेमालापानाम् । **अवसरः** कालः । **लघुतरं** अतिसंक्षिप्तम् । 'अभिधीयसे' इति क्वचित्पाठः । **त्वत्कृते** त्वन्निमित्तम् । तादर्थ्यार्थकस्य कृते इत्यव्ययस्य षष्ठ्यन्तेन युष्मच्छब्देन समासः । 'पूरणगुण—' इति षष्ठीसमासनिषेधस्तु कृदव्यय एव । 'यत्कृतेऽरीन्निगृह्णीमः' इति भट्टिः । **यातना** तीव्रवेदना । 'यातना तीव्रवेदना' इत्यमरः । **नभः** आकाशम् । **पत्रायते** पत्रवत् आचरति पत्रं भवतीति यावत् । 'कर्तुः क्यङ्—' इति क्यङ् । 'उपमानादाचारे इति क्यङ्' इति शिवरामस्तु भ्रान्तः । मेलानन्दा मसीपात्रं सेवाचरति मेलानन्दायते । 'मेलानन्दा मसिमणिर्मसिधानी मसिप्रसूः ।' इति हारावली । 'मेलानन्दो मसीपात्रम् इति हारावली' इति शिवरामः । 'मेलानन्दो मषीघटी । मेलाम्बु मलिनाम्बु च, इति कोशः' इति कश्चित् । लिपिकरः लेखकः स इवा-

तदा किमपि कथमप्यनेकैर्युगसहस्रैरभिलिख्यते कथ्यते वा। त्वया च राज्यमुज्झितम् । किं बहुना— आत्मास्याः संकटे समारोपितः; यैषास्मत्स्वामिदुहिता प्रभातायां शर्वर्यां पित्रा यौवनातिक्रमदोषशङ्किना हठेन विद्याधरचक्रवर्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति निश्चिता । अनया चार्ययास्माभिः सह संमन्त्र्यालोचितम्—'अद्य यदि तं जनमादाय नागच्छति तमालिका, तदावश्यमेवाश्रयाश

---

चरति **लिपिकरायते**। लिपावुपपदे 'दिवा विभा—' इति कृञः टप्रत्ययः। बाहुनेकत्वेन सामर्थ्यातिशयेन च ब्रह्मणस्तथात्ववर्णनम् । कथकः वक्ता स इवाचरति कथकायते । शेषस्य रसनासहस्रद्वयवत्तया तथोक्तिः । 'ब्रह्मायते लिपिकरः । भुजगराजायते कथकः' इति पाठमभ्युपगम्य, 'ब्रह्मायते चिरजीवितार्थमिदम् । कथको वक्ता । भुजगराजायते, योगशास्त्रप्रणेतृत्वेनान्तरभावाभिज्ञत्वार्थं शब्दशास्त्रार्णवपारावारीणत्वेन बहुमुखत्वेन बहुधाभिप्रायाविष्कारकर्तृत्वार्थं वैद्यकशास्त्राचार्यत्वेन विरहवेदनयास्या इयमवस्था न तु ज्वरादिजन्येति वक्तृत्वार्थं चेदम्' इति शिवरामः । 'निःशेषमम्बरतलं यदि पत्रिका स्यात्सप्तार्णवी यदि समेत्य मषी भवित्री । वक्ता सहस्रवदनः पुरुषः स्वयं चेल्लिख्येत रङ्गपतिपादुकयोः प्रभावः' इति श्रीवेदान्तदेशिकः । संभावनालंकारः । 'संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।' इति तल्लक्षणम् । **उज्झितं** त्यक्तम् । **संकटे** दुःखे । **हठेन** बलात्कारेण । 'प्रसभं तु बलात्कारो हठः' इत्यमरः । **संमन्त्र्य** विमृश्य । आलोचितं निर्णीतम् । **आश्रयाशः** अग्निः । 'अवश्यमेव मया हुतवहे शयितव्यमिति' इति पाठान्तरम् ।

आश्रयितव्यः’ इति। सुकृतवशाच्च महाभागः समागतः। तदत्र यत्सांप्रतम्, तत्र भवानेव प्रमाणम्” इत्युक्त्वा विरराम।

अथ कन्दर्पकेतुरपि भीतभीत इव, प्रणयानन्दामृतसागर-लहरीभिराप्लुत इव, वासवदत्तया सह संमन्त्र्य, मकरन्दं वार्तान्वेषणाय तत्रैव नगरे नियुज्य, भुजगेनेव सदागत्यभि-मुखेन, सरित्पतिनेव शुक्तिशोभितेन, विन्ध्यविपिनेनेव श्रीवृ-

---

**सुकृतं** पुण्यम्। **सांप्रतं** युक्तम्। प्रमाणं निर्णयकर्ता। ‘प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु।’ इत्यमरः। विररामेत्यत्र ‘व्याङ्परिभ्यो रमः’ इति परस्मैपदम्।

**अथेति**। अथ कन्दर्पकेतुरपि मकरन्दं नगरे नियुज्य तुरगेण नग-रात् निरगादित्यन्वयः। **भीतभीतः** अत्यन्तभीतः। ‘अननुभूतपुरुष-सङ्गेयं मा कदाचिदुद्विग्ना भूत्। तथा सति रसभेदः स्यादिति सभय इवेत्यर्थः’ इति शिवरामः। **प्रणयेति**। प्रणयेन प्रेम्णा जातः आनन्दः स एव अमृतपूर्णः सागरः तस्य लहरीभिः प्रवाहैः तरङ्गैर्वा। प्रणयश्च आनन्दश्चेति द्वन्द्वो वा। ‘सप्रणयमानन्द’ इति ‘सप्रश्रयमानन्द’ इति च पाठान्तरम्। **आप्लुतः** स्नातः। **संमन्त्र्य** आलोच्य। ‘सप्रश्रयं सवि-श्रासं वासवदत्तया संमन्त्र्य सख्याः कामचारानुज्ञां विधाय तया सह रतिं कृत्वेत्यर्थः। संपूर्वो मन्त्रिः कामचारानुज्ञार्थकः’ इति शिवरामः। **वार्तेति**। वार्तायाः उदन्तस्य अन्वेषणाय उपलम्भाय। **सदेति**। सदा सर्वदा गतौ गमने अभिमुखेन सोत्साहेन। पक्षे सदागतौ वायौ विषये अभिमु-खेन तं अशितुं विवृतमुखेनेत्यर्थः। ‘वायुर्मातरिश्वा सदागतिः।’ इत्यमरः। **सरिदिति**। सरित्पतिः समुद्रः। ‘सरित्पुलिनेनेव’ इति क्वचि-

क्षलाञ्छितेन, हंसेनेव मानसगतिना, अरण्येनेव गण्डशोभितेन, वनस्पतिनेव स्कन्धशोभितेन, वज्रेणेवेन्द्रायुधेन, मनोजवनाम्ना तुरगेण तया सह नगरात् निरगात् ॥

ततः क्रमेण गव्यूतिमात्रमध्वानं गत्वा नरजाङ्गलकवल-

---

त्पाठः । **शुक्तीति** । शुक्तिः आवर्तः । पक्षे मुक्तास्फोटः शङ्खो वा । 'शुक्तिः कपालशकले शङ्खे शङ्खनकेऽपि च । नरव्यश्वावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम् ।' इति मेदिनी । **श्रीवृक्षेति** । श्रीवृक्षो नाम अश्वस्य हृदि स्थित आवर्तविशेषः । पक्षे, श्रीवृक्षः अश्वत्थः । 'श्रीवृक्षोऽस्य हृदावर्तः' इत्यश्वप्रकरणे त्रिकाण्डशेषः । 'श्रीवृक्षको वक्षसि चेद्रोमावर्तो मुखेऽपि च ।' इति वैजयन्ती । 'अश्वत्थः श्रीवृक्षः कुञ्जराशनः ।' इति हेमचन्द्रः । **मानसेति** । मानसस्य मनस इव गतिः यस्य तेन तथोक्तेन । पक्षे मानसं मानससरः प्रति गतिः गमनं यस्य तेन तादृशेन । **वनस्पतिः** वृक्षः । 'वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे ।' इति मेदिनी । **स्कन्धः** अंसः, पक्षे मूलमारभ्य शाखावधिभागः । 'स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भ्रात्रादौ छन्दसो भिदि ।' इति मेदिनी । **गण्डः** बुद्बुदाकारं हयभूषणम् । पक्षे खड्गिमृगः । 'गण्डो व्रणे कपोले पिटके गर्वे मृगान्तरे योगे । मूलादिदुष्टभागे हयभूषणबुद्बुदेऽप्युपाये च ।' इति रत्नमाला । **इन्द्रेति** । 'मल्लिकाक्षः सितैर्नेत्रैः स्याद्वाजीन्द्रायुधोऽसितैः ।' इति शिलोञ्छः । पक्षे, इन्द्रस्य आयुधेन । सरित्पतिनेवेत्यारभ्य इन्द्रायुधेनेत्यन्तं कलिकातापुस्तके नास्ति । तुरगेण अश्वेन । **निरगात्** निर्गतवान् । एतेर्लुङि 'इणो गा लुङि' इति गादेशः ।

**तत इति** । ततः एतादृशेन श्मसानवाटेन निर्गत्य एतादृशीं

नाभिलाषमिलितनिःशङ्ककङ्ककुलसंकुलेन, अर्धदग्धचिताचक्रसिमसिमायमानवसाविस्रविकटकटतृष्णाचटुलकटपूतनोत्तालवेतालरवभीषणेन, शूलशिखरारोपितशङ्कितवर्णकर्णनासिकच्छेदरुधिरपटलपतनटङ्कारिकरकोटिकर्परकरालकौणपनृत्ततुमु-

---

विन्ध्याटवीं प्रविवेशेति संबन्धः । **गव्यूतीति** । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । गव्यूतिः प्रमाणं यस्य तं गव्यूतिमात्रम् । **अध्वानं** मार्गम् । **नरेति** । जाङ्गलं मांसम् । 'जाङ्गलं निर्जन(ल)स्थाने त्रिषु मांसे नपुंसकम् ।' इति रत्नमाला । निःशङ्काः निर्भयाः । कङ्काः पक्षिविशेषाः । **अर्धेति** । 'शवदाहार्थं दारुसंहतिः चिताचक्रम्' इति कश्चित् । सिमसिमायमाना सिमसिमेति शब्दं कुर्वती वसा मेदः । 'अव्यक्तानुकरणात्—' इति डाचि द्वित्वे क्यषि वैकल्पिकमात्मनेपदम् । विस्रः आमगन्धिः । विकटः भयंकरः । कटः शवः । चटुलाः चञ्चलाः । कटपूतनाः पिशाचविशेषाः । उत्तालाः करालाः । वेतालाः भूताविष्टाः शवाः । भूतविशेषा इति केचित् । 'उत्ताल उत्कटे श्रेष्ठे विकराले प्लवंगमे ।' इति मेदिनी । 'कटपूतनोत्तालतालुरव' इति पाठे तालुरवः मुखध्वनिः । 'प्रमुदितकटपूतनोत्तालवेतालताल—' इति मालतीमाधवे । **शूलेति** । शङ्कितवर्णः चौरः । 'चौरः शङ्कितवर्णकः ।' इति त्रिकाण्डशेषः । कर्णनासिकं कर्णौ नासिका च समाहृताः । प्राण्यङ्गत्वादेकवद्भावः । 'शङ्कितकर्णनासाच्छेद' इति पाठे तु, शङ्कितस्य चौरस्य कर्णसहिताया नासिकायाः छेद इति व्याख्येयम् । 'शङ्कितकर्णः चोरः' इति कश्चित् (?) टंकारिणः टंटं इति शब्दविशिष्टाः, गृहीतरुधिरे कर्परे पुनःपुनारक्तबिन्दुपतने तथा शब्दोदयात् । तादृशाः ये करकोटिकर्पराः पतद्रुधिरबिन्दुसंग्रहाय हस्ताग्र

**लेन, भम्भरालीकेलिसंभारभरितभूमिभागबीभत्सेन कटाग्निदह्यमानपटुचटात्कारनृकरोटिटंकारभैरवेण, विवृतोल्कामु-**

---

धृताः कपालाः तैः करालाः भयंकराः कौणपाः राक्षसाः । पिशाचा इत्यन्ये । तेषां नृत्तेन तुमुलं व्याप्तम् । 'राक्षसः कौणपः' इत्यमरः । पूर्वं चौराणां शूलारोपणमेव दण्डः । तथा च शाकुन्तले षष्ठेऽङ्के 'यः शूलादवतार्य हस्तस्कन्धमारोपितः' इति । 'निजाग्रभागसमारोपितपाटच्चरगलनिरर्गलनिर्गलल्लोहितधारासंसर्गसंजातचुंकारधूम्यासंछादितैः शूलैः समाकीर्णम्' इति जीवन्धरचम्पुकाव्येऽपि श्मशानवर्णनम् । **भम्भरालीति** । भम्भराल्यः वनमक्षिकाः । संभारः समूहः । भरितः पूर्णः । बीभत्सः जुगुप्सावहः । 'माचिका भम्भराली च दंशः स्याद्भाम्भरालिकः ।' इति त्रिकाण्डशेषः । 'भम्भरालिः शवमक्षिकाश्रेणिः । भम्भरः शवमक्षिका इति कोशः' इति तु संप्रदायः । **कटेति** । पटुः निष्ठुरः स्फुटो वा चटात्कारः यस्याः सा पटुचटात्कारा तादृशी नृकरोटिः मनुष्यशिरोस्थि । 'पटुस्तीक्ष्णे स्फुष्टे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः । 'शिरोस्थनि करोटिः स्त्री' इत्यमरः । 'चटुलचटात्कार' इत्यपि पाठः । 'कटाग्निदह्यमाननृकरोटिपटुचटात्कारेण' इति हरिचन्द्रः । **विवृतेति** । विवृतानि व्यात्तानि उल्कामुखीनां सृगालीनां मुखानि । जटिलः व्याप्तः । सृगालीनां मुखेषु उल्का विद्यन्त इति प्रसिद्धिः । तथा च रघुवंशे 'नदन्मुखोल्काविचिितामिषाभिः स वाह्यते राजपथः शिवाभिः' इति । 'आरसदशिवशिवावक्त्रकुहरविस्फुरदनलकणजर्जरिततमसि' इति श्मशानवर्णनप्रकरणे गद्यचिन्तामणौ च । 'उल्कामुखी सृगाली स्यात्' इति हारावली । 'उल्कामुखमुख' इति पाठे उल्कामुखाः अन्वर्थनामधेयाः पिशाचविशेषाः । 'लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः' इति

खीमुखोज्ज्वलज्ज्वलनज्वालाजटिलेन, आन्त्रतन्तुप्रोतकपालकलितकुचप्रालम्बडामरडाकिनीगणकृतकुणपविभागकोलाहलेन, आर्द्रसिरारचितविवाहमङ्गलप्रतिसरपिशाचमिथुनप्रदक्षिणीक्रियमाणचितानलेन, शूलपाणिनेव कपालावलिशिवाबहुभूतिभुजगराजावरुद्धदेहेन, पुरुषातिशयेनेव अनेकमण्डलकृतसेवेन, दण्डकारण्येनेव कबन्धाधिष्ठितेन, चक्रवर्तिनेव अनेकनरेन्द्र-

श्मशानवर्णने भवभूतिः । आन्त्रेति । आन्त्रं पुरीतत् । प्रालम्बः लम्बमानो हारः । 'प्रालम्बस्तु पयोधरे । त्रपुसे हारभेदे च' इति हैमः । डामरः भयंकरः डाकिनीगणः भूतविशेषसमूहः । कुणपः शवः । आर्द्रेति । सिरा नाडी । 'नाडी तु धमनिः सिरा' इत्यमरः । मङ्गलप्रतिसारः मङ्गलार्थं धार्यमाणं हरिद्रारञ्जितं हस्तसूत्रम् । 'आन्त्रैः कल्पितमङ्गलप्रतिसराः...पिशाचाङ्गनाः' इति भवभूतिः । शूलपाणिः शिवः । कपालेति । शिवाः गोमायवः । पक्षे शिवा पार्वती । अन्यत्सर्वमुभयत्र तुल्यम् । भूतिः भस्म । अवरुद्धः व्याप्तः । श्मशानवाटस्य देहो नाम संनिवेशविशेष एव । 'शिवा गौरीफेरवयोः' इत्यमरः । श्मशानवाटपक्षे 'भूतिः भस्म अङ्गारविपक्वं मांसं वा, भुजो बाहुः गरः गलः कण्ठः एतान् अदन्ति भक्षयन्तीति भूतिभुजगरादाः गृध्रादयः । तैः अवरुद्धाः देहाः मृतदेहाः यस्मिन् तेन । उदीच्यानां दजयोरभेदः' इति कश्चित् । पुरुषेति । पुरुषातिशयः पुरुषश्रेष्ठो राजा । 'पुरुषेषु अतिशयो यस्य स महारजः' इति शिवरामः । मण्डलः श्वा । पक्षे मण्डलं देशः । 'मण्डलं परिधौ कुष्ठे देशे द्वादशराजसु । क्लीबेऽथ निवहे विम्बे त्रिषु पुंसि तु कुक्कुरे' इति मेदिनी । कबन्धः शिरो-

परिवृतेन, श्मशानवाटेन निर्गत्य, निमेषमात्रादेवानेकशतयोजनमध्वानं गत्वा, पुनरपि, प्रलयकालवेलामिव समुदितार्कसमूहाम्, नागराज्यस्थितिमिव अनन्तमूलाम्,

---

हीनो देहः। पक्षे **दनुकबन्धः**। विश्वावसुर्नाम गन्धर्वो ब्राह्मणशापेन कबन्धतामवापेति **भारते**। 'कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः।' इति हैमः। 'कबन्धोऽस्त्री' इत्यमरः। **नरेन्द्राः** विषवैद्याः, राजानश्च' विषवैद्याः मन्त्रसाधनाय श्मशाने जपन्तीति प्रसिद्धिः। 'नरेन्द्रस्तु महीपाले विषवैद्ये च' इति विश्वः। 'नरेन्द्राः मान्त्रिकाः' इति केचित्। **श्मशानं** पितृवनम्, 'शवाः शेरतेऽत्र। पृषोदरादिः।' वाटः मार्गः प्रदेशो वा। 'वाटो मार्गे वृतिस्थाने स्यात्कुटीवास्तुनोः स्त्रियाम्' इति मेदिनी। 'श्मशानं घोरसंनादं शिवाशतसमाकुलम्। शवमौलिसमाकीर्णं दुर्गन्धबहुधूमकम्। पिशाचभूतवेतालडाकिनीयक्षसंकुलम्। महागणमहाभूतरवकोलाहलायुतम्। गृध्रगोमायुसंकीर्णं श्वबृन्दपरिवारितम्। अस्थिसंघातसंकीर्णं महादुर्गन्धसंकुलम्। ...ज्वलन्मांसवसामेदश्छमच्छमितसंकुलम्। स वह्निगर्भैरशिवैः शिवारुतैर्निनादितं भीषणरावगह्वरम्।' इति मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्याने श्मशानवर्णनम्। **योजनं** क्रोशचतुष्टयम्। 'योजनं परमात्मनि चतुष्क्रोश्यां च योगे' इति मेदिनी। **अर्काः** सूर्याः, तन्नाम्ना प्रसिद्धा वृक्षाश्च। 'अर्कोऽर्कपर्णे स्फटिके ज्येष्ठभ्रातरि भास्वति' इति केशवः। **नागाः** बहुफणाः सर्पाः। 'नागा बहुफणाः सर्पाः' इति यादवः। **अनन्तेति**। अनन्तानि अनेकानि मूलानि शिफाः निकुञ्जा वा यस्यां तां तथोक्तां। पक्षे, अनन्तः शेषः मूलं आद्यः अधिपतिः यस्यास्तां तादृशीम्। 'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु।' इति मेदिनी। 'मूलं पार्श्वाद्ययोरुडौ। निकुञ्जशिफयोः' इति हैमः।

सुधर्मामिव स्वच्छन्दस्थितकौशिकाम्, सत्पुरुषसेवामिव श्रीफलाढ्याम्, भारतसमरभूमिरिव दूरप्ररूढार्जुनाम्, पुलोमकुलस्थितिमिव सहस्रनेत्रोचितेन्द्राणीम्, शूरपालवृत्तिमिव दर्शितगणिकारिकाम्, सज्जनसंपदमिव विकसिताशोक-

---

**सुधर्मा** देवसभा। **स्वच्छन्दः** स्वेच्छा निर्निरोधमिति यावत्। **कौशिकः** उलूको व्यालग्राही वा। पक्षे इन्द्रः। 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः। **श्रीति**। श्रीफलैः बिल्वैः आढ्यां बहुलाम्। पक्षे, श्रीः संपदेव फलं तेन आढ्याम्। 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः। **दूरेति**। दूरं अत्युच्चैः अत्यधिकं वा यथा तथा प्ररूढाः उपचिताः अर्जुनाः ककुभाः यत्र ताम्। पक्षे दूरप्ररूढः अत्यन्तख्यातः अर्जुनः पार्थः यत्र तां तादृशीम्। 'अर्जुनः ककुभे पार्थे' इति मेदिनी। **पुलोमेति**। पुलोमा नाम असुरः, य इन्द्रस्य श्वशुरस्तेनैव हतश्च। **सहस्रेति**। सहस्राय नेत्रेभ्यः मूलेभ्यः उचिता योग्या तैर्व्याप्तेति यावत् तादृशी इन्द्राणी सिन्धुवारः यस्यां तां तादृशीम्। पक्षे सहस्रनेत्राय इन्द्राय उचिता दातुं योग्या इन्द्राणी शची यस्यां तथोक्ताम्। 'नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने।' इति विश्वः। 'इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः' इति मेदिनी। **शूरेति**। 'शूरपाल इति ज्योतिःशास्त्रपारगः कोऽपि वणिक्। तेन गणनोपयोगिनी कारिका कृतेति प्रसिद्धिः' इति सांप्रदायिकाः। **दर्शितेति**। दर्शिता गणिकारिका श्रीपर्णवृक्षः यया तां तथोक्ताम्। पक्षे, दर्शिता गणीनां गणकानां गणनानां वा कारिका संग्रहश्लोकः यया तां तादृशीम्। 'कारिका तु स्वल्पवृत्तौ बह्वोरर्थस्य सूचनी' इति हेमचन्द्रः। 'श्रीपर्णम-

सरलपुन्नागाम्, शिशुजनलीलामिव कृतधात्रीधृतिम्, कचिद्राघवचित्तवृत्तिमिव वैदेहीमयीम्, कचित्क्षीरसमुद्रमथनवेलामिव उज्जृम्भमाणामृताम्, कचिन्नारायणशक्तिमिव स्वच्छापराजिताम्, कचिद्वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशाम्,

---

ग्निमन्थः स्यात्कर्णिका गणिकारिका' इत्यमरः । 'शूरपाल इति कश्चिद्राजा। गणिः वेश्या । कारिका चित्तवृत्तिः । वेश्याप्रधानचित्तवृत्तिरित्यर्थः । उक्तं च कारिका यातनावृत्त्योरिति' इति कश्चित् । 'शूलपालो वेश्यापालो वैशिको वा तच्चित्तवृत्तिमिव फलिता, सफला वैशिकेभ्यो धनलाभात् सुरतसुखलाभाद्वा गणिकानां वेश्यानां आरिका गतिः आकारणं वा यस्यास्ताम् । ऋ गतौ । धात्वर्थनिर्देशे ण्वुल् । वृद्धिः । अर्थान्तरे आङ्पूर्वः ।' इति शिवरामः । **विकसितेति** । अशोकः सरलः पुन्नाग इति वृक्षविशेषा इमे । पक्षे, विकसिताः हृष्टाः अशोकाः दारिद्र्यादिदुःखरहिताः सरलाः दक्षिणाः विद्वांसो वा पुन्नागाः पुरुषश्रेष्ठाः यस्यास्तां तादृशीम् । पुमांसो नागा इव पुन्नागा इति विग्रहः । **धात्री** आमलकी, पक्षे माता उपमाता वा । धृतिः धरणं संतोषो वा । **राघवः** दाशरथिः । **वैदेही** पिप्पली, सीता च । प्राचुर्ये मयट् । 'वैदेही रोचनासीतावणिक्स्त्री-पिप्पलीषु च' इति विश्वः । **अमृता** गुडूची । पक्षे अमृतं सुधा। 'गुडूची तन्त्रिकामृता' 'पीयूषममृतं सुधा' इत्यमरः । **स्वच्छेति** । अपां जलानां समूहः आपं स्वच्छं निर्मलं यत् आपं तेन राजिताम् । 'स्वच्छन्दापराजिताम्' इति पाठे तु, स्वच्छन्दं स्वेच्छया प्रवहत्, अधिकं मनुष्यसंचाराभावेन न कुत्रापि प्रतिबद्धं कलुषितं वेत्यर्थो बोध्यः । स्वच्छाः आपः यासु ताः स्वच्छापाः नद्य इति वा । 'ऋक्पूः—' इति तदा समा-

कचिल्लङ्कामिव बहुपलाशसेविताम्, कचिद्धार्तराष्ट्रसेनामिव अर्जुनशरनिकरपरिवारिताम्, कचिन्नारायणमूर्तिमिव बहुरूपाम्, कचित्सुग्रीवसेनामिव पनसनलकुमुदसेविताम्, कचिदविधवामिव सिन्दूरतिलकभूषितां प्रवालाभरणां च, कचित्कुरुसेनामिव उलूकद्रोणशकुनिसनाथां धार्तराष्ट्राञ्चितां च,

---

सान्तः। पक्षे स्वच्छा, अपराजिता च। 'स्वच्छन्दा निरर्गलप्रसृता अपराजिता विष्णुक्रान्ता यस्याम्' इति शिवरामः, कश्चिच्च। **दर्शितेति**। इक्ष्वाकुः कटुतुम्बी। वंशः वेणुः। पक्षे, इक्ष्वाकुर्नाम राजा वैवस्वतमनोः पुत्रः। वंशः कुलम्। 'इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंश्यनृपे पुमान्।' 'वंशः पुंसि कुले वेणौ' इति मेदिनी। **पलाशाः** राक्षसाः। अटवीपक्षे किंशुकवृक्षा वा। 'पलाशः किंशुकेऽस्रपे।' इति हैमः। **अर्जुनेति**। अर्जुनं तृणम्। शरः गुन्द्राख्य इक्षुसदृशः तृणविशेषः। पक्षे अर्जुनः पार्थः। शरः बाणः। 'तृणमर्जुनम्।' 'गुन्द्रस्तेजनकः शरः' 'कलम्बमार्गणशराः' इत्यमरः। **रूपाः** पशवः पक्षे रूपाणि स्वरूपाणि। 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः।' इति मेदिनी। **पनसेति**। पनसः कण्टकिफलः। नलः पोटगलः। कुमुदं कैरवम्। पक्षे, पनसः नलः कुमुद इति वानराः। 'पनसः कण्टकिफले कण्टके वानरान्तरे।' 'नलः पोटगले राज्ञि पितृदेवे कपीश्वरे।' 'कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ। गम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे।' इति मेदिनी। **सिन्दूरेति**। सिन्दूरतिलकौ वृक्षविशेषौ पक्षे सिन्दूरेण तिलकम्। 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके' इति विश्वः। **प्रवालः** किसलयम्। पक्षे प्रकृष्टो वालः केशः। **कुरुसेना** दुर्योधनसैन्यम्। **उलूकेति**। उलूकः कौशिकः।

अम्लानजातिविभूषितामपि विरुद्धवंशाम्, दर्शिताभयामपि विभीषणाम्, सततहितपथ्यामपि प्रवृद्धगुल्माम्, षट्पदव्या-

---

द्रोणः काकः । शकुनिः पक्षी । सनाथा सहिता । पक्षे, उलूकः शकुनिपुत्रः । द्रोणः द्रोणाचार्यः । शकुनिः दुर्योधनमातुलः । **धार्तराष्ट्राः** हंसविशेषाः, धृतराष्ट्रपुत्रा दुर्योधनादयश्च । **अम्लानेति** । अम्लाना अग्लाना श्रेष्ठेति यावत् तादृश्या जात्या विभूषितामपि, विरुद्धः लोकविद्विष्टः निकृष्ट इति यावत् तादृशः वंशः कुलं यस्यास्तां तथोक्ताम् । अम्लानजातिविभूषिताया विरुद्धवंशत्वं विरुद्धम् । पक्षे, अम्लानः महासहा, जातिः मालती, ताभ्यां विभूषिताम् । विभिः पक्षिभिः रुद्धाः व्याप्ताः वंशाः वेणवः यस्यां तां तथोक्तामिति परिहारः । एवमेवोत्तरत्रापि विरोधपरिहारौ बोध्यौ । **अभयं** भयाभावः अभयप्रदानं वा, अभया हरीतकी च । विशेषेण भीषयतीति **विभीषणा** जनसंचारराहित्यात् । 'विभिः पक्षिभिः भीषणाम्' इति कश्चित् । **सततेति** । सततं हितं अनुकूलं पथ्यं चिकित्सादौ हितकारकं भेषजाहारादि यस्यास्तामपि, प्रवृद्धः गुल्मः उदररोगः यस्यास्तामिति विरोधः । पथ्या हरीतकी । गुल्मः तृणादिस्तम्बः इति परिहारः । 'पथ्यं हिते पथ्या हरीतकी ।' 'गुल्मः सैन्योपरक्षणे । रुक्सैन्यघट्टभेदेषु स्तम्बे' इति हैमः । **षट्पदेति** । षड्भिः पदैः चरणैः व्याप्तामपि, द्वाभ्यां पदाभ्यां अनाकुलां अव्याप्तामिति विरोधः, शतेपञ्चाशन्न्यायेन षट्पदव्याप्ताया द्विपदाकुलत्वस्यावश्यकत्वात् । पक्षे षट्पदाः भ्रमराः । द्विपानां गजानां दानेन मदजलेन आकुलां व्याप्तामिति परिहारः । 'द्विपदैर्मनुष्यैरनाकुला । समुच्चयेऽपिः । अगम्यत्वादिति भावः । यत्तु जगद्धरः, षट्पदेषु पदद्वयसद्भावादिति भाव इति, तच्चिन्त्यम् । गौण्यप्युत्तरा संख्या पूर्वां संख्यां बाधत

ग्रामपि द्विपदानाकुलाम्, द्विजकुलभूषितामपि अकुलीनवंशां विन्ध्याटवीं प्रविवेश । अत्रान्तरे तयोर्निद्रामादाय निशा जगाम ॥

ततः क्रमेण कालकैवर्तकेन तमिस्रानायं प्रक्षिप्य गगनमहासरसि सजीवशफरनिकर इवापह्रियमाणे तारागणे, संध्यारक्तांशुके विषमप्ररूढबिसलताशरयन्त्रानुगतशतपत्रपुस्तक-

---

इति विरोधानुत्थानात् । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इति शिवरामस्तु चिन्त्यः; विरोधप्रकरणमध्यगस्य अपेः, तद्धटितस्य वाक्यस्य च विरोधपरत्वावश्यंभावात्, प्रदर्शितरीत्या विरोधस्य सूपपादत्वात् । **द्विजेति** । द्विजकुलं ब्राह्मणवंशः, तेन भूषितामपि, कुलीनस्य वंशो यस्याः सा न भवतीत्यकुलीनवंशा तामिति विरोधः । पक्षे, द्विजाः पक्षिणः । कौ भूमौ लीनाः संलग्नाः कुलीनाः खर्वाः अकुलीनाः अत्युच्चाः वंशाः वेणवो यस्यां तामिति परिहारः ।

**तत इति** । काल एव कैवर्तकः मत्स्यग्राही । 'कैवर्ते दशधीवरौ' इत्यमरः । **तमिस्रेति** । तमिस्रा तमस्ततिरेव आनायः जालम् । 'तमिस्रं तिमिरे कोपे पुंसि स्त्री तु तमस्ततौ ।' 'तमिस्रां रात्रिमेव नावं तरिम्' इति केचित् । **शफराः** मत्स्यविशेषाः । 'शफरः श्वेतकोलः स्यात्' इति मत्स्यप्रकरणे त्रिकाण्डशेषः । तेषां सजीवत्वकथनमुपमेयानां ताराणां प्रकाशवत्त्वानुरोधेन । रूपकोत्प्रेक्षयोः संकरः । **संध्येति** । एतादृशे कमलाकरभिक्षौ स्वधर्मं पठतीव सतीत्यन्वयः । संध्यैव रक्तं अंशुकं वस्त्रं यस्य तस्मिन् तादृशे । संध्यया रक्ताः ये अंशव एव अंशुकाः किरणाः त एव रक्तांशुकं यस्येति वा । **विषमेति** । विषमं तिर्यक्प्रसरणेन परस्पर-

सनाथे मकरन्दबिन्दुसंदोहनिर्भरपानमत्तमधुकरमञ्जुरवैः स्वधर्ममिव पठति विकचकमलाकरभिक्षौ, कृषीवलेनेव कालेन तिमिरबीजनिकरेष्विव मधुकरेषु मधुरसकर्दमितपरागपङ्केषु घनघटमानदलपुटेषु कुमुदाकरक्षेत्रेषूप्यमानेषु, रजोमुर्मुरचूर्णसनाथमधुकरपटलधूमानुगतोद्दण्डपुण्डरीकव्या-

---

संश्लिष्टं यथा तथा प्ररूढा अभिवृद्धा या बिसलता मृणालवल्ली सैव शरयन्त्रं पुस्तकधारणाय परस्परान्तःप्रवेशितं वर्णविच्छुरितं फलकद्वयम् , यस्य द्रामिडभाषायां 'शिक्कुप्पलकै' इति व्यवहारः ।'शरयन्त्रं समारोहः सरस्वतीपीठमिति यावत् ।' इति कश्चित् । 'शरयन्त्रकं तालपत्रीयपुस्तकमध्यस्थरज्जुः' इति शिवरामः । शतपत्रं तामरसपुष्पमेव शतपत्रं अनेकपत्रसहितं पुस्तकम् । **निर्भरं** अधिकम् । **विकचेति** । विकचः विकसितः, कचरहितः मुण्डितश्च । कमलाकरः पद्मसर एव भिक्षुः संन्यासी । **कृषीवलः** कर्षकः । कृषिः अस्यास्तीति विग्रहः । 'रजःकृषि—' इति वलचि 'वले' इति दीर्घः । **तिमिरेति** । कुमुदाकराः कैरवसरांस्येव क्षेत्राणि केदाराः तेषु अधिकरणेषु । तिमिरबीजनिकरेष्विव मधुकरेषु कृषीवलेनेव कालेन उप्यमानेष्विति संबन्धः । तिमिरबीजानि तमोरूपसस्याङ्कुरहेतुभूतानि वस्तूनि । **मध्विति** । मधु मकरन्द एव रसः जलं तेन कर्दमिताः कर्दमावस्थां प्रापिताः परागपङ्काः घनानि पुष्परजांसि येषु तेषु तथोक्तेषु । **उप्यमानेषु** विकीर्यमाणेषु । 'डुवप् बीजसंताने' कर्मणि शानच् । **रज इति** । रजः पराग एव मुर्मुरचूर्णम् । परागस्य मुर्मुरचूर्णत्वं पूर्वमनेनोक्तम् । एवमन्यैरप्युच्यते । यथा माघे 'स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः' इति । उद्दण्डं ऊर्ध्वं

जाह्नूपमिव भगवते किरणमालिने प्रयच्छन्त्यां कमलिनीतापस्याम्, रजनीवधूकरद्वयोच्चलितपतत्प्रभातमुसलाहतिक्षतान्तरे उलूखल इव चन्द्रमण्डले कण्डनविकीर्णेषु तण्डुलेष्विव तारागणेषु उन्मीलत्सु, संध्याताम्रमुखेन वासरवानरेण नभस्तरुमारोहता शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो विकचप्रसूननिकर इव तारागणे फल इवेन्दुमण्डले च पतति, तारागणशालितण्डुलशबलं नभोऽङ्गणं स्फुरदरुणकिरणचूडाचक्रचारुवदने वासरकृकवाकौ चरितुमवतरति, मत्संगमादतिप्रवृद्धो वारुणीसंगमाद्द्विजपतिरेष पततीति हसन्त्यामिवाखण्डलाशायाम्,

---

प्रसृतबिसदण्डं गम्भीरं वा । पुण्डरीकं सिताम्भोजम् । **किरणमाली** सूर्यः । **रजनीति** । रजनी एव वधूः । उच्चलितं ऊर्ध्वोत्क्षिप्तम् । प्रभातं प्रत्यूष एव मुसलम्, तस्य आहत्या अवघातेन क्षतं भग्नं अन्तरं मध्यं यस्य तस्मिन् । नायं कलङ्कः, किंतु मुसलाघातजनितमध्यरन्ध्रेणाकाशमेव दृश्यत इति द्योतनाय एवमुक्तिः । 'अयोग्रो मुसलोऽस्त्री, स्यादुलूखलमुदूखलम्' इत्यमरः । **कण्डनं** वितुषीकरणम् । '**खण्डन**' इत्यपि पाठः । **उन्मीलत्सु** प्रकाशमानेषु । 'निमीलत्सु' इति पाठे ततस्ततो निलीयमानेष्वित्यर्थः । **संध्येति** । संध्यया ताम्रं रक्तं मुखं आरम्भ एव संध्यावत् ताम्रं मुखं वदनं यस्य तेन । **शालिः** कलमः । शबलं व्याप्तं, कर्बुरं वा । **अरुणकिरणः** सूर्य एव चूडाचक्रम् । **कृकवाकुः** कुक्कुटः । **चरितुं** भक्षयितुम् । 'चर गतिभक्षणयोः ।' प्राच्यां प्रभाते प्रकाशमानायामुत्प्रेक्षते—**मदिति** । **वारुणी** वरुणसंबन्धिनी प्रतीची दिक्, सुरा च । **द्विजपतिः** चन्द्रः, ब्राह्मणोत्तमश्च । **पतति** अधश्च्यवते, पाति-

अरुणकेसरिकराघातनिहतान्धकारकरीन्द्ररुधिरधाराभिरिव उदयगिरिशिखरनिर्झरधौतधातुधाराभिरिव त्वङ्गत्तुरङ्गखरखुरपुटपाटितपद्मरागपरागच्छटाभिरिव उदयाचलकूटकोटिप्ररूढजपाकुसुमकान्तिभिरिव पूर्वगिरिकेसरिकरलताहतमत्तमातङ्गोत्तमाङ्गविगलदसृग्धारासारणीभिरिव त्रिभुवनकार्यसंपादनानुरागरसैरिव रक्तमण्डले, ताराकुमुदवनग्रहणाय प्रसारितहस्त इव कुङ्कुमारुणैः किरणैः, कनकदर्पण इव प्राचीविलासिन्याः,

---

त्ववान् भवति च । सुरापानं पातित्यप्रयोजकतया स्मृतम् । 'त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान् । मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्ध्यै बडवाग्निमध्यम् ।' इत्यन्यः । **आखण्डलाशा** इन्द्रदिक् प्राची । उपरिष्टात् रक्तमण्डले सवितरीति वक्ष्यते ; तत्र मण्डलरागे हेतूनुत्प्रेक्षते—**अरुणेत्यादिना** । अरुणः सूर्यसारथिः स एव केसरी सिंहः । करः किरणः, हस्तश्च । अन्धकारा एव करीन्द्राः । **उदयेति** । उदयगिरिशिखरगतानां निर्झराणां गिरिनदीनां धौतधातवः प्रक्षालितमलःशिलादयः याः धाराः प्रवाहाः ताभिः । **त्वङ्गदिति** । त्वङ्गन्तः चञ्चलाः, गमनोत्सुका इत्यर्थः । 'त्वगि कम्पने' खुरः शफम् । पाटिताः चूर्णीकृताः । पद्मरागाः उदयशैलशिखरगतानि शोणरत्नानि । **कूटकोटिः** शृङ्गाग्रम् । **पूर्वेति** । पूर्वगिरिः उदयाचलः । असृक् रक्तम् । सारणी कुल्या । 'कुल्या च सारणिः' इति हेमचन्द्रः । **त्रिभुवनेति** । त्रिभुवनस्यापि प्रकाशरूपकार्यसंपादने ये अनुरागरसाः प्रीतिरसाः तैः । सूर्याभावे सर्वकर्मणामप्यनुष्ठानासंभवादेवमुक्तिः । अनुरागो रक्तवर्ण इति

पूर्वाचलभोगीन्द्रफणामणौ गगनेन्द्रनीलतरुकनककिसलये, नभोनगरप्राग्द्वारकनकपूर्णकुम्भे, तप्तलोहकुम्भाकारे, प्राचीकुमारीललाटतटघटितकुङ्कुमतिलकबिन्दौ, संध्याबाललतैककुसुमे, मञ्जिष्ठारक्तपट्टसूत्रपिण्डसदृशे, संध्यारुणसूत्रग्रथितप्राचीवधूकाञ्चीकाञ्चनदीनारचक्र इव, वासरविद्याधरसिद्धगुलिक इव,

---

कविसमयः । **मण्डलं** बिम्बम् । **पूर्वेति** । पूर्वाचल एव भोगीन्द्रः सर्पराजः । **गगनेति** । गगनमेव इन्द्रनीलतरुः तस्य कनककिसलये सुवर्णपल्लवे । उत्प्रेक्षा । 'कनककिसलये राजभवनादौ निर्मितेन रूपकम् । तत्र रेखागवयन्यायात्तरुता' इति शिवरामः । **नभ इति** । प्राक् प्राच्यां दिशि विद्यमानम् । पूर्णकुम्भो नाम जलपूरित आम्रपत्रनालिकेरशिरस्को मङ्गलार्थो भद्रकुम्भ उच्यते । राजधान्यां धनिनां गृहे च द्वारपार्श्वयोरेतादृशाः पूर्णकलशा निक्षिप्यन्त इत्याचारः । **लोहकुम्भः** आयसो घटः । **संध्येति** । संध्यैव बाललता तस्याः एकं कुसुमं तस्मिन् । **मञ्जिष्ठेति** । मञ्जिष्ठया विकसया रक्तानां रञ्जितानां पट्टसूत्राणां पिण्डेन गोलेन सदृशे । **संध्येति** । संध्यैव अरुणसूत्रं तेन ग्रथितं यत् प्राचीवध्वाः काञ्च्यां मेखलायां विद्यमानं काञ्चनदीनारचक्रं चक्राकारः सुवर्णनिष्कः तस्मिन् । 'दीनारः सांव्यवहारिकं रूपकम्' इति सुधा । 'काञ्चनदीनारचक्रं काञ्चनकिङ्किणीसमूहः । अथवा स्त्रियो मङ्गलार्थं स्वर्णमयं वर्तुलं शकलं कण्ठे बध्नन्ति तदेव दीनारचक्रम् । कनकमयताटङ्को वा' इति कश्चित् । 'संध्यारागगुणगुम्भिते प्राचीकाञ्चनदीनारचक्र इव' इति शिवरामपाठः । **वासरेति** । वासरः दिवस एव विद्याधरः तस्य सिद्धः रसादिप्रयोगेण निष्पन्नः गुलिकः गोलाकारा वटिका । तस्मिन्निव । गुलिकशब्दस्य पुंस्त्व

कुमार इव संहततारके, पद्मनाभ इवोल्लसितपद्मे, अध्वग इव छायाप्रिये, शक्र इव गोपतौ, उदयगिरिधातुरागारुणदिग्गज-पादतलानुकारिणि प्रभूततिमिरतस्करे भगवति सवितरि स-समुदयमारोहति, माञ्जिष्ठचामर इव दिग्गजेषु, महाभारत-समररुधिरोद्गार इव कुरुक्षेत्रेषु, सुरधनुःकान्तिविलेप इव जलदच्छेदेषु, काषायपट इव शाक्याश्रमशाखिशाखासु, कौ-सुम्भराग इव ध्वजपटपल्लवेषु, फलपाक इव कर्कन्धूषु, कुङ्कु-मरस इव व्योममहासौधाङ्गणे, संचरदरुणयवनिकापट इव कालनटस्य, बालप्रवालभङ्गारुणे प्रसरति बालातपे, क्षणेन चाटुचटुलचक्रवाकहृदयशोकसंतापहरणादिव दहनसमर्पित-

---

मृग्यम् । **कुमारः** सुब्रह्मण्यः । **तारकाः** नक्षत्राणि, तारकः तन्नामा असुरः । **पद्मं** कमलम्, पद्मा लक्ष्मीः । **छाया** सूर्यपत्नी, अनातपश्च । **गावः** किरणाः, गौः स्वर्गः । **माञ्जिष्ठेति** । एतादृशे बालातपे प्रसरतीति संबन्धः । माञ्जिष्ठं मञ्जिष्ठया रक्तं चामरं प्रकीर्णकं तस्मिन्निव । गजानां चामरमाभरणीक्रियत इत्याचारः । तथा च 'चलकर्णचामराणां करिणाम्' इत्यादि हर्षचरिते । उल्लेखोत्प्रेक्षयोरत्र संकरः । 'एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।' इत्युल्लेखलक्षणम् । **उद्गारः** वमनं प्रसरणमिति यावत् । **छेदाः** खण्डाः । **काषायः** कषायेण रक्तः । 'तेन रक्तं रागात्' इत्यण् । **शाक्यः** बौद्धभिक्षुः । **पटपल्लवाः** वस्त्राञ्चलानि । **कर्कन्धूः** बदरी । **यवनिका** तिरस्करिणी । **बालेति** । प्रवालभङ्गः किसलयच्छेदः, विद्रुमशकलं वा । **चाटु** प्रियवाक्यम् । 'चटु चाटु प्रिये वाक्ये'

तेजःप्रवेशादिव दिननाथकान्तोपलसङ्गादिवौष्णिमानमुष्णरश्मे- राश्रयति रश्मिसंचये, कन्दर्पकेतुः सर्वरात्रजागरणपरवशा- हारशून्यशरीरतया निश्चेतनोऽनेकयोजनशताध्वभ्रमणखिन्नो वासवदत्तयाप्येवंविधया सह लतागृहे मन्दमारुतान्दोलितकु- सुमपरिमललुब्धमुग्धमुखरपरिभ्रमद्भ्रमरझंकारमनोहरे तत्का- लसुलभया निद्रया गृहीतो निस्पन्दकरणग्रामः सुष्वाप ॥

ततो वणिजीव प्रसारिताम्बरे महादावानल इव सकलका-

---

इति हेमचन्द्रः । **चटुलाः** चारवः । 'चटुलश्चञ्चले चारौ' इति बाणः । **दहनेति** । सायं गृहीतं तेजः प्रातः सूर्याय ददात्यग्निरिति श्रुतिः । तथा-च श्रूयते 'आदित्यो वा अस्तं यन्नग्निमनुप्रविशति' इत्यादि । वायुपुरा-णेऽपि, 'उद्यन्तं च पुनः सूर्यमौष्ण्यमाग्नेयमाविशत्' इति । **उष्णिमानं** उष्णत्वम् । दृढादित्वादिमनिच् ।* **सर्वरात्रः** सर्वा रात्रिः । 'अहःसर्वै-कदेश—' इति समासान्तोऽच् । **निस्पन्देति** । निस्पन्दः स्वस्ववि-षयग्रहणासमर्थः करणग्रामः इन्द्रियसमूहः यस्य स तादृशः । 'करणं कारणे काये साधनेन्द्रियकर्मसु' इत्यजयः । 'निष्पन्द' इति पाठे षत्वं चिन्त्यम् । तथा च वामनः 'निष्पन्द इति षत्वं चिन्त्यम्' इति ।

**तत इति** । ततः कन्दर्पकेतुः, लतागृहं प्रियया विनाकृतं अवलोक्य, क्षणं विटपिषु क्षणं लतान्तरेषु इत्येवं तत इतो दत्तदृष्टिः भ्रमन् विललाऽ-पेत्यन्वयः । **प्रसारितेति** । प्रसारितं विस्तृतीकृतम्, ग्राहकजनदर्शनाय बहिः प्रकटितं च । अम्बरं आकाशं वस्त्रं च । **सकलेति** । सकलाः काष्ठाः दिशः उद्दीपयति प्रकाशयतीति तस्मिन्, पक्षे सकलानि काष्ठानि इन्धना-नि उद्दीपयति दहतीति तस्मिन् । 'काष्ठं दारुणि काष्ठा तु प्रकर्षे स्थानमा-

ष्ठोद्दीपिनि कल्पवृक्ष इव सर्वाशाप्रसाधके पतङ्गमण्डले मध्यं नभःस्थलस्यारूढे, कन्दर्पकेतुः प्रबुद्धः, प्रियया विनाकृतं लतागृहमवलोक्य, उत्थाय च तत इतो दत्तदृष्टिः क्षणं विटपिषु क्षणं लतान्तरेषु क्षणमधः कूपेषु क्षणमूर्द्ध्वं तरुशिखरेषु क्षणं शुष्कपर्णराशिषु क्षणमाकाशतले, क्षणं दिक्षु, क्षणं विदिक्षु च, भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप ॥

'हा प्रिये वासवदत्ते देहि मे दर्शनम् । कृतं परिहासेन । अन्तर्हितासि । त्वत्कृते यानि दुःखान्यनुभूतानि, तेषां त्वमेव

---

त्रके । दिशि ' इति हैमः । **सर्वेति** । आशाः दिशः, अभिलाषाश्च । प्रसाधकः अलंकर्ता, संपादकश्च । **पतङ्गः** सूर्यः । 'पतङ्गः सूर्यपक्षिणोः' इति हैमः । **विनाकृतं** विरहितम् । **लतेति** । लतान्तरेषु लतामध्येषु लतागुल्मेष्वित्यर्थः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः । शुष्कपदे 'शुषः कः' इति निष्ठातस्य कः । **विदिक्षु** दिङ्मध्येषु । 'दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमरः । **भ्रमन्** अनवस्थितः । अतिसौन्दर्यमोहितैर्नागैर्देवैर्वा हृता स्यादित्यधोदेशे ऊर्ध्वदेशे च दर्शनमिति शिवरामः ।

**हेति** । हा इति विषादे । इति बहुविधं विलपन् कन्दर्पकेतुः, एतादृशेन महासागरकच्छोपान्तेन गत्वा एतादृशं जलनिधिं अपश्यदित्यन्वयः । **कृतं** अलं, परिहासो मास्त्वित्यर्थः । कृतमित्यव्ययम् । 'कृतं निवारणनिषेधयोः' इति गणव्याख्याने । 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' इति तृतीया । 'किं परिहासेन अन्तरितासि' इत्यपि पाठः

प्रमाणम् । हा प्रियसख मकरन्द पश्येदं दैवदुर्विलसितम् । किं पूर्वं मया कृतमनवदातं कर्म । अहो विपाको नियतेः । अहो दुरतिक्रमता कालगतेः । अहो ग्रहाणामतिकटु कटाक्षपातनम् । अहो विसदृशफलता गुरुजनाशिषाम् । अहो दुःस्वप्नानां दुर्निमित्तानां च फलम् । सर्वथा न किंचिदगोचरो भवितव्यतानाम् । किं न सम्यगागमिता विद्याः । किं यथावदनाराधिता गुरवः । किं नोपासिता वह्नयः । किं नामाधिक्षिप्ता भूदेवाः । किं न प्रदक्षिणीकृताः सुरभयः । किं न कृतं शरणागतेष्वभयम्' इति बहुविधं विलपन्, मरणेच्छुर्दक्षिणेन

---

**अनवदातं** अशुद्धं असदित्यर्थः । **विपाकः** परिणामः । **नियतिः** विधिः । 'भाग्यं स्त्री नियतिर्विधिः ।' इत्यमरः । **ग्रहाः** चन्द्रसूर्यादयः । **विसदृशेति** । विसदृशं अननुगुणम् । फले विसंवादः विसदृशफलता । **सर्वथेति** । सर्वथा सर्वैः प्रकारैः । 'भवितव्यता प्राक्तनादृष्टपरिपक्तिः ।' 'प्रायः शुभं च विदधात्यशुभं च जन्तोः सर्वंकषा भगवती भवितव्यतैव' इति भवभूतिः । **आगमिताः** अधीताः । **यथावत्** यथार्हम् । 'तदर्हम्' इति वतिः । **किं नामेति** । अधिक्षिप्ताः तिरस्कृताः । **भूदेवाः** ब्राह्मणाः । ब्राह्मणतिरस्कारस्यानर्थप्रदत्वम् 'गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत' इति भारते श्रूयते । **सुरभयः** धेनवः । 'सुरभिर्गवि च स्त्रियाम् ।' इत्यमरः । सुरभिमप्रदक्षिणीकृत्य समागतस्य हि दिलीपस्य शापवार्ता श्रूयते । **दक्षिणेनेति** । इदमेनबन्तम् । काननस्य दक्षिणभागेनेत्यर्थः । 'एनपा द्वितीया' इति काननपदे द्वितीया

कानन निर्गत्य, नव्यनलनलदनलिनीनिचुलपिचुलवञ्जुलसरल-विदलवकुलचिरिबिल्वबिल्वबहुलेन, प्रचुरविरचितविविधोटज-कुटजरुद्धोपकण्ठेन, सोत्कण्ठभृङ्गराजरसितसुन्दरसुन्दरीवनेन, विततवेत्रव्रततिव्रातावरणतरुणवरुणतरुस्कन्धसंनद्धभृङ्गरोलेन, गोलाङ्गूलभग्नमधुपटलरसासारशीकरसिक्ततरुतलेन, प्रवृद्धना-

---

**नव्येति** । नव्याः नूतनाः शाखोपशाखाभिरभिवृद्धा इत्यर्थः । **नलः** तृणविशेषः । नलद, इत्यादीनि वृक्षनामधेयानि । तत्तद्वृक्षाणां पर्याय-लेखनेन विशिष्य न किमपि प्रयोजनमिति प्रायेण न लिख्यते । नलिनी पद्मिनी । अत्र बहवो वृक्षाः पुनरुक्ताः । **प्रचुरेति** । प्रचुरं अधिकं यथा तथा विरचितेषु विविधेषु उटजेषु पर्णशालासु संवर्द्धितैः कुटजैः गिरिमल्लिकाभिः रुद्धः व्याप्तः उपकण्ठः समीपप्रदेशः यस्य तेन तादृशेन । 'मुनीनां तु पर्णशालोटजोऽस्त्रियाम्' 'कुटजः शक्रो वत्सको गिरिमल्लिका' इत्यमरः । **सोत्कण्ठेति** । सोत्कण्ठानां औत्सुक्ययुतानां भृङ्गराजानां भ्रमरश्रेष्ठानां रसितेन ध्वनिना सुन्दरं सुन्दरीवनं सुन्दर्या-ख्यवृक्षकाननं यत्र तेन तथोक्तेन । 'भृङ्गराजस्तु विज्ञेय ओषधे पक्षिभेदके' इति धरणिकोशात्, भृङ्गराजः पक्षिविशेष इति शिवरामः । अत्र प्रक-रणे तत्र तत्र बहवः पाठभेदा उपलभ्यन्ते । समीनतया प्रतिभाता एव पाठाः प्रकटीक्रियन्ते । **विततेति** । वितता विस्तृता । व्रततिव्रातः वल्लीसमूहः । आवरणं आच्छादनम् । स्कन्दः प्रकाण्डः । संनद्धः पङ्क्तिशः स्थितः । भृङ्गरोलः पक्षिविशेषः, कीटः, भ्रमरो वा । 'भृङ्गरोलः पक्षि-भेदे कीटभेदे च षट्पदे' इति धरणिः । 'भृङ्गगोलः भ्रमरसमूहः' इति कश्चित् । **गोलाङ्गूलेति** । गोलाङ्गूलाः नीलमुखा मर्कटाः । 'वान-

रिकेलकङ्केलिराजतालीतालतमालहिन्तालपूगपुन्नागकेसरनाग-केसरवनेन, घनसारमल्लिकाकेतकीकोविदारमन्दारजम्बूबीज-पूरजम्बीरगुल्मगहनेन, पवनसंवाहितानेकपनसविटपिविटपेन, अप्रत्यूहदात्यूहकुहकुहारावभरितनदीतटनिकुञ्जपुञ्जेन, पुञ्जिताकुण्ठकण्ठकलकण्ठाध्यासितसहकारपल्लवेन, चपलकुलायकुक्कुटकुटुम्बाध्युषितोत्कटानेकविटपेन, कोरकनिकुरुम्बरोमाञ्चितकुरवकराजिना, रक्ताशोकपल्लवलावण्यविलिप्यमानदशदिशा, प्रविकसितकेसरकुसुमकेसररजोविसरधूसरितपरिसरेण, पराग-

---

रोऽथासौ गोलाङ्गूलोऽसितानन:' इति हेमचन्द्रः। मधुपटलं मधुकोशः। आसारः धारासंपातः। **पूगाः** क्रमुकाः। **घनसारेति**। घनसारः वृक्ष-भेदः। बीजपूरः मातुलुङ्गः। गुल्मः स्तम्बः। गहनः निबिडः। **पवनेति**। संवाहिताः कम्पिताः। विटपः पल्लवः, शाखा विस्तारो वा। 'शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्' इति रभसः। **अप्रत्यूहेति**। प्रत्यूहः विघ्नः। कुहकुहेति शब्दानुकरणमेतत्। कुहकुहारावः रतिध्वनिः। 'कुह-रित' इति पाठान्तरम्। कुहरितं ध्वनिः। पुञ्जः समूहः। **पुञ्जितेति**। पुञ्जिताः मिलिताः। अकुण्ठकण्ठाः निर्बाधकण्ठस्वराः। कलकण्ठाः पिकाः। 'कलकण्ठः पिके पारावते हंसे कलध्वनौ' इति हैमः। सहकारः अतिसौरभ आम्रः। 'सहकारोऽतिसौरभः' इत्यमरः। **चपलेति**। कुला-यः नीडम्। कुटुम्बः संततिः, पोष्यवर्गो वा। उत्कटः अधिकः, विषमो वा। **कोरकेति**। कोरकनिकुरुम्बाणि कलिकासमूहाः। राजिः पङ्क्तिः। **प्रवि-कसितेति**। केसरः वकुलवृक्षः। केसरः किञ्जल्कः। विसरः समूहः।

पुञ्जपिञ्जरसिन्दुवारमञ्जरीरज्यमानमधुकरमञ्जुशिञ्जितजनितजनमुदा, लवङ्गचम्पकमधूकतमाललोध्रकर्णिकारकदम्बकदम्बकेन, मदजलमेचकितगण्डकाषमुचुकुन्दकाण्डकथ्यमाननिःशङ्ककरिकरटविकटकण्डूतिना, कतिपयदिवसप्रसूतकुक्कुटीकुटीकृतकुटजकोटरेण, चटकसंचार्यमाणचटुलवाचाटचाटकैरक्रियमाणचाटुना, सहचरीसहचरणचञ्चुरचकोरचुञ्चुना,

---

धूसरितः ईषत्पाण्डुरीकृतः । परिसरः समीपदेशः । 'अथ केसरे वकुलः' 'किञ्जल्कः केसरोऽस्त्रियाम् ।' 'ईषत्पाण्डुस्तु धूसरः ।' इत्यमरः । **परागेति** । पिञ्जरा पीतवर्णा । मञ्जरी स्तबकः । गुञ्जितं अव्यक्तशब्दः । 'शिञ्जित' इति पाठे तु शिञ्जितपदमौपचारिकं बोध्यम् । **कदम्बकं** समूहः । **मदेति** । मदजलेन मेचकितः श्यामीकृतः गण्डकाषः कपोलनिघर्षणाधिकरणप्रदेशः यस्य तस्य मुचुकुन्दस्य वृक्षभेदस्य काण्डः स्कन्धः । 'काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम् ।' इति धरणिः । निःशङ्काः निर्भयाः । करटः कपोलः । विकटा अधिका । **कतिपयेति** । प्रसूतेत्यत्र कर्तरि क्तः । कुटी अल्पं गृहम् । 'कुटी तु स्यात्कुम्भदास्यामल्पवेश्मनि चापि सा ।' इति भागुरिः । कोटरं निष्कुहः । **चटकेति** । चटकः कलविङ्कपक्षी । वाचाटः गर्हितं बहुभाषी । चाटकैरः चटकायाः पुमपत्यम् । 'पुमपत्ये चाटकैरः' इत्यमरः । 'चटकाया ऐरक्' इति ऐरक्प्रत्ययः । वाचाटे 'आलजाटचौ बहुभाषिणि' इत्याटच् । **सहेति** । सह चरणं सह गमनं अनुगमनमिति यावत् । तत्र चञ्चुरैः समर्थैः चकोरैः प्रसिद्धेन । 'लौकिकाचारचञ्चुरः' इति काशीखण्डे । 'तेन वित्तः—' इति चुञ्चुप्प्रत्ययः । 'सहचरी भार्या । सहचरणं सहभक्षणं चुञ्चुरः लोलुपः । चञ्चुः त्रोटिः' इति कश्चित् ।

शैलेयसुगन्धिशिलातलसुखशयितशशशिशुराशिना, शेफालिकाशिफाविवरविस्रब्धविवर्तमानगौधेरराशिना, निरातङ्करङ्कुनिकरेण, निराकुलनकुलकेलिना, कलकोकिलकुलकबलितचूतकलिकोद्गमेन, सहकारारामरोमन्थायमानचमरयूथेन, श्रवणहारिसनीडगिरिनितम्बनिर्झरनिनादश्रवणनिद्रानन्दमन्दायमानकरिकुलकर्णतालदुन्दुभिध्वनिना, समासन्नकिन्नरीगीतिश्रवणरममाणरुरुविसरेण, कुहरितहरिद्राद्रवरज्यमानवराहपोतपो-

---

**शैलेयं** शिलाजतु । **शेफालिकेति** । शिफा जटा । 'शिफा जटा वृक्षमूले' इति वैजयन्ती । विवर्तमानः विलुठन् । गौधेरः गोधाशिशुः । 'गोधाया ढ्रक् । 'तत्र गौधारगौधेयगौधेरा गोधिकात्मजे' इत्यमरः । **निरातङ्कः** निःशङ्कः । 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः । **रङ्कुः** हरिणः । **सहकारेति** । आरामः उपवनम् । रोमन्थायमानः रोमन्थं वर्तयन् । चर्वितस्याकृष्य पुनश्चर्वणं रोमन्थः । 'कर्मणो रोमन्थ—' इति क्यङ् । यूथं समूहः । 'यूथं तिरश्चां पुंनपुंसकम् ।' इत्यमरः । **श्रवणेति** । सनीडः समीपप्रदेशः । 'समीपे निकटासन्नसंनिकृष्टसनीडवत्' इत्यमरः । मन्दायमानाः मन्दीभवन्तः अलसगमना इत्यर्थः । 'भृशादिभ्यो भुवि—' इति क्यङ् । कर्णतालः श्रोत्राघातध्वनिः । **रुरुः** कृष्णसारः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।' इत्यमरः । **कुहरितेति** । कुहरिता छिद्रिता । कुहरशब्दाण्णिचि ततः क्तः । 'कुहरं सुषिरं विवरं बिलम्' इत्यमरः । 'क्षतहरिद्रा' इति पाठान्तरम् । 'कुहरितं शब्दितम्' इति कश्चित् । पोतः शिशुः । पोत्रपालिः घोणाप्रदेशः । 'पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च ।' 'पालिः पङ्क्तिप्रदेशयोः' इत्यमरः ।

त्रपालिना, गुञ्जाकुञ्जपुञ्जितजाहकजातेन, दंशदशनकुपितकपिपोतपेटकनखकोटिपाटितपाटलीपुटकीटसंकटेन, कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलरुधिरच्छटाच्छुरितचारुकेसरभारभासुरकेसरिकदम्बेन महासागरकच्छोपान्तेन कतिपयदूरमध्वानं गत्वा, अतिचपलवीचिप्रचयप्रहतप्रपाततया ताण्डवोद्दण्डदोर्दण्डषण्डखण्डपरशुविडम्ब-

---

**गुञ्जा** कृष्णला । जाहकजातं बिडालसमूहः । 'बिडालः कुन्दमो नक्तंचारी दीप्ताक्षजाहकौ ।' इति त्रिकाण्डशेषः । 'जाहकः गात्रसंकोची पशुविशेषः' इति कश्चित् । 'जालकः घोङ्गः' इति शिवरामः । 'कुञ्जपुञ्जगूहिजाहक' इत्यपि पाठः । **दंशेति** । दंशाः वनमक्षिकाः । 'दशनं दंष्ट्राव्यापारः ।' 'दशने' इति निपातनादनुनासिकलोपः । 'दंशन' इति पाठान्तरम् । पेटकः समूहः । 'पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके' इति मेदिनी । पाटली पाटलावृक्षः । संकटः निबिडः । 'पाटलीपुटः कीटकुलायः । पाटली द्रुमकीटकः । इति वैजयन्ती' इति प्राचीनटिप्पणी । 'पाटलकीटः श्वेतरक्तः कीटविशेषः' इति शिवरामः । **कुलिशेति** । कुलिशं वज्रम् । चपेटा प्रहारः । 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ' इत्यमरेण चपेटशब्दस्य विस्तृताङ्गुलिपाणिवाचकत्वेऽपि पुंस्त्वेऽपि 'खाण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इत्यादिमहाभाष्यादिप्रयोगात्स्त्रीत्वं प्रहारवाचकत्वं चावसेयम् । छुरितः रूषितः । केसरः स्कन्धकेशः । **कच्छोपान्तः** जलप्रायदेशसमीपभूमिः । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः । 'मातङ्गमदच्छटा' इति क्वचित्पाठः । **अतिचपलेति** । प्रचयः समूहः । प्रपातः कूलम् । 'अतिचप-

नापण्डितम् , वारुणविजयपताकाभिरिव शेषकुलनिर्मोकमञ्जरीभिरिव सुधासहचरीभिरिव ज्योत्स्नासहोदरीभिरिव शशाङ्कमण्डलपरिशेषपरमाणुसन्ततिभिरिव लक्ष्मीलीलातर्पणधाराभिरिव जलदेवताचन्दनविच्छित्तिभिरिव फेनराजिभिरुपान्तरमणीयम्, अपरमिव गगनतलमवनीतलमवतीर्णम् , अच्छजलादुच्चलच्छीकरनिकरेण नभश्चरान्मुक्ताफलैरिव विलोभयन्तम् , अभयाभ्यर्थनागतानेकसपक्षतिक्षितिधरभरितकुक्षिभा-

---

लवारिप्रभूतवीचिप्रभावतया' इत्यपि पाठः । **ताण्डवेति** । ताण्डवं पुरुषनटनम् । उद्दण्डं उद्धतम् । षण्डं समूहः । 'षण्डः समूहे' इति सारस्वतकोशः । खण्डपरशुः शिवः । विडम्बना अनुकरणं परिहासो वा । 'भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुजसहस्रमुडुपतिशकलशेखरमिव विडम्बयितुमुद्यतः' इति बाणभट्टः । **वारुणेति** । वरुणस्येमाः वारुण्यः तादृशीभिर्विजयपताकाभिरिव । 'वारुणीविजय' इति पाठे वरुणस्येयं वारुणी मदिरा, प्रतीची दिगिति वा व्याख्येयम् । निर्मोकमञ्जर्यः कञ्चुकराशयः । **लक्ष्मीति** । लक्ष्म्याः लीलार्थं यत् आतर्पणं मङ्गलालेपनं तस्य धाराभिरिव । आतर्पणशब्दः पूर्वमेव विवृतः । 'चत्वरे चूतमूले च मधुपिष्टद्रवेण यत् । कन्याभिः सिच्यते धारां विदुरातर्पणीं हि तत् ।' इति तु संप्रदायः । **विच्छित्तिः** आलेपनं शोभा वा । 'विच्छित्तिरङ्गरागे स्याच्छोभाविच्छेदयोरपि ।' इति विश्वः । उपान्तरमणीयं पर्यन्तेषु सुन्दरम् । 'उपात्तरामणीयकम्' इत्यपि पाठः । **शीकराः** अम्बुकणाः । **विलोभयन्तं** उत्सुकयन्तम् । **सपक्षतयः** पक्षमूलसहिताः । 'स्त्री पक्षतिः

गम्, सगरसुतविसरसमुत्खातम्, बडबामुखगतवारिजातम्, सुरपत्युपात्तपारिजातम्, अभिजातमणिरत्नाकरम्, करिमकरसंकुलम्, शकुनिकुलकबलनाभिलाषसंचरन्नक्रचक्रम्, स्तिमिततिमितिमिङ्गिलकुलम्, कदलीवनपालीपालितैलालवलीलवङ्गमातुलुङ्गगुल्मगहनम्, ऊर्मिमारुतमर्मरिततरलतरोत्तालतालीदलचकितजलमानुषमिथुनमृदितनिलीनतलिनशैवालम्, प्रवालाङ्कुरकोटिपाटितमुखखिन्नशङ्खनखखरनखरशिखरविलि-

पक्षमूलम्' इत्यमरः । 'पक्षात्तिः ।' **समुत्खातं** अवदारितम् । खनतेर्निष्ठायां 'जनसन—' इत्यात्वम् । **जातं** समूहः । 'जातं जात्योघजनिषु' इति हैमः । **अभिजाताः** शुद्धाः । **शकुनीति** । शकुनयः पक्षिणः । कबलनं भक्षणम् । 'शकुलो मत्स्यभेदः ।' इति शिवरामः । नक्राः कुम्भीराः । **स्तिमितं** निश्चलम् । तिमितिमिङ्गिलौ मत्स्यविशेषौ । **वनपाली** वनपालिका स्त्री । कर्मण्यणि ङीप् । 'कदलीवनवाटविलुलितैलालवली' इति पाठानुरोधेन 'विलुलितं मिश्रितम्' इति कश्चित् । **ऊर्मीति** । ऊर्मिः वीचिः । मर्मरितं सशब्दं कृतम् । 'मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । तालीदलं तालपत्रम् । चकितानि भीतानि । मिथुनानि द्वन्द्वानि । मृदितं प्रहतम् । निलीनं भूम्या सहैक्यमापन्नमिव भूमौ लग्नम् । तलिनं अल्पम् । शैवालं जलनीली । 'तलिनं विरले स्तोके' 'जलनीली तु शैवालम्' इत्यमरः । 'मृदितं उपभुक्तम् । मृदिते भुक्तसंस्पृष्टे इति वैजयन्ती' इति केचित् । 'तालीवनचरित' इति, 'मृदितपुलिनबालशैवालम्' इति च पाठान्तरम् । **प्रवालेति** । प्रवालः विद्रुमः । कोटिः अग्रम् । शङ्खनखाः क्षुद्राः शङ्खाः । 'क्षुद्र-

खिततटरेखम्, खगेश्वरगोत्रपत्ररथपटलकलिलसलिलम्, अद्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्तभ्रान्तिभिः, सापस्मारमिव सितफेनसंचयैः, ससुरागन्धमिव वेलावकुलपरिमलैः, सरोषमिव गर्जितैः, सखेदमिव नागनिःश्वासैः, सभ्रूभङ्गमिव तरङ्गैः, सालानस्तम्भमिव रामसेतुना, कुम्भीनसीकुक्षिमिव लवणोत्पत्तिस्थानम्, व्याकरणमिव स्त्रीनदीकृत्यबहुलम्, राज-

शङ्खाः शङ्खनखाः' इत्यमरः। **खगेति**। खे आकाशे गच्छन्तीति खगाः पक्षिणः, तेषां ईश्वरः गरुडः तस्य गोत्रे वंशे उत्पन्नैः पत्ररथानां पक्षिणां पटलेन समूहेन कलिलं व्याप्तं सलिलं यस्य तं तथोक्तम्। **संस्कारः** वासना। **आवर्तः** अम्भसां भ्रमः। 'स्यादावर्तोऽम्भसां भ्रमः।' इत्यमरः। 'अद्याप्यारूढमन्दपरिवर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति' इति कादम्बरी। **अपस्मारः** रोगविशेषः। 'चिन्ताशोकादिभिः क्रुद्धा दोषा हृत्स्रोतसि स्थिताः। कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते।' इति वैद्यके। अत्र सितफेनेत्युक्त्या अपस्मारस्य श्लेष्मिकत्वमुक्तं भवति। तथा च माधवः, 'शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः। पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात्।' इति। **नागाः** जलसर्पाः जलगजा वा। **भ्रूभङ्गः** भ्रुकुटिः। **आलानस्तम्भः** गजबन्धनस्थूणा। 'आलानं गजबन्धनम्' इति वैजयन्ती। **कुम्भीनसी** लवणासुरस्य माता। **लवणं** प्रसिद्धं रसद्रव्यम्, लवणः तदाख्योऽसुरश्च। 'लवणो राक्षसे रसे' इति हैमः। **स्त्रीति**। स्त्रीणां पत्नीभूतानां नदीनां कृत्यैः स्वस्मिन्प्रवेशरूपैः बहुलं व्याप्तम्। पक्षे, स्त्री स्त्रियामित्यधिकारः, नदी 'यू स्त्र्याख्यौ नदी' इति विहिता नदीसंज्ञा,

कुलमिव दृश्यमानमहापात्रम्, हस्तिबन्धमिव वारिगतानेकनागमुच्यमानशूत्कारम्, विश्वामित्रपुत्रवर्गमिव अम्भोजचारुमत्स्योपशोभितम्, सत्पुरुषमिव गोत्राश्रयम्, साधुमिवाच्युतस्थितिरमणीयम्, सुनृपतिमिव सज्जनक्रमकरम्, कृतमन्युमिव करतोयाप्लुतमुखम्, विरहिणमिव चन्दनोदकसिक्तम्, विला-

---

तयोः कृत्यानि टापूहस्वादीनि तैः बहुलम्। यद्वा कृत्याः कृत्यसंज्ञकप्रत्ययाः। **पात्रं** मन्त्री, कूलमध्यं च। 'पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि' इति हैमः। **हस्तिबन्धः** गजबन्धनस्थानम्। अधिकरणे घञ्। **वारीति**। नागाः सर्पाः। पक्षे, वारिः गजबन्धनी रज्जुः। नागाः गजाः। 'वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि वालुके' इति मेदिनी। **अम्भोजेति**। अम्भोजैः चारुः मनोहरः, मत्स्यैः उपशोभितश्च तम्। पक्षे, अम्भोजः, चारुमत्स्य इति विश्वामित्रपुत्रेष्वन्यतमौ, ताभ्यामुपशोभितमिति केचित्। 'अम्भोजः, चारुः, मत्स्यः, इति विश्वामित्रपुत्रनामानि' इति कश्चित्। 'अम्भोजचामरमत्स्योपशोभितम्' इति पाठमङ्गीकृत्य, 'अम्भोजैः कमलैः चामरैर्वालव्यजनैर्मत्स्यदेशाधिपैः शोभितम्। पक्षे अम्भोजचामरं शैवालम्। शैवालं शैवलाम्भोजचामरं जलनीलिका। इत्युत्पलनी' इति शिवरामः। **गोत्राः** पर्वताः, गोत्रं कुलम्। 'गोत्रातिशयम्' इत्यपि पाठः। **अच्युतेति**। अच्युतस्य विष्णोः स्थितिः। पक्षे अच्युता अपरिभ्रष्टा स्थितिः आचारः। **सज्जेति**। सज्जाः सर्वदा संनिहिताः नक्राः मकराः मत्स्यविशेषाः यस्मिंस्तं तादृशम्। पक्षे सज्जनानां क्रमकरं व्यवस्थाकारिणम्। **कृतमन्युः** सरोषः विषण्णो वा। 'मन्युः शोके क्रतौ क्रुधि' इति विश्वः। **करेति**। करतोया नाम

सिनमिव नर्मदानुगतम्, राशिमिव समीनकुलीरम्, शृङ्गारिणमिव अनेकमुक्तालंकृतम्, उद्धृतकालकूटमपि प्रकटितविषराशिम्, अतिवृद्धमपि सुन्दरीपरिवृतकण्ठम्, सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं, जलनिधिमपश्यत् ॥

अचिन्तयच्च 'अहो मे कृतापकारेणापि विधिना उपकृतिरेव कृता; यदयं लोचनगोचरतां गतः समुद्रः । तदत्र देहं त्यजामि । यद्यप्यनातुरस्यात्मत्यागो न विहितः, तथापि

---

सदानीरा काचन नदी, तया आप्लुतं सिक्तं मुखं नदीसागरसंगमस्थलं यस्य तं तादृशम् । पक्षे, करतोयेन हस्तस्थितजलेन आप्लुतं मुखं यस्य तम् । **नर्मेति** । नर्मदा रेवा । पक्षे, नर्म ददातीति नर्मदः हासकारी सखा विदूषकः । नर्म क्रीडां ददतीति नर्मदाः स्त्रियो वा । 'विलासी नाम कश्चिद्राजा, तस्य महिषी नर्मदा' इति कश्चित् । **कुलीरः** कर्कटकः । **मुक्ताः** मौक्तिकानि, उभयत्र तुल्यम् । शृङ्गारिपक्षे, मुक्ताः स्वैरिण्य इति वा । **कालकूटः** हालाहलः । **विषं** गरलं जलं च । 'विषं तु गरले तोये' इति विश्वः । **वृद्धः** जरठः, प्रवृद्धश्च । **सुन्दरी** रमणी, वृक्षविशेषः विद्रुमो वा । **कण्ठः** गलः, समीपप्रदेशश्च । 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति विश्वः । **सुराः** देवाः, सुरा मद्यं च । **असुरेति** । सुराधिष्ठितो यो न भवति सः असुराधिष्ठितः, असुरैः दानवैः अधिष्ठितः अध्यासितश्च ।

**अहो इति** । कन्दर्पकेतुः इत्येवं विचिन्त्य पुलिनतलं आससादेत्यन्वयः । अत्र 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षितो विषमालंकारभेदः । **अनातुरस्य** रोगाद्यपीडितस्य सुस्थस्य । 'आतुरस्य

कार्यः। न खलु सर्वः सर्वं कार्यमेव करोत्यसारे संसारे। केन किं नाम न कृतम्। तथाहि— गुरुदारहरणं द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः

---

तु मरणम्, दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमानपि। प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनादिकमिति स्मृत्युक्तमेव' इति शिवरामः। **असारे** साररहिते। 'अद्य स्थित्वा श्वो गमिष्यद्भिरल्पैर्लज्जास्माभिर्मीलिताक्षैर्जितैव' इत्युक्तोऽभिप्रायः, असार इत्यनेन विवक्षितः। केचित्तु 'असारे संसारे' इत्यस्योत्तरवाक्ये संबन्धमभिप्रयन्ति। **गुर्विति**। गुरुः सुरगुरुः बृहस्पतिः तस्य दाराः पत्नी तारा। गुरोः पितृभ्रात्राचार्यादेः दारा इति च। द्विजराजः चन्द्रः, ब्राह्मणोत्तमश्च। 'द्विजराजः शशधरः' इत्यमरः। पुरा चन्द्रः स्वं कामयमानां गुरुपत्नीं तारां परिगृह्य तस्यां बुधं तनयमजीजनदिति श्रीविष्णुपुराणे। **पुरूरवा इति**। बुधस्य इलायां जातश्चन्द्रवंश्यो राजा पुरूरवाः। 'स वयःशेषे ब्रह्मस्वमगृह्णात्। तत एव नष्ट इत्यपि भारते' इति शिवरामः। 'पुरूरवाः पूर्वां दिशं जेतुं गच्छन्केनाप्याहृतप्रभूतधनेन विप्रेण यज्ञे निमन्त्रितो लोभाक्षिप्तहृदयस्तद्धनं जिहीर्षुस्तच्छापान्नष्टः। तस्मिन्मृते स विप्रो नृपं विना प्रजा निवर्तत इति ज्ञात्वा तदायुषा राजर्षिमायुर्नामानमजीजनत्' इति हर्षचरितटीकायां शंकरः। **नहुष इति**। दोहली साभिलाषः। 'कामुको दोहदी मत इति रत्नकोशः' इति शिवरामः। भुजङ्गः सर्पः, विटश्च। 'भुजङ्गोऽहौ च षिद्गे च' इति मेदिनी। इन्द्रे वृत्रवधब्रह्महत्याक्रान्ते सति, तत्स्थानं देवैरारोपितो नहुषो नाम नरपतिरिन्द्राणीभोगलालसः स्वयानवाहिषु महर्षिषु मन्दमन्दं गच्छन्तमगस्त्यं 'सर्प सर्प' इत्यधिक्षिपन्कुपितेन तेन 'सर्पो भव' इति शप्त इति भारते।

**परकलत्रदोहली भुजङ्गतामयासीत् । ययातिः कृतब्राह्मणीपाणिग्रहणः पपात । सुद्युम्नः स्त्रीमय एवाभवत् । सोमकस्य प्रख्याता जगति जन्तुवधनिर्घृणता । पुरुकुत्सः कुत्सित एवा-**

---

**ययातिरिति** । ययातिः चन्द्रवंश्यो राजा । ब्राह्मणी शुक्रस्य पुत्री देवयानी । पाणिग्रहणं विवाहः, कूपे वृषपर्वपुत्र्या शर्मिष्ठया पातितायाः देवयान्यास्ततः समुद्धरणाय हस्तावलम्बनं च । पपात पतितोऽभवत् । स्वेन कूपादुद्धृतां ब्राह्मणीं देवयानीं कालान्तरे तत्पित्रा शुक्रेणानुज्ञातः सन्नेव नहुषो व्यूढवान् । अथापि 'कालेन चासौ पपात' इति शंकरः । 'पपात तारुण्यादित्यर्थः ।' समयबन्धेन स्वपरिचारिकायां शर्मिष्ठायामासक्तिं ज्ञात्वा देवयान्या कुपितया निवेदितः शुक्रो नहुषं 'प्रवया भव' इति शशापेति भारते । कूपाद्देवयान्युद्धरणकाले स्वयं कूपे पपातेति सांप्रदायिकं भाववर्णनम् । **सुद्युम्न इति** । 'सुद्युम्नो राजा, शोभनं द्युम्नं बलमस्येति च । स्त्रीमयो महिलाकृतिः, कान्तानुरक्तश्च । योऽत्र तोयमुपयोक्ष्यते, स स्त्रीत्वमापत्स्यते इति भगवता भवान्याभ्यर्थितेन भवेन शप्तः सन्सरसः पीत्वा तोयं सुद्युम्नो मृगयाविहारी स्त्रीमयोऽभूदिति' हर्षचरितव्याख्याता शंकरः । शिवरामस्त्वत्र मूकः । 'सुद्युम्नस्य विभण्डकमुनिशापात् वध्रिकात्वम् । वध्रिकायोषितौ स्त्रियाविति कोशः' इति प्राचीनटिप्पणी । **सोमकस्येति** । सोमको राजा । जन्तुर्नाम तत्पुत्रः । जन्तवः प्राणिनश्च । निर्घृणता निर्दयत्वं निर्जुगुप्सत्वं वा । 'घृणा जुगुप्सादययोः' इति हरिः । एकपुत्रकः सोमको बहून्पुत्रान् लिप्सुः, पुत्रस्य जन्तोर्वपया होमे तद्धूमाघ्राणेन सर्वा अप्यन्तःपुरस्त्रियो गर्भिण्यो भविष्यन्तीति पुरोधसा अभिहितस्तथैव चकारेति शंकरशिवरामौ । 'जन्तुरिति कश्चिदसुरः' इति टिप्पणी । **पुरुकुत्सः** कश्चन नृपतिः । 'पुरु-

भवत् । कुवलयाश्वोऽश्वतरकन्यामपि जगाम । नृगः कृकलासतामगमत् । नलः कलिनाभिभूतः । संवरणो मित्रदुहितरि विक्लवतामगात् । दशरथोऽपीष्टरामोन्मादेन मृत्युमवाप । कार्त-

---

कुत्सः पुरा तपश्चरन्नर्मदायां स्नानं कुर्वन्कामप्यङ्गनामालोक्य कामाविष्टो नीतिमुत्ससर्ज' इति शंकरः । 'रेवैव स्त्रीरूपेणागता' इति परं भेदः प्राचीनटिप्पण्याम् । **कुवलयाश्वः** कश्चिद्राजा । **अश्वेति** । अश्वतरो नाम कश्चित्सर्पः । तस्य कन्या मदालसा । गर्दभेनाश्वायामुत्पन्नः पशुविशेषश्च अश्वतर इत्युच्यते, तस्य कन्या च । 'वत्सोक्षाश्व—' इति तनुत्वे अश्वशब्दात् ष्टरच् । विश्वावसोर्गन्धर्वराजस्य सुता मदालसा पातालकेतुना दानवेन बलात् गृहीत्वा पाताले निक्षिप्ता । कालान्तरे च दानवं तं हतवता कुवलयाश्वेन पाणौ गृहीता । ततश्च पातालकेतुसुहृदः कस्यचन दानवस्य कपटप्रयोगेण मदालसा कुवलयाश्वस्यासंनिधावग्निं प्रविष्टा । तद्विरहदूनस्य स्वसुतसखस्य च कुवलयाश्वस्य प्रियचिकीर्षुणा अश्वतराभिधेन सर्पराजेन परमेश्वरप्रसादाद्यथापुरावस्थितवयोरूपादिकं समासादिता मदालसा कुवलयाश्वाय प्रतिपादितेति वायुपुराणे । 'कुवलयाश्वो मृगयाप्रसङ्गेन घर्मातुरो मज्जनरभसेन सरसीमवतीर्णो रसातलं प्राप्तो मदालसां नागकन्यकामूढवान्' इति, 'मायानिर्मितां मदालसामश्वतरः कुवलयाश्वायार्पयत्' इति च शंकरशिवरामौ । **नृगः** कश्चिद्राजा । स खलु कस्मैचिद्दत्तपूर्वामेव गावमज्ञानादन्यस्मै प्रदिशन् तेन व्यतिकरेण विवदमानाभ्यां ब्राह्मणाभ्यां 'कृकलासो भव' इति शप्त इत्युत्तररामायणे । **नलः** राजा । **कलिना** चतुर्थयुगाभिमानिदेवतया, कलहेन च । इयं कथा सुप्रसिद्धा । **संवरणः** कश्चिन्नृपतिः । **मित्रेति** । मित्रस्य रवेः दुहिता कन्या तपती नाम । मित्रं सुहृत् तस्य दुहिता च । **विक्लवः**

वीर्यो गोब्राह्मणपीडया पञ्चत्वमयासीत् । शन्तनुरतिव्यसनाद्वने विललाप । युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज । तदित्थं नास्त्येव जगत्यकलङ्कः कोऽपि । तदहमपि देहमुत्सृजामि' इत्येवं विचिन्त्य कुररखरनखरशिखरखण्डितपृथुलपृथुरोमशल्कसंकुलम्, संकलितजलनकुलकुलोच्चारशारम्, क्रोष्टुकुलोत्सृष्ट-

---

विह्वलः धैर्यच्युतः । 'मित्र इति कश्चिद्राजा' इति टिप्पणी । **इष्टेति** इष्टा प्रिया या रामा रमणी कैकेयी तया तस्यां वा उन्मादः चित्तविभ्रमः । इष्टः यः रामः स्वसुतः तेन तस्मिन्वा उन्मादेन च । प्रसिद्धमिदम् । **गोब्राह्मणेति** । गोनिमित्तं ब्राह्मणस्य परशुरामपितुर्जमदग्नेः पडिनं वधः । गवां ब्राह्मणानां च पीडनं च । पञ्चत्वं मरणम् । जमदग्निहोमधेनुं हठादाकृष्य स्वपुरं नीतवान् कार्तवीर्यः पश्चात्परशुरामेण हत इति भारते । **शन्तनुः** भीष्मपिता । शापाद्भुवमागतां गङ्गां समयबन्धेन विवहन् शन्तनुरष्टमं पुत्रमपि जले प्रक्षेप्तुकामां तां निरुन्धानः समयबन्धातिक्रमात्तस्यां गतायां बहुधा विललापेति भारते । **युधिष्ठिरः** धर्मपुत्रः । 'गवियुधिभ्याम्—' इति अलुक् । स हि 'अश्वत्थामा हतः' (कुञ्जरः) इत्यर्थद्वयाभिप्रायेण प्रयुञ्जानः सत्यात्प्रच्युत इति भारते । 'शोकान्मृतिर्म्रषोत्सर्गो वने च परिदेवनम् । कन्दर्पकेतुः स्वकृतावुपष्टम्भकमुक्तवान्' इति शिवरामसंग्रहश्लोकः । एतद्वाक्यसदृशानि 'द्विजानां राजा गुरुदारग्रहणमकार्षीत्' इत्यादीनि हर्षचरिते तृतीयोच्छ्वासे द्रष्टव्यानि । **कलङ्कः** अपवादः । **कुररेति** । कुरराः उत्क्रोशपक्षिणः । पृथुरोमाणः मत्स्याः । शल्कं शकलम् । 'पृथुरोमा झषो मत्स्यः' 'द्वे शल्के शकलवल्कले' इत्यमरः । **संकलितेति** । संकलिताः मिलिताः । उच्चारः विष्ठा । 'उच्चारावस्करौ शमलं शकृत्' इत्यमरः । शारं शबलम् । **क्रोष्टुकुलेति** । क्रोष्टारः

विकटकर्कटककर्परपरंपरापरिगतप्रान्तम्, अतितरलजलरयलुलितचटुलशफरकुलकबलनकृतमतिनिभृतबकशकुनिनिवहधवलितपरिसरम्, अतिचपलजलकपिकुलविहरणतुलितसलिलकणनिकरपरिमिलनशिशिरिततमालतलम्, अनुदिननिपदतितरुणवनमहिषगवलशिखरविलिखितविषमतटम्, अनवरतचरदसितमुखचरणविहगवरनिवहमधुरनिनदमुखरितम्, अहिमकरकरनिकररुचिरजलमनुजगणशयनमृदिततटधरणीतलम्, अतिबहुलमदशबलकरटतटकरिशतनिपतितमधुकरनिकरविरुतिरतिकरम्, अतिजवनपवनविधुतजलविघटननिपतितमणिगणपरिगतपरिसरम्, जलनिधिजलगतभुजगनिर्मुक्तनिर्मोकपट्टम्,

---

सृगालाः। कर्कटककर्पराः कुलीरकपालाः। 'स्यात्कर्परः कपालोऽस्त्री' इत्यमरः। परिगतप्रान्तं व्याप्तसमीपदेशम्। **अतीति**। लुलितं विवृतं चटुलं चञ्चलं च। निभृतः निश्चलः। परिसरः समीपप्रदेशः। **तुलितः** ऊर्ध्वं विकीर्णः। **परिमिलनं** संबन्धः। 'संज्ञापूर्वकविधेरनित्यत्वादत्र गुणाभावः' इति प्राञ्चः। **गवलं** महिषशृङ्गम्। 'गवलं माहिषं शृङ्गम्' इत्यमरः। करिकलभन्यायोऽत्र बोध्यः। **विषमं** उन्नतानतम्। **अनवरतेति**। असितं नीलं मुखचरणं येषां ते तादृशाः विहगाः पक्षिणः हंसविशेषाः। 'धार्तराष्ट्राः चञ्चुचरणैः सितेतरैः' इत्यमरः। **अहिमकरः** सूर्यः। **कराः** किरणाः। करटः गण्डः। **रतिः** प्रीतिः। **अतीति**। जवनः वेगवान्। विघटनं उल्लोलनम्। 'विघटनमुल्लोलनं पयसः' इति केशवः। **निर्मोकः** कञ्चुकः। **कुट्टिमः** निबद्धा भूः। **पद्मरागः** रत्न-

दर्पणमिव वसुंधरायाः, स्फटिककुट्टिममिव वरुणस्य, कमलवनमिव सपद्मरागम्, वनप्रदेशमिव सविद्रुमलतम्, कातरमिव सदरम्, विष्णुमिवानेकमुक्तोपेतं पुलिनतलमाससाद ।

ततः कृतस्नानादिसकलकृत्यो जलनिधिजलमवतरितुमारेभे शरीरत्यागाय ।

अथ सानुग्रहेषु ग्राहेषु, निर्मत्सरेषु मत्स्येषु, अनिच्छेषु कच्छपेषु, अक्रूरेषु नक्रेषु, अभयंकरेषु मकरेषु, अमारेषु शिशुमारेषु, आकाशात्सरस्वती समुदचरत्— 'आर्य कन्दर्पकेतो पुनरपि तव प्रियया संगतिर्भविष्यत्यचिरेण । तद्विरम मरणव्यवसायात्' इति । सोऽपि तदुपश्रुत्य मरणारम्भाद्वि-

---

विशेषः, कमलानां रक्तिमा च । **विद्रुमेति** । विद्रुमलता लताकारः प्रवालः । पक्षे विशेषेण विभिः पक्षिभिर्युक्ता वा द्रुमलताः यत्र तम् । **कातरः** भीतः । **दरः** शङ्खः गर्तो वा, भयं च । 'दरोऽस्त्री शङ्खभययो गर्तेऽपि च' इति रत्नमाला । **मुक्ताः** मौक्तिकानि, मुक्तिं गता जीवाश्च । 'कमलवनम्' इत्यारभ्य, 'मुक्तोपेतम्' इत्यन्तं बहुषु कोशेषु नास्ति ।

**अथेति** । ग्राहादिष्वेवं स्थितेषु सरस्वती समुदचरदित्यन्वयः । **ग्राहाः** अवहाराः । **कच्छपाः** कूर्माः । **नक्राः** कुम्भीराः । 'ग्राहोऽवहारः, नक्रस्तु कुम्भीरः' इत्यमरः । **अभयंकराः** भयंकरभिन्नाः । 'मेघर्ति—' इति खच् । **अमाराः** अमारकाः । **शिशुमाराः** मत्स्यविशेषाः ।

रराम । ततः प्रियासमागमाशया शरीरस्थितिहेतुमशनं चिकीर्षुः कच्छोपान्तवनं जगाम । अथ तत इतः परिभ्रमन्, फलमूलादिना वने वर्तयन्, कालमनेकं निनाय ।

एकदा तु कतिपयमासापगमे काकलीगायन इव समृद्धनिम्नगानदः, सायंतनसमय इव नर्तितनीलकण्ठः, कुमारमयूर इव समारूढशरजन्मा, तपस्वीव प्रशमितरजःप्रसरः, तापस इव धृतजलदकरकः, प्रलयकाल इव दर्शितानेकतरणिविभ्रमः,

---

'तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः' इत्यमरः । **चिकीर्षुः** कर्तुमिच्छुः । **वर्तयन्** शरीरधारणां कुर्वन् ।

**एकदेति** । एकदा कदाचित्, एतादृशः वर्षासमयः समाजगामेत्यन्वयः । **काकली** कलः सूक्ष्मो ध्वनिः । **समृद्धेति** । समृद्धाः जलसंपूर्णाः निम्नगाः नद्यः नदाः प्रत्यक्स्रोतसश्च यस्मिन् स तथोक्तः । पक्षे, निम्नं नीचं गम्भीरं वा गानं ददातीति तादृशः । **नीलकण्ठः** मयूरः, शिवश्च । 'नीलकण्ठौ शिखीश्वरौ' इति रत्नमाला । **समारूढेति** । समारूढं अभिवृद्धं शराणां तृणविशेषाणां जन्म उत्पत्तिः यत्र स तादृशः। पक्षे, समारूढः शरजन्मा सुब्रह्मण्यः यं स तथोक्तः । 'शरजन्मा षडाननः' इत्यमरः । **रजः** धूलिः, रजोगुणश्च । **धृतेति** । जलदाः मेघाः । करकाः वर्षोपलाः । पक्षे, जलं ददातीति जलदः जलाहारक इत्यर्थः, तादृशः करकः कमण्डलुः धृतः येन स तादृशः । 'वर्षोपलस्तु करका' 'कमण्डलौ च करकः' इत्यमरः । **तरणयः** नौकाः, सूर्याश्च । 'तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः' इति हैमः । **विभ्रमः** विशेषेण

निरुपद्रवकाननप्रदेश इव घनोत्सेकितसारङ्गः, रेवतीकरपल्लव इव हलिधृतिकरः, लङ्केश्वर इव समेघनादः, विन्ध्य इव घनश्यामः, युवतिजन इव पीनपयोधरः समाजगाम वर्षासमयः ।

विभिन्नमेघनीलोत्पलकाननीले क्रीडासरसीव नभसि स्मरस्य कनकरत्ननौकेव, जलदकाललक्ष्मीमातङ्गकन्यानर्तन-

---

भ्रमणं विलासश्च । **घनेति** । घनेन मेघेन उत्सेकिताः मत्ताः कृताः सारङ्गाः चातकाः यत्र स तादृशः । पक्षे घनं अधिकं यथा तथा, उत्सेकिताः सारङ्गाः हरिणाः यत्र सः । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इत्यमरः । **रेवती** बलरामस्य पत्नी । 'रेवती हलिपत्न्यां स्यात्ताराभिन्मातृभेदयोः' इति मेदिनी । **हलीति** । हलिनः हलविशिष्टाः कर्षकाः, हली हलायुधो बलरामश्च । धृतिः संतोषः धैर्यं वा । 'हली कृषकसीरिणोः' 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः । **मेघनादः** मेघगर्जितम्, तदाख्यो रावणपुत्रश्च यस्य इन्द्रजिदिति नामान्तरम् । **घनेति** । घनैः मेघैः श्यामः । उभयत्र तुल्यमिदम् । विन्ध्यपक्षे घनवत् घनं निबिडं यथा तथा वा श्याम इति वा । **पयोधरः** मेघः कुचश्च ।

**विभिन्नेति** । एतादृशी इन्द्रधनुर्लता रराजेति संबन्धः । विभिन्नानि मेघा एव नीलोत्पलकाननानि तैः नीले । **जलदेति** । जलदकाललक्ष्मीः वर्षाकालशोभैव मातङ्गकन्या चाण्डालकुमारी तस्याः नर्तनरज्जुः डोलोपयोगिनी रज्जुः रज्जुमयी डोलेति यावत् । 'कन्या सैव नर्तकी तस्याः रज्जुः समाकर्षणरज्जुः । चण्डालकन्या रज्जुमवलम्ब्य नृत्यति ।' इति शिवरामः ।

रज्जुरिव, नभःसौधतोरणरत्नमालिकेव, प्रवसता निदाघेन दिवः पयोधरे स्मरणाय दत्ता नखपदावलिरिव, गगनलक्ष्मीबन्धुररशनामालेव, नभोमन्दारसुन्दरकलिकेव, रतिनखमार्जनरत्नशलाकेव, रत्नमयी विलासयष्टिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज ।

अतितृष्णावेगपीतजलनिधिजलशङ्खमालां बलाकाच्छलादुद्वमन्निवादृश्यत जलधरनिकरः । पीतहरितैः कृष्णकेदारिका-

---

'मातङ्गः श्वपचे गजे' इति मेदिनी । **तोरणं** बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । **प्रवसतेत्यादि** । प्रवसता देशान्तरं गच्छता । अत्र निदाघदिवोः पुंलिङ्गस्त्रीलिङ्गाभ्यां पयोधरशब्दश्लेषेण नायकनायिकाव्यवहारप्रतीतेः समासोक्तिः । तदुपजीविनी च नखपदावलित्वोत्प्रेक्षेति तयोः संकरः । नखपदावलिः नखक्षतपङ्क्तिः । 'चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत्पराभवम् । रागायतनसंस्मारि यदि न स्यान्नखक्षतम् ।' इति काञ्चीनाथः । 'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।' इति कश्चित्कविः । **बन्धुरा** रम्या । 'बन्धूरबन्धुरौ रम्ये' इति विश्वः । **रशना** काञ्ची । **यष्टिः** दण्डः । 'रत्नशुक्तिरिव, विलासयष्टिरिव' इत्यपि पाठः ।

**अतितृष्णेति** । तृष्णा पिपासा, स्पृहा च । अतिपिपासाकुलो हि जलेन सह तत्स्थितं तृणादिकमप्यन्तर्निगिरति । अत्याशया सुतरां भुञ्जानोऽपि, गुरुभूतोदरोऽपरिजीर्णभुक्तपदार्थश्च सन्वमतीति लोकस्थितिः । एतदभिप्रायेणैवात्र तृष्णापदं प्रयुक्तम् । 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः । **बलाकाः** बिसकण्ठिकाः । सापह्नवोत्प्रेक्षा । **पीतेति** । कृष्णाः सस्यसमृद्ध्या श्यामलाः या केदारिकाः अल्पानि क्षेत्राणि तान्येव कोष्ठिकाः

कोष्ठिकासु समुत्पतद्भिर्दर्दुरशिशुकैर्जातुषैर्नयद्यूतैरिव चिक्रीड विद्युता समं घनकालः । रविदीपकज्जलितमेघनिकषोपले मेघसमयस्वर्णकारकषितस्वर्णरेखेव तडिदशोभत । विरहिणां हृदयं विदारयितुं कृतं करपत्रमिव कुसुमायुधस्य केतकीपुष्पमभासत । जलददारुणि लोलतडिल्लताकरपत्रदारिते पवनवेगनिर्धूताश्चूर्ण-

---

अक्षफलकस्थकोष्ठाः 'कट्टम्' इति द्राविडभाषायां प्रसिद्धाः तासु । समुत्पतद्भिः उत्प्लुत्योत्प्लुत्य गच्छद्भिः । पीतहरितैः गौरवर्णैः पालाशवर्णैश्च । दर्दुरशिशुकैः मण्डूकशिशुभिः करणैः । घनकालः वर्षाकालः । विद्युता समम् । जातुषैः जतुनो विकारैः जतुनिर्मितैरित्यर्थः । 'त्रपुजतुनोः षुक्' इति विकारार्थे अण्प्रत्ययः षुगागमश्च । नयद्यूतैः नयाख्यद्यूतविशेषसाधनैरक्षैरिव । चिक्रीड क्रीडितवान् । द्यूतशब्दः तत्साधनाक्षलाक्षणिकः । 'नयो नीतौ द्यूतभेदे' इति रत्नमाला । 'नयो युद्धनीतिः । तच्छिक्षकैः द्यूतैः चतुरङ्गैः चतुरङ्गसाधनेषु लक्षणा । नयद्यूतसाधनभूतैर्हस्त्यश्वादिभिरिव समुत्पतद्भिः' इति शिवरामः । 'जातुषदुरोदरैरिव...नयद्यूतैरिव' इति पाठः, 'जातुषाः जतुनिर्मितानि, दुरोदराः द्यूतसाधनानि । नयद्यूतैः हरितवर्णद्यूतैः । नयो नीत्यां शष्पवर्णे इति कोशः' इति टिप्पणी च क्वचित्समुपलभ्यते । **रवीति** । रविनैव दीपेन कज्जलिते श्यामलिते मेघे एव निकषोपले स्वर्णवर्णपरीक्षापाषाणे । स्वर्णरेखायाः स्फुटविभासाय निकषाश्मा श्यामीक्रियत इति प्रसिद्धम् । **करपत्रं** क्रकचः । 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । 'क्रकचच्छदम्' इति पाठे, क्रकचच्छदम् केतकीकुसुममिति व्याख्येयम् । 'द्रोणीदलं सूचिपुष्पं जम्बालं क्रकचच्छदम्' इति हारावली । 'क्रूरकैतकच्छदम्' इति पाठस्तु चिन्त्यः । **दारु** काष्ठम् ।

निकरा इव जलकणा बभुः । विच्छिन्नदिग्वधूहारमुक्तानिकरा इव खरपवनवेगभ्रमितघनघरट्टघट्टनसंचूर्णिततारानिकरा इव त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करका व्यराजन्त । नवशाद्वलं सेन्द्रगोपं महीमहिलायाः शुकाङ्ग-श्यामलं लाक्षारसाङ्कितं स्तनोत्तरीयमिवालक्ष्यत ।

मेघकुम्भसलिलैः पृथिवीनायिकां स्नपयित्वा प्रावृट्चेटि-कायां गतायां स्वच्छमम्बरं दर्शयन्ती शरच्चेटिका समाजगाम ।

अनन्तरमखञ्जखञ्जरीटे अकुञ्चितक्रौञ्चसंचारे, निर्भ-

---

**विच्छिन्नः** त्रुटितः । **खरेति** । खरपवनस्य चण्डवातस्य वेगेन भ्रमितः यः घन एव घरट्टः तण्डुलगोधूमादिचूर्णीकरणसाधनीभूतः पाषाणमयः सक्तुपेषण्याख्यो यन्त्रविशेषः; यस्य द्राविडभाषायां (एन्द्रम्) इति व्यवहारः । 'प्रातिहट्टपथे घरट्टजात्' इति नैषधे । घट्टनं चूर्णनाय यन्त्र-भ्रमणम् । **प्रस्थानेति** । 'अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः' इति कालिदासः । **नवेति** । शाद्वलं नवतृणश्यामलं स्थलम् । शादाः बालतृणानि अस्मिन् सन्तीति विग्रहः । 'नडशादाड्ड्वलच् ।' **इन्द्र-गोपाः** रक्तवर्णाः कीटविशेषाः । 'हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभे-र्निपतद्भिरङ्कितम् । च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनां-शुकम् । भवतु आदास्ये तावत् । (परिक्रम्यावलोक्य च सास्रम्) कथं सेन्द्रगोपं नवशाद्वलमिदम्' इति विक्रमोर्वशीये ।

**प्रावृट्** वर्षाकालः । **अम्बरं** वस्त्रम् , आकाशं च ।

**अनन्तरमिति** । अनन्तरं एतादृशे शरत्समयारम्भे विजृम्भमाणे

रभरद्वाजद्विजवाचाटविटपिविटपे, पटुतरप्रभप्रभाते, उद्भ्रान्तशुककुलकलकलसंकुलकलमकेदारे, प्रवेशितवेशराजहंसे, कंसारातिदेहद्युतिद्युतले, हंसकुलतुलितजरज्जलमुचि, सान्द्रीकृतेन्दुमहसि, गामुकजनमृदितमधुतृणवीरुधि, सरससारसरसित-

---

सति कन्दर्पकेतुः पुत्रिकां पस्पर्शेत्यन्वयः । खञ्जाः गतिविकलाः ते न भवन्तीति **अखञ्जाः** स्वेच्छासंचारिणः । खञ्जरीटाः खञ्जनपक्षिणः । **अकुञ्चितः** अप्रतिबद्धः । क्रौञ्चाः पक्षिभेदाः । **भरद्वाजद्विजाः** व्याघ्राटपक्षिणः । **पट्विति** । पटुप्रभं स्फुटकान्ति प्रकाशमानमित्यर्थः प्रभातं अहर्मुखं यत्र तस्मिन् । **कलमकेदारः** शालिक्षेत्रम् । **प्रवेशितेति** । वेशः गृहः वर्षाकाले परित्यक्तं स्वस्वपूर्वस्थानमित्यर्थः । 'वेशो वेश्यागृहे गेहे' इति हैमः । 'प्रवेशितावेश' इति पाठमभ्युपगम्य, 'आवेशः स्थानम्' इति केचित् । 'आवेशिकाः आगन्तवः' इति शिवरामः । **कंसारातिः** श्रीकृष्णः । **तुलिताः** उपमिताः । **जलमुचः** मेघाः । **इन्दुमहांसि** चन्द्रकिरणाः । **गामुकेति** । गामुकाः गन्तारः पथिका इत्यर्थः तैः मृदिता भग्नाः मधुतृणवीरुधः लतावद्दीर्घा इक्षुकाण्डाः यस्मिन् तथोक्ते । मृदिताः प्रहताः मधुतृणानां वीरुधः गुल्माः यत्रेति वा । गामुके 'लषपत—' इति उकञ् । 'इक्षुः खङ्गदलो मधुः । तस्मिन्मधुतृणं भेदाः पुण्ड्रकान्तारकादयः' इति बाणः । 'वीरुधौ गुल्मगुल्मिन्यौ' इति रत्नमाला । 'वीरुत्स्त्री गुल्मवाटयोरिति कोशः' इति टिप्पणी । 'कामुकजनमुदित' इति ग्रन्थाक्षरमुद्रितपाठः । 'सान्द्रीकृतेन्द्रमहकामुकमुदिमधुरमधुतृणवीरुधि' इति पाठादरेण, 'इन्द्रमहकामुकानां शुनाम्' इति शिवरामः। **सरसेति** । सरसानां सतोषाणां सारसानां चक्रवाकाणां हंसानां वा

सारकासारे, कशेरुकन्दलुब्धपोत्रिपोत्रोत्खातसरस्तटभागे, चकितचातके, विरलवारिदे, तारतरतारके, वारुणीतिलकचन्द्रमसि, स्वादुतरसलिले, स्फुरितशफरकबलननिभृतबकालिके, मूकमण्डूकमण्डले, संकोचितकञ्चुकिनि, काञ्चनच्छेदगौरगोधूमशालिशालिनि, उत्क्रोशदुत्क्रोशे, सुरभिसौगन्धिकगन्धहारिहरिणाश्वे, दरदलितकुमुदामोदिनि, निर्गलितबर्हबर्हिणि, कूजत्कोयष्टिके, धृतधृतिधार्तराष्ट्रे, कलमगोपिकागीताकर्णनसुखितमृगयूथे, विसूत्रितशतमखधनुषि, स्मेरकाश्मीररजःपिञ्जरितदशदिशि, विकस्वरकमले, बन्धूकबान्धवे शरत्समयारम्भे विजृम्भमाणे, कन्दर्पकेतुस्तत इतः परिभ्रमन् कांचिच्छिलाम-

---

रसितैः कूजितैः साराः श्रेष्ठाः कासाराः सरांसि यस्मिन् तथोक्ते । कशेरुः मुस्ता । **पोत्री** वराहः । **चकितः** वित्रस्तः । चातकानां वर्षाकाले हि तोषः । **तारतराः** अत्यन्तविशुद्धाः । मुक्ताविशुद्धिवाचकस्य तारशब्दस्य केवलशुद्धे प्रयोगः । तारतराः अत्यधिका वा । **वारुणीति** । वारुणी पश्चिमा दिक् । तदा चन्द्रः स्फुटं प्रकाशत इति भावः । वारुणी सुरा तस्याः प्रतिमारूपेण चन्द्रो भूषणं भवतीति केचित् । **कञ्चुकिनः** सर्पाः । **छेदाः** खण्डाः । **शालयः** कलमाः । **उत्क्रोशन्तः** कूजन्तः । **सौगन्धिकं** कल्हारम् । **हरिणाश्वः** वायुः । 'पृषदश्वो गन्धवहः' इत्यमरः । **दरं** ईषत् । **बर्हाणि** मयूरपिच्छानि । **बर्हिणः** मयूराः । **कोयष्टिकाः** टिट्टिभकाः । **धृतिः** तोषः । धार्तराष्ट्राः हंसविशेषाः । **कलमगोपिकाः** शालिरक्षिकाः स्त्रियः । **विसूत्रितं** विच्छिन्नम् । **स्मेरं** विकसितम् । 'स्मेरं

यीं पुत्रिकां दृष्ट्वा, मम प्रियानुकारिणीति करेण पस्पर्श ।

अथ सा स्पृष्टमात्रैव शिलाभावमुत्सृज्य वासवदत्तास्वरूपं प्रपेदे । तामवलोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुदृढमालिङ्गय, 'प्रिये वासवदत्ते किमेतत्' इति पप्रच्छ ।

सा तु दीर्घमुष्णं च निःश्वस्य प्रत्युवाच—'आर्यपुत्र अपुण्याया मन्दभाग्याया मम कृते महाभागो भवान् उत्सृष्टराज्य एकाकी परिभ्रमन्प्राकृतजन इव अवाङ्मनसगोचरं दुःखमनुबभूव । उपवासादिना तृषातुरे भवति निद्राश्रान्ते प्रथमप्रबुद्धाहं भवतः फलमूलादिकमाहरिष्यामीति विचिन्त्य फलाद्यन्वेषणाय वने नल्वमात्रमगच्छम् ।

अथ क्षणेन तरुगुल्मान्तरितं सेनानिवेशं दृष्ट्वा, 'किमयं

---

विनिद्रमुन्निद्रविमुद्रहसितानि च' इति हेमचन्द्रः । **पुत्रिकां** प्रतिमाम् ।

**एकाकी** असहायः । 'एकादाकिनिच्चासहाये ।' **अवाङ्मनसेति** । वाचो मनसश्चाविषयमित्यर्थः । 'अचतुर—' इति सूत्रेण वाङ्मनसशब्दो निपातितः । अनुबभूवेत्यत्र परोक्षे लिट्, 'शेषे प्रथमः' इति प्रथमपुरुषः । **तृषा** पिपासया । 'उदन्या तु पिपासा तृट्' इत्यमरः । **आतुरे** ससंकटे । आहरिष्यामि संपादयिष्यामि । **नल्वेति** । नल्वप्रमाणकं देशम् । प्रमाणे मात्रच् । अत्यन्तसंयोगे अध्वनो द्वितीया । 'नल्वः किष्कुचतुःशतम्' 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः ।

**अथेति** । अथ किरातसेनापतिर्धावति स्मेति संबन्धः । **अन्त**-

ममाकर्षणाय तातव्यूहः समायातः । आहोस्विदार्यपुत्रव्यूहः' इति चिन्तयन्तीं मां चारकथितोदन्तो दूरात्किरातसेनापतिर्धावति स्म । ततोऽन्यः किरातसेनापतिस्तादृश एव तथाभूतया सेनयान्वितो मृगयां गतः, सोऽपि तच्छ्रुत्वा धावति स्म ।

अथैकामिषलुब्धयोर्गृध्रयोरिव तयोर्युद्धमासीत् ।

ततः प्रवृत्तशरासारदुर्दिनस्थगितदिनकरकिरणे, रणकर्मविशारदद्विरदकरदूरोत्क्षिप्तखड्गधरसुभटाश्लिष्यमाणविद्याधरविभ्रमे,

---

रितं तिरोहितम् । **निवेशं** शिबिरम् । 'निवेशः शिबिरम्' इत्यमरः । **आकर्षणं** बलादाकृष्य नयनम् । **व्यूहः** सैन्यविन्यासः 'व्यूहः स्याद्बलविन्यासे वृन्दे निर्माणतर्कयोः' इति विश्वः । **चारः** गूढपुरुषः । **मृगया** आखेटः । 'आखेटो मृगया स्त्रियाम्' इत्यमरः ।

**एकामिषं** एकं भोग्यवस्तु, एकं मांसं च । 'आमिषं पुंनपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च' इति मेदिनी । 'एकामिषप्रभवमेव सहोदराणामुज्जृम्भते जगति वैरमिति प्रसिद्धम्' इति कृष्णमिश्रः ।

**प्रवृत्तेति** । शराणां बाणानां आसारः वर्ष एव शराणां जलानां आसारः धारासंपातः, तेन जातं यत् दुर्दिनं ध्वान्तम् । जलदध्वान्तवाचिनो दुर्दिनशब्दस्य ध्वान्तमात्रेऽत्र प्रयोगः । 'शरस्तु तेजने बाणे दध्यग्रे ना शरं जले' इति विश्वः । **रणेति** । विशारदः समर्थः । करः शुण्डादण्डः । आश्लिष्यमाणः आश्रीयमाणः । विभ्रमः विलासः विशिष्टो भ्रमो वा । विद्याधराणां सदा खड्गधारित्वादत्रापि सुभटानां खड्गधरत्वविशेषणम् । भ्रान्ति-

समरदर्शनसंचरदनेकनभश्चरचारणरचितचक्रवाले, चरच्चा-रुभटखङ्गखण्डितद्विपपदसमाप्तपिशाचिकाकर्णोलूखलाभरणे, कौतुकाकृष्टजनकृतवदननान्दीके, कान्दिशीकभीरुणि, प्रस्कन्नक्लीबजने, रणोद्यतजितकाशिनि रणखले, सृगालिकासृगाल-प्रार्थनीयेष्वामिषपिण्डेष्विव जिह्मगदष्टेष्विव श्वित्रदुर्भगेष्विव शरीरेष्वनास्थां कलयन्तः, समं द्विषतां धनुषां च जीवाकर्षणं

---

मानलंकारः । 'विशारदकरदूरोत्क्षिप्तखड्गधारादलित...विद्याधरीविभ्रमे' इति क्वचित्पाठः । **चक्रवालं** मण्डलाकारास्थितिः । 'चक्रवालं तु मण्डलम्' इत्यमरः । 'चारणचरणप्रकरविरचिततोरणचक्रवाले' इति क्वचित्पाठः । **चरदिति** । चरतां चारुभटानां खड्गैः खण्डितैः द्विपानां गजानां पदैः पादैः समाप्तानि सम्यक् संपादितानि पिशाचिकानां कर्णेषु उलूखलाभरणानि उलूखलाकाराणि उलूखलगुरुकाणि वा भूषणानि यत्र तस्मिन् । 'ताटङ्कः स्यादुलूखलमिति कोशः' इति प्राचीनटिप्पणी । **वदननान्दी** मुखध्वनिः । नान्दी नाम मङ्गलवाद्यविशेषः । 'जनसमुद्वलन्नान्दीके' इति क्वचित्पाठः । 'समुत्पतदतिनिनदनान्दीके' इति पाठं स्वीकृत्य 'निनद एव नान्दी नाटकादौ प्रयुज्यमानः काव्यार्थसूचकः श्लोको यत्र' इत्याह शिवरामः । **कान्दिशीकाः** भयद्रुताः । **प्रस्कन्नाः** पतिताः । 'प्रस्कन्नः पतितः समौ' इति हेमचन्द्रः । क्लीबाः अधीराः । **जितकाशिनः** जयशालिनः । खलशब्दो धान्यादिमर्दनस्थलवाची । **जिह्मगाः** सर्पाः । 'जिह्मगः पवनाशनः' इत्यमरः । 'त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता' इति रघुः । **श्वित्रं** श्वेतकुष्ठं नाम रोगः । 'स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' इति दण्डी । **अनास्थां** अना-

योधाश्चक्रुः ।

तत्र त्यागिन इव दानवन्तो मार्गणसंपातं सहन्तः, समृद्धविलासिन इव शृङ्गारोपशोभिताः सहेमकक्ष्याश्च, सदारामा इव कदलीराजिताः सद्विजाश्च, निशानिवहा इव नक्षत्रमालोपशोभिताः, शरद्दिवसा इव समुल्लसत्पद्मा महामृगा बभुः ।

---

दरम् । **समं** एककालम् । **जीवेति** । जीवस्य जीवितस्य आकर्षणं अपनयनम्, जीवायाः मौर्व्याः आकर्षणं आरोपणं च । 'जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि । जीवितेऽपि च जीवा तु वचायां धनुषो गुणे ।' इति हैमः । अक्रमातिशयोक्तिः । 'अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः' इति तल्लक्षणम् ।

**दानं** मदजलम्, वितरणं च । **मार्गणाः** बाणाः, याचकाश्च । 'मार्गणस्तु शरेऽर्थिनि' इति हैमः । **सहन्त इति** । 'षह मर्षणे' इति चौरादिकस्य आधृषीयत्वेन णिजभावे परस्मैपदम् । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' इति भल्लटः । **शृङ्गारः** गजमण्डनम्, आद्यो रसः सुरतं वा । **कक्ष्या** गजमध्यबन्धनरज्जुः, काञ्ची च । 'कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने' इति मेदिनी । **सदारामाः** श्रेष्ठानि उपवनानि । **कदली** पताका, रम्भावृक्षश्च । 'रम्भावृक्षे च कदली पताकामृगभेदयोः' इति मेदिनी । **द्विजाः** दन्ताः, पक्षिणश्च । 'द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना' इति मेदिनी । **नक्षत्रमाला** तारकापङ्क्तिः, सप्तविंशत्या मौक्तिकैर्ग्रथितो हारश्च । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । 'अनङ्गवारणशिरोनक्षत्रमालायमानेन' इति बाणः । **पद्मानि** वयोविशेषसूचकाः बिन्दवः,

उत्कुपिता इव क्षमां मुञ्चन्तः, पयोधय इवावर्तशोभिनः सोर्मयश्च, उद्यानोद्देशा इव समल्लिकाक्षाः, कुलालगृहा इव अभिनवभाण्डभारिणः, रत्नाकरा इव सदेवमणयः, लेखा इव सेन्द्रायुधवृद्धयः, क्षीबा इव पानभूषितास्तुरंगमा विरेजुः ।

कर्णाभ्यां श्रुतपरापवादाभ्याम्, खलोदयसाधुक्षयसाक्षिभ्यामक्षिभ्याम्, अस्थानेऽपि नमता मूर्ध्ना, कीर्तयता चाकी-

---

कमलानि च । 'बिन्दुजालं पुनः पद्मम्' इति गजप्रकरणे हेमचन्द्रः । **महामृगाः** गजाः । 'हस्ती महामृगः पीलुः' इति त्रिकाण्डशेषः ।

**क्षमा** भूमिः, क्षान्तिश्च । **आवर्तः** चक्राकारो रोमसंनिवेशः, अम्भसां भ्रमश्च । **ऊर्मिः** वेगः, वीचिश्च । 'ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्राकाश्यवीचिषु' इति हैमः । 'पङ्क्तीकृतानामश्वानां नमनोन्नमनादिभिः । अतिवेगसमायुक्ता गतिरूर्मिरुदाहृतेति अश्वशास्त्रे' इति प्राचीनटिप्पणी । **मल्लिकाक्षाः** अश्वविशेषाः । पक्षे मल्लिकाः, अक्षवृक्षाश्च । यद्वा मल्लिकाक्षाः हंसभेदाः । 'मल्लिकाक्षः सितैर्नेत्रैः स्याद्वाजीन्द्रायुधोऽसितैः ।' 'मल्लिकाक्षास्तु मलिनैः' इति अश्वहंसप्रकरणयोर्हेमचन्द्रः । **भाण्डं** अश्वभूषणम्, मृत्पात्रं च । 'भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः' इति मेदिनी । **देवमणिः** गलदेशस्थ आवर्तः । कौस्तुभश्च । 'अथ देवमणिर्भर्गेऽश्वावर्ते कौस्तुभे च ना' इति मेदिनी । **लेखाः** देवाः । **इन्द्रायुधाः** अश्वभेदाः, इन्द्रायुधं वज्रं च । **क्षीबाः** मत्ताः । **पानेति** । पानं रक्षणं, पानः रक्षको वा । पक्षे पानभुवि मद्यपानस्थले उषिताः लुठन्तः । 'पानं पीतिभाजनरक्षणे' इति मेदिनी ।

र्तनीयान्यास्येन च, वियुक्तोऽहं दिष्ट्येति हर्षादिव चिरं ननर्त कबन्धः ।

ततः परिहासकेनेव चक्षुः पिदधता, परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता, सोन्मादेनेव वायुवेगाविक्षिप्तेन, पलितंकरणेनेव सुरयोषिताम्, अन्धंकरणेनेव योधानाम्, तिमिरेणेव समरप्रदोषस्य, पतितेनेव विमुक्तगोत्रेण, कुनृपतिनेव नक्षत्रपथगामिना, कलिङ्गेनेव कृतधूम्यारुचिना, राजसेनेव व्यवहितसत्त्वेन, अविनीतेनेव समुद्धतेन, असज्जनेनेव पिहितसत्पथेन रणजेन रजोजातेन विजजृम्भे ।

---

**तत इति** । ततः एतादृशेन रजोजातेन धूलिभरेण । विजजृम्भे अभिवृद्धमित्यन्वयः । भावे लिट् । **पिदधता** आच्छादयता । **वृत्तिः** व्यापारः । **उन्मादः** चित्तविभ्रमः । स च वातिकरोगविशेष इति स्पष्टमायुर्वेदे । **वायुः** पवनः, एकत्र बाह्यः, अपरत्र आन्तरः । **पलितंकरणेनेति** । अपलितं पलितं कुर्वन्त्यनेनेति पलितंकरणं तेन 'आढ्यसुभग—' इति कृञः करणे ख्युन् । एवमेवान्धंकरणेनेत्यत्रापि । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । **प्रदोषः** रजनीमुखम् । **गोत्रा** भूमिः । गोत्रं वंशश्च । **नक्षत्रेति** । नक्षत्रपथः आकाशम् । पक्षे, क्षत्रपथगामी क्षत्रियाचारशाली न भवतीति तेन । **कलिङ्गः** धूम्याटो नाम पक्षिविशेषः । **धूम्या** धूमसमूहः । 'पाशादिभ्यो यः' इति समूहार्थे यः । उभयत्र तुल्यम् । **राजसः** रजोगुणप्रधानः । **सत्त्वं** प्राणी, सत्त्वगुणश्च । **समुद्धतेन** ऊर्ध्वप्रसारितेन, गर्विष्ठेन च । **सत्पथः** नक्षत्रमार्ग आकाशम्, सज्जनमार्गश्च ।

अनन्तरं च नारायण इव कश्चिन्नरकच्छेदमकार्षीत् । कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् । कश्चित्क्षपणक इव कटावृतविग्रहोऽभवत् । कश्चित्सुरापद्विज इव पपात । कश्चित्सुयोधन इव शङ्कितोरुभङ्गः सरोजलं विवेश । कश्चित् शरतल्पशय्यागतो भीष्म इव गतायुश्चिरं श्वसन्नासीत् । कश्चित्कर्ण इव विक्लवीकृताङ्गः शक्तिमोक्षमकरोत् । कश्चिद्राघव इव रावणवधमकरोत् ।

ततो विध्वस्तध्वजपटं पतत्पताकं व्यूहचारिभटकम्पितखड्गधेनुकं तत्समस्तमुभयं मिथो जगाम हननं सैन्यम् ।

---

**नरकं** नरस्य मनुष्यस्य कं शिरः, पक्षे, नरकः नरकासुरो भूमेः पुत्रः, निरयो वा । 'कं शिरोम्बुनोः' इत्यमरः । **क्षपितेति** । क्षपितं नाशितं श्रुतिः श्रवणं वचनं वदनं दर्शनं चक्षुश्च यस्य सः । पक्षे, श्रुतिवचनं वेदवाक्यं दर्शनं शास्त्रं सिद्धान्तो वा । **क्षपणकः** जैनः । **कटः** गजगण्डः, शवो वा । पक्षे कटः काशादिरचितरज्जुः, अतिशयः, ओषधी वा । **सुरापः** मद्यपायी । **शङ्कितेति** । शङ्कितः उरुः महान् भङ्गः पराभवः येन सः । पक्षे, ऊर्वोः सक्थ्नोः भङ्गः विदलनम् । **तल्पं** शयनम् । प्रसिद्धेयं कथा भारते । **कर्णः** राधेयः । **अङ्गं** अवयवः, अङ्गाः कर्णपालितोऽङ्गदेशश्च । **शक्तिः** उत्साहः, बलं वा । पक्षे इन्द्राद्गृहीतं शक्त्याख्यमायुधम् । **रावणः** रावयतीति व्युत्पत्त्या सर्वानपि क्रन्दयन्कश्चिद्वीरः । पक्षे, पौलस्त्यः ।

**पताका** वैजयन्ती । **व्यूहः** बलविन्यासः । **खड्गधेनुः** कृपाणी ।

ततश्च, यस्याश्रमः, तेन मुनिना पुष्पादिकमादायागतेन योगदृशा प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्न इति कुपितेन 'शिलामयी पुत्रिका भव' इति शप्तास्म्यहम् । ततः क्षणेनैवेयं वराकी बहुदुःखमनुभवतीत्यनुग्रहादार्यपुत्रकरुणया च स मुनिर्याच्यमान आर्यपुत्रहस्तस्पर्शावधिकं शापमकरोत् ।

ततः कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन मकरन्देन तया वासवदत्तया च समं स्वपुरं गत्वा हृदयाभिलषितानि सुरलोकदुर्लभानि सुखानि ताभ्यां सहानुभवन् कालमनेकं निनाय ॥

प्रत्यक्षरश्लेषमयप्रपञ्च-
विन्यासवैदग्ध्यनिधिं प्रबन्धम् ।

---

'क्षुरी छुरी कृपाणिका । शस्त्र्यसिधेनुपुत्र्यौ च' इति हेमचन्द्रः । **मिथः** अन्योन्यम् । 'मिथोऽन्योन्ये रहोऽर्थे च' इत्यव्ययप्रकरणे मेदिनी ।

**योगदृशा** ध्यानचक्षुषा । **प्रतिपन्नः** ज्ञातः । **वराकी** शोचनीया । 'वराकः शोच्यरणयोः' इति हैमः । 'जल्पभिक्ष—' इति त्रृङः षाकन् । षित्वात् ङीष् ।

**समं** सह । **स्वपुरं** कन्दर्पकेतोर्नगरम् । 'पाटलीपुत्रम्' इति पाठः क्वचिद्दृश्यते, स चाशुद्धः ।

**प्रत्यक्षरेति** । सरस्वत्या वाग्देवतया दत्तः वररूपः प्रसादः अनुग्रहः यस्य स तथोक्तः । सुजनैकबन्धुः सज्जनानां मुख्यबन्धुः, सज्जनानामेव बन्धुर्वा । सुबन्धुः तन्नामा कविः । प्रत्यक्षरं अक्षरे अक्षरे यः श्लेषः

सरस्वतीदत्तवरप्रसाद-
श्चक्रे सुबन्धुः सुजनैकबन्धुः ॥

**इति वासवदत्ता समाप्ता ॥**

---

'नानार्थसंश्रयः श्लेषः' इति लक्षितः सभङ्गाभङ्गभेदेन द्विविधः तेन प्रचुरः यः प्रपञ्चः विस्तरः तस्य विन्यासे विरचनायां यत् वैदग्ध्यं सामर्थ्यं तस्य निधिं स्थानभूतम् । प्रबन्धं वासवदत्ताख्यं ग्रन्थम् । चक्रे करोति स्म । अनवधानेऽपि स्वस्य ईदृशग्रन्थनिर्माणं सुशकमिति सूचनाय स्वस्मिन्नन्यत्वबुद्धिमभिनीय चित्तविक्षेपादिना पारोक्ष्यं वा विवक्षित्वा 'चक्रे' इति लिट्प्रथमपुरुषप्रयोगः । 'चक्रे सुबन्धुः' इति प्रामादिकमिति तु वैयाकरणाः । 'प्रगतः सादोऽस्येति प्रसादः । सरस्वतीदत्तेन वरेणाभीष्टेन प्रसादो विगतकार्श्यः स्वीयाद्भुतोक्तिविभावनानन्दतुन्दिलत्वादित्यर्थः । यद्वा, सरस्वतीदत्तवरेण प्रसादः प्रसन्नता सर्वोत्कृष्टा मत्कृतिरिति प्रसन्नताविशिष्टत्वम् यस्य सः' इति शिवरामः । 'श्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः' इति पाठान्तरम् ॥

**इतीति** । इति एवंरूपा । वासवदत्ता वासवदत्ताचरितप्रतिपादको ग्रन्थः । समाप्ता । अत्र वासवदत्तापदं ग्रन्थे औपचारिकं रत्नावल्यादिवत् । 'अधिकृत्य कृते ग्रन्थे' इति विहितस्य प्रत्ययस्य 'लुबाख्यायिकाभ्यः—' इति लोप इति तु न सम्यक् । अस्य प्रबन्धस्य कथात्वेनाख्यायिकात्वाभावात् । 'आख्यायिका कथावत्स्यात्कवेर्वंशादिकीर्तनम्' इत्यादि हि तस्या लक्षणम् । वार्तिके आख्यायिकापदेन गद्यकाव्यसामान्यं विवक्ष्यत इति मते तु लुबत्र सुवच इति सकलं समञ्जसम् ।

श्रीवत्सवंशजनुषा केरलभूपालदत्तबिरुदजुषा ।
वासवदत्ताव्याख्या भव्या श्रीकृष्णसूरिणा रचिता ॥

कोशान्निरीक्ष्य बहुशो बहु शोधयित्वा
सम्यग्विमृश्य मनसा सरसार्थभावम् ।
सौबन्धवस्य वचसोऽनुगुणा नवीना
व्याख्या व्यधायि विपुलार्थविचारचारुः ॥

अस्ततन्द्रमभिवीक्ष्य पुस्तका-
न्याहितादरमलेखि या कृतिः ।
मन्ददृष्टिरशुभाय मा स्म भू-
दस्तु साधु गुरुवीक्षणं परम् ॥

दोषाः स्युः शतशोऽत्र नैव न वयं जानीमहे किंतु नः
शक्यं यद्विशदं न्यरूपि तदिदं यावन्मनीषाबलम् ।
नास्माकं विषयावमर्शसरणौ याथाकथाचत्वधीः
श्रद्धायोग इहाहिते वयमिमे विद्वत्सु तिष्ठामहे ॥

स्पर्धाभारविवेकदूरपिशुनव्यापारवैरायितैः
किं नश्छिन्नमनेकदेशिककृपायत्तात्मसत्तावताम् ।
विद्यावित्तविविक्तसूक्तिविसरप्राप्तप्रतिष्ठाभरै-
र्विद्वद्भिर्विहिताशिषः सहृदयैः साकं प्रमोदामहे ॥

